न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥
द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥

तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथाहि सर्वे तस्यासन्परार्थैकफला गुणाः ॥ २९ ॥

"क्रियार्थोपपदस्य-" इत्यादिना यज्ञसस्याभ्यां चतुर्थी । एवमुभौ संपदो विनिमयेन परस्परमादानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । [ अन्योन्यमेकक्रियासंबन्धो व्यतिहारस्तस्य च विनिमयशब्देनोक्तत्वाद्दधतुरित्यत्र कर्तरि कर्मव्यतिहार इत्यात्मनेपदप्राप्तावपीतरेतरान्योन्योपपदाच्चेति निषेधार्थवाक्यप्रसङ्गाश्च भवति—चा० ]। राजा यज्ञैरिन्द्रलोकमिन्द्रश्चोदकेन भूलोकं पुपोषेत्यर्थः । उक्तं च दण्डनीतौ—" राजा त्वर्थान्समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् " इति । ( इन्द्रोऽपि समयवर्षितया सोऽपि करग्रहणेन महीं च सवर्धयामसतुरर्थात् उभावपि द्रविणविनिमयेन पालयामासतुरित्यर्थः । नतु केवलमयमेव नृपोऽन्येऽप्येव बभूवुरित्यत आह ) ।

२७ राजानोऽन्ये नृपा रक्षितुर्भयेभ्यस्त्रातुस्तस्य राज्ञो यशो नानुययुः किल नानुचक्रुः खलु । [ प्रसिद्धावुत्प्रेक्षायां वा-चा० ] । कुतः । यद्यस्मात्कारणात्तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यो व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता । [अन्येषु राजसु वसुधां रक्षत्सु तस्करता परधनेषु स्थितिं चकार । अस्मिंस्तु परस्व विहाय स्ववाचकं शब्दमेवाश्रयत्—सु० ] । अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः । अथवा । " अत्यन्तासत्यपि ह्यर्थे ज्ञान शब्दः करोति हि " इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतोऽस्तीत्यर्थः । ( अन्ये सहस्रशोऽपि राजानस्तस्य धर्मरतेर्दिलीपस्य धवलयशोभाग्यं न केनापि प्रकारेणानुकर्तुं समर्थाः बभूवुरित्यर्थः ) ।

२८ शिष्टो जनो द्वेष्यः शत्रुरपि । आर्तस्य रोगिण औषधं यथौषधमिव । तस्य संमतोऽनुमत आसीत् । दुष्टो जनः प्रियोऽपि प्रेमास्पदीभूतोऽपि । उरगक्षता सर्पदष्टाङ्गुलीव । " छिन्द्याद्बाहुमपि दुष्टात्मनः " इति न्यायात् । त्याज्य आसीत् । ( तस्य इति कर्तरि षष्ठी ) । तस्य शिष्टः ( हिताहित विशिनष्टि विवेचयतीति शिष्टः ) एव बन्धुर्दुष्ट. ( हितं दूषयतीति दुष्टः ) एव शत्रुरित्यर्थः । तस्य परोपकारित्वमाह—

२९ वेधाः स्रष्टा । " स्रष्टा प्रजापतिर्वेधाः " इत्यमरः । त दिलीपम् । समाधीयतेऽनेनेति समाधिः कारणसामग्री । महाभूतानां यः समाधिस्तेन महाभूतसमाधिना । [ परप्रयोजनघटनैकबुद्धानि पृथिव्यप्तेजोवाय्वाकाशानि तेषां समाधिः सृष्टिकाले नियमविशेषस्तेन-चा० ] । विदधे समर्ज । नूनं ध्रुवम् । इत्युत्प्रेक्षा । तथाहि । तस्य राज्ञः सर्वे गुणा रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनमेवैकं मुख्यं फलं येषां ते तथोक्ता आसन् । महाभूतगुणोपमानेन कारणगुणाः कार्यं संक्रामन्तीति न्यायः सूचितः ।

---

27. No other prince after दिलीप could rival his fame in the art of government; in as much as failing to find its application on other men's riches, theft came to be applied to the term itself *i. e.* retained in the hearing of men.

28. Even an enemy, possessed of estimable qualities was acceptable to him, as is a phial of medicine to a man suffering from disease, whilst a wicked man even if bound to him by ties of affection, he would cut, just as one would amputate a finger bitten by a cobra.

29. Verily the god Brahmâ formed him of the elements of great substances; for like into theirs all his qualities were devoted to the service of others

---

28. B. C. E. Châ. Din. Va. Vija. and Su., दष्टोङ्गुष्ठ इवाहिना for अङ्गुलीवोरगक्षता.

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥
तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१ ॥
कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२ ॥
तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३ ॥

३० स दिलीपः । वेलाः समुद्रकूलानि । " वेला कूलेऽपि वारिधेः " इति विश्वः । ता एव वप्रवलयाः प्राकारवेष्टनानि यस्यास्ताम् । " स्याच्चयो वप्रमस्त्रियाम् । प्राकारो वरणः शालः प्राचीनं प्रान्ततो वृतिः " इत्यमरः । परितः खात परिखा दुर्गवेष्टनम् । " खात खेय तु परिखा " इत्यमरः । " अन्येष्वपि दृश्यते" इत्यत्रापिशब्दात्खनतेर्डप्रत्ययः । अपरिखाः परिखाः संपद्यमानाः कृताः परिखीकृताः सागरा यस्यास्ताम् । अभूततद्भावे च्विः । अविद्यमानमन्यस्य राज्ञः शासनं यस्यास्तामनन्यशासनामुर्वीमेकपुरीमिव शशास । अनायासेन शासितवानित्यर्थः । [ एकपुरीमित्यनेन सकलमहीमण्डलीपालनमनायासेन द्योत्यते–चा० ] ।

३१ तस्य राज्ञो मगधवंशे जाता मगधवंशजा । "सप्तम्यां जनेर्डः " इति डप्रत्ययः । एतेनाभिजात्यमुक्तम् । दाक्षिण्यं परच्छन्दानुवर्तनम् । "दक्षिणः सरलोदारपरच्छंदानुवर्तिषु " इति शाश्वतः । तेन रूढं प्रसिद्धम् । तेन नाम्ना । अध्वरस्य यज्ञस्य दक्षिणा दक्षिणाख्या पत्नीव । सुदक्षिणेति प्रसिद्धा पत्न्यासीत् । अत्र श्रुतिः—"यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसः " इति । "दक्षिणाया दाक्षिण्यं नामर्त्विजो दक्षिणत्वप्रापकत्वम् । ते दक्षन्ते दक्षिणा प्रतिगृह्य " इति च ।

३२ वसुधाधिपः ( पृथ्वीपतिः ) अवरोधेऽन्तःपुरवर्गे महति सत्यपि । मनस्विन्या दृढचित्तया [ मानिन्या–चा० ]। पतिचित्तानुवृत्त्यादिनिर्बन्धक्षमयेत्यर्थः । तया सुदक्षिणया लक्ष्म्या चात्मानं कलत्रवन्त भार्यावन्तं मेने । "कलत्रं श्रोणिभार्ययोः " इत्यमरः । वसुधाधिप इत्यनेन वसुधया चेति गम्यते ।

३३ स राजा । आत्मानुरूपायां ( आत्मोचितायां ) तस्याम् । आत्मनो जन्म यस्यासावात्मजन्मा पुत्रः । तस्मिन्समुत्सुकः । ( इष्टार्थोद्युक्त उत्सुकः इत्यमरः ) । यद्वा । आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ समुत्सुकः सन् । " आत्मा वै पुत्रनामासि " इति श्रुतेः । विलम्बित फलं पुत्रप्राप्तिरूपं येषां तैर्मनोरथैः कदा मे पुत्रो भवेदित्याशाभिः कालं निनाय यापयामास । ( अद्य भवति श्वो वा कल्ये इति चिन्तयन् स राजा कालमत्यवाहयत् )

---

30. The sea-beach formed the ramparts of his kingdom and the high seas were its moats, the vast dominions, comprised within these limits, and which were subject to no other rule, he governed as if they were a single city.

31. He had a wife born in the family of the Magadha kings, by name Sudakshinâ, a name celebrated for its nobility, like Dakshina the wife of the sacrifice (a deity presiding over the gifts to officiating priests).

32. Though there was no lack of pretty damsels in his seraglio, it was by reason of his union with this noble princess and also with the goddess of his kingly power, that दिलीप regarded himself as truly married.

33. Anxious to see the birth of a son from this most noble queen who was in every respect worthy of himself, the king passed his painful days with hopes long delayed

30. C. D. and Su., परीषी° for परीखी°. 31. C. °युक्तेन for °रूढेन.

संतानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥
अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दंपती वशिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥
स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

३४ तेन दिलीपेन । संतानोऽर्थः प्रयोजनं यस्य तस्मै संतानार्थाय विधयेऽनुष्ठानाय । स्वभुजादवतारिता । इति कविसमयेनोक्त –चा०] । अवरोपिता जगतो लोकस्य गुर्वी धूर्भारः सचिवेषु ( मन्त्रिषु ) निचिक्षिपे निहिता । ( स खलु संतानकामः विश्वस्तेषु सचिवेषु राज्यभारं निक्षिप्य भार्यां सुदक्षिणां च गृहीत्वारण्याभिमुखं प्रतस्थे ) ।

३५ अथ धुरोऽवतारानन्तरं पुत्रकाम्ययात्मनः पुत्रेच्छया । "काम्यच" इति पुत्रशब्दात्काम्यच्प्रत्ययः । "अ प्रत्ययात्" इति पुत्रकाम्यधातोरकारप्रत्ययः । ततष्टाप् । तया तौ दंपती जायापती । राजदन्तादिषु जायाशब्दस्य दामिति निपातनात्साधुः । प्रयतौ पूतौ विधातारं ब्रह्माणमभ्यर्च्य । "स खलु पुत्रार्थिभिरुपास्यते" इति मान्त्रिकाः । गुरोः कुलगुरोर्वशिष्ठस्याश्रमं जग्मतुः । पुत्रप्राप्त्युपायापेक्षयेति शेषः । ( आत्मार्थे चासृजत्पुत्रान् लोककर्तॄन् पितामहः । विश्वेप्रजानां पतयो येभ्यो लोका विनिःसृताः । विश्वेशं प्रथम नामेत्येवं स राजा संतानार्थं ब्रह्माणं मानसविधिनोपास्य पश्चाद्वशिष्ठाश्रमं जगामेत्यर्थः ) ।

३६ स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तमेकं स्यन्दनं रथम् । प्रावृषि भवः प्रावृषेण्यः । "प्रावृष एण्यः" इत्येण्यप्रत्ययः । तं प्रावृषेण्यं पयोवाहं मेघं विद्युदैरावताविव । [ मेघपृष्ठस्योपरि मेघो यः स ऐरावत उच्यते इति दक्षिणावर्तः । यद्वा । ऐरावतो नभःसचरिष्णुः अतएवाभ्रमातङ्गनामा । शक्रमातङ्गः । विद्युदैरावते इति पाठे त्वैरावतमिन्द्रधनुरित्यत्र पुंनपुंसकयोर्भिन्नलिंगस्यानिष्टत्वादुपमादूषणं चिन्तनीय–चा० ] । आस्थितावारूढौ । जग्मतुरिति पूर्वेण सम्बन्धः । इरा आपः । "इरा भूवाक्सुराप्सु स्यात्" इत्यमरः । इरावान्समुद्रः । तत्र भव ऐरावतोऽभ्रमातङ्गः । "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः । "अभ्रमातङ्गत्वाच्चाभ्रस्थत्वादभ्ररूपत्वात्" इति क्षीरस्वामी । अत एव मेघारोहणं विद्युत्साहचर्यं च घटते । किं च विद्युत ऐरावतसाहचर्यादैरावती संज्ञा । ऐरावतस्य स्त्र्यैरावतीति क्षीरस्वामी । तस्मात्सुष्ठूक्तं विद्युदैरावताविवेति । एकरथारोहणोक्त्या कार्यसिद्धिबीजं दंपत्योरत्यन्तसौमनस्यं सूचयति ।

---

34 In order to perform some ceremony with a view to gain progeny the heavy yoke of the world was taken down by him from his arms and transferred it to his ministers.

35. After having duty worshipped the god Brahmâ with the desire of getting a son, the self-controlled and purified royal couple started for the hermitage of वशिष्ठ ——their venerable spiritual preceptor.

36. They sat side by side on the same car,—which moved on with a deep but agreeable rattle——looking like the divine elephant ऐरावत and the bright Lightning riding together on a dark cloud.

---

34. Châ. and Din. notice महते सुतलाभाय for सन्तानार्थाय विधये; between 34-35 D. C. and E. read:—"गङ्गां भगीरथेनैव पूर्वेषां पावनक्षमाम् । ईप्सिता संततिं न्यस्ता तेन मंत्रिषु कौशला" also supported by Châ. Din. Va. Vija. and Su., (D. E. and Vija. इच्छता for ईप्सिता and कोशला for कौशला.)

36. A. B. E. Châ. din. Va. Vija. and Su., एकस्यन्दनम् for एकं स्यन्दनं; A. and Vija. आश्रितौ for आस्थितौ.

मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३७ ॥
सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥
मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।
षड्जसंवादिनीः केकाद्विधा भिन्नाः शिखण्डिभिः ॥ ३९ ॥

३७ पुनः किंभूतौ दम्पती । आश्रमपीडा मा भून्मास्त्विति हेतोः । "माङि लुङ् इत्याशीरर्थे लुङ्" । "न माङ्योगे" इत्यडागमनिषेधः। परिमेयपुरःसरौ ( परिमेयाः गणनीयाः पुरःसराः अग्रेसराः ययोस्तौ तथोक्तौ ) परिमितपरिचरौ । अनुभावविशेषात्तु तेजोविशेषात् । ( सार्वभौमप्रभावाधिक्याच्च । "अनुभावः प्रभावे स्यान्निश्चये भावबोधके" इति मेदिनी) । सेनापरिवृताविव स्थितौ।( तपोवनवासिनामुपरोधो माभूत् । अत्रैव तावद्रथं स्थापय । यावदवतरामि । विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम इत्येव समार्थः सन्दर्भः ) ।

३८ पुनः कथंभूतौ । सुखः शीतलत्वात्प्रियः स्पर्शो येषां तैः । [ वने शैत्यमांद्यसौरभ्याणि कविसमयविशेषणैः,-चा० ] । शालनिर्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः । "शालः सर्जतरुः स्मृतः" इति शाश्वतः। उत्किरन्ति विक्षिपन्तीत्युत्किराः । "इगुपध-" इत्यादिना किरतेः कप्रत्ययः । पुष्परेणूनामुत्किरास्तैः । [ एतेन सौगन्ध्यमुक्तं—सु० ] । आधूता मांद्यादीषत्कम्पिता वनराजयः [ अरण्यपङ्क्तयः । एतेन मांद्यं । राजिः स्यात् पंक्तिलेखयोरिति विश्वः-चा० ] । यैस्तैर्वातैः सेव्यमानौ ।

३९ रथनेमिस्वनोन्मुखैः ( रथस्य नेमीनां चक्रधाराणां यः स्वनः शब्दः तेनोन्मुखाः तैः तथोक्तैः ) । मेघध्वनिशंकयोन्नमितमुखैरित्यर्थः । शिखण्डिभिः [ शिखण्डिन्यः शिखण्डिनश्च तैर्मयूरमिथुनैः-चा० ] मयूरैः । [ स्त्रीपुंसभेदात् द्विधाभेदेन-चा० ] । द्विधा भिन्नाः ।शुद्धविकृतभेदेनाविष्कृतावस्थायां च्युताच्युतभेदेन वा षड्जो द्विविधः। तस्मादस्यात्केका अपि द्विधा भिन्ना इत्युच्यते । अत एवाह षड्जसंवादिनीरिति । षड्भ्यः स्थानेभ्यो जातः षड्जः । तदुक्तम्— "नासाकण्ठमुरस्तालु जिह्वादन्तांश्च संस्पृशन्। षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः" । स च तन्त्रीकण्ठजन्मा स्वरविशेषः । "निषादर्षभगान्धारषड्जमध्यमधैवताः । पंचमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः" इत्यमरः । षड्जेन संवादिनीः सदृशीः । तदुक्तं मातङ्गेन—"षड्जं मयूरो वदति ( ऋषभं चातको वदेत् )" इति । मनोभिरामा मनसः प्रियाः । के मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरवाण्यः । "केका वाणी मयूरस्य" इत्यमरः । ताः केकाः शृण्वन्तौ । इति श्लोकार्थः ।

---

37. Fearing lest there should be any disturbance to the peace of the hermitage, they took only a limited number of attendants with them, but on account of the dignity and majesty of their personal presence, it seemed as if they had an army about them.

38. The cool air, fragrant with the odorous exudation of शाल trees and surcharged with the pollen-grains of a thousand flowers, fanned them, as they passed through rows of trees, gently shaken by the breeze.

39. How they listened to the music of flights of wild pea-cocks! who, roused by the rattling noise utterred their shrill cries with extended necks,—one party responding to the notes of another —as if in imitation of the notes of the षड्जराग.

37. B. E. Va. Vija. and Su., परिगतौ for परिवृतौ.
38. B.C. Va. Vija. and Su., °उत्करैः for °उत्किरैः. Châ. and Din. also notice °उत्करैः.

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४० ॥
श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥
पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥
सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥

४० विश्रभाददूर समीप यथा भवति तथोज्झित वर्त्म यैस्तेषु । स्यन्दनाबद्धदृष्टिषु स्यन्दने रथे आबद्धासंजिना दृष्टिर्नेत्रं यैस्तेषु । ( ग्रीवाभङ्गाभिराम मुहुरनुपतति स्यदने बद्धदृष्टिरिति समार्थः श्लोकांशः ) । " दृक्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि " इति हलायुधः । कौतुकवशाद्रथासक्तदृष्टिष्वित्यर्थः । मृग्यश्च मृगाश्च मृगाः । " पुमान्स्त्रिया " इत्येकशेषः । तेषां द्वन्द्वेषु मिथुनेषु । " स्त्रीपुंसौमिथुन द्वन्द्वम् " इत्यमरः । परस्पराक्ष्णां सादृश्यं पश्यन्तौ । [ परस्परमिति कर्मव्यतिहारे सर्वनाम्नः समासवच्च बहुलमिति भावः–चा० ] । द्वन्द्वशब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपो दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेत्येवं विवेक्तव्यम् ।

४१ श्रेणीबन्धात्पंक्तिबन्धनाद्धेतोरस्तम्भामाधारस्तंभरहिताम् । तोरणं बहिर्द्वारम् । "तोरणोऽस्त्रीबहिर्द्वारम्" इत्यमरः । तत्र या स्रग्विरच्यते तां तोरणस्रजं [ वन्दनमालां–चा ० ] वितन्वद्भिः ( विस्तारयद्भिः ) । कुर्वद्भिरिवेत्यर्थः । उत्प्रेक्षाव्यंजकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम् । कलनिर्ह्रादैरव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः । करणैः । क्वचिदुन्नमिताननौ ( ऊर्ध्वकृतमुखौ ) । "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः ।

४२ प्रार्थनासिद्धिशंसिनः ( पुत्राभिलाषसिद्धिमनां शंसितुं सूचयितुं शीलमस्य तथोक्तस्य ) अनुकूलत्वादेव मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वाद्गन्तव्यादिगभिमुखत्वात् । [ शुभगंन्धे च शब्दे च सानुकूले च मारुते । प्रस्थिते सर्वकार्याणां सर्वसिद्धिर्ध्रुवा भवेदिति बाल्काव्यः–चा ० ] । तुरगोत्कीर्णैः रजोभिः ( धूलिभिः ) अस्पृष्टा अलकाः ( कुन्तलाः ) देव्याः । वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ । ( "उष्णीषन्तु शिरोवेष्टे किरीटे लक्षणान्तरे " इति मेदिनी ) । "शिरसा वेष्टनशोभिना सुतः " इति वक्ष्यति ।

४३ सरसीषु [ महासरःसु । महान्ति सरांसि सरस्यः इति जिनेन्द्रबुद्धिः–चा ० ] । वीचिविक्षोभशीतलम् ( वीचीनां जलकल्लोलानां विक्षोभश्चलनं तत्राधारभूतानां कमलानां शीतलत्वात् ) अंसंघटनेन शीतलं स्वनिःश्वासमनुकर्तुं शीलमस्येति स्वनिःश्वासानुकारिणम् । एतेनतयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तम् । अरविंदानामामोदम् ( परिमलं ) उपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ।

---

40 How they were delighted to look at the large eyes of the pair of deer, charming like their own, as the animals left the public road and retreated on both sides, from the chariot's path, watching the car with steadfast gaze.

41. How they looked, with upturned eyes, at the flights of सारस cranes, cackling melodiously and forming by their peculiar motion triumphal garlands, suspended in the air.

42. The breeze was favourable to them and betokened the early fulfilment of their desire; and it was so swift that the dust raised by the hoofs of their horses did stick neither on the locks of the queen nor on the coronet of the king.

43. When riding by the side of large lakes, they were delighted to inhale the frangrance of the lotus flowers, resembling their own breath, and wafted by the breeze,—cooled by its contact with the ripples of the water.

---

41. D. C. कलनिह्रादैः. 42. D. C. °सिद्धिशामिनः.

ग्रामेष्वात्मविसृष्टेषु यूपाचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥
हैयंगवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥
काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥
तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥

४४ आत्मविसृष्टेषु स्वदत्तेषु। यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः । यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफलाः यज्वनां विधिनेष्टवताम् । "यज्वा तु विधिनेष्टवान्" इत्यमरः । "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः आशिषः आशीर्वादान् । अर्घः पूजाविधिः। तदर्थं द्रव्यमर्घ्यम्। "पादार्घाभ्यां च" इति यत्प्रत्ययः। "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः । अर्घ्यस्यानुपदमन्वक् । अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकुर्वन्तौ । पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । "अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्" इत्यमरः ।

४५ ह्यस्तनगोदोहोद्भवं घृतं हैयंगवीनम्। ह्यः पूर्वेद्युर्भवम्। "तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्" इत्यमरः । "हैयंगवीनं संज्ञायाम्" इति निपातः। तत्सद्योघृतमादायोपस्थितान्घोषवृद्धान् ( आभीरान् )। "घोष आभीरपल्ली स्यात्" इत्यमरः । वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । 'दुह्याच्' इत्यादिना पृच्छतेर्द्विकर्मकत्वम् । कुलकम् ।

४६ व्रजतोर्गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयोः सुदक्षिणादिलीपयोः । हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव । योगे सति काप्यनिर्वाच्याभिख्या शोभासीत् । "अभिख्या नामशोभयोः" इत्यमरः । "आतश्चोपसर्गे" इत्यङ्प्रत्ययः । चित्रा नक्षत्रविशेषः । शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ।

४७ प्रियं दर्शनं स्वकर्मकं यस्यासौ प्रियदर्शनः । योग्यदर्शनीय इत्यर्थः । भूमिपतिः पत्न्यै तत्तदद्भुतं वस्तु दर्शयँल्लङ्घितमतिवाहितमप्यध्वानं न बुबुधे न ज्ञातवान्। बुधः सौम्य उपमोपमानं यस्येति विग्रहः । [ प्रियदर्शनः अपूर्ववस्तुद्रष्टा बुधश्चन्द्रपुत्रो ग्रहस्तेन तुल्योऽपि न बुबुधे इति विरोधाभासोऽलंकारः—चा० ] । इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैवास्य ज्ञातृत्वसूचनार्थम् ।

---

44. As they approached the villages, previously presented by themselves as gifts to priests who had officiated at sacrificies, of which the yupas at several places were the signs, the latter came forward to welcome them with due homage and to honour them with their benediction. The royal couple reverentially accepted the welcome as well as the benediction.

45. As they passed by the villages of cow-herds, the old men of the villages approached them with newly-made *Ghee* and they enquired of them the names of the wild trees standing on both sides of the road.

46. As they rode on together, dressed in a simple and pure style, how beautiful they looked! —methinks it was like the union, at the approach of spring (when they are relieved from mist), of the moon and of the brilliant and beautiful star called चित्रा.

47. That lord of the earth, of agreeable appearance, who looked like gods, and who was showing to his wife (now) this and (now) that, was not even conscious of the length of the road he had passed.

---

45. B. E. read उपागतान् for उपस्थितान्.

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥
वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥
आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥
सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहंगानामालवालाम्बुपायिनाम् ॥ ५१ ॥

४८ दुष्प्रापयशा दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः । श्रान्तवाहनः ( श्रान्तानि खिन्नानि वाहनानि तुरगा यस्य सः ) दूरोपगमनात्क्लान्तयुग्यः । महिष्याः सखा महिषीसखः । [ कृताभिषेका महिषीति हैमः कोषः—चा० ] । " राजाहः सखिभ्यष्टच " इति टच्प्रत्ययः । सहायान्तरनिरपेक्ष इति भावः । स राजा सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेर्वशिष्ठस्याश्रमं प्रापत्प्राप । पुषादित्वादङ् । [ अनुप्रासालंकारोयं —चा० ] । तमाश्रमं विशिनष्टि—

४९ वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृत्तैः । [ आश्रमवनच्छेदस्यायुक्तत्वाद्वनान्तरादुपावृत्तैरित्युक्तं—चा० ] समिधश्च कुशांश्च फलानि चाहर्तुं शीलं येषामिति समित्कुशफलाहराः । तैः । " आङि ताच्छील्ये " इति हरतेराङ्पूर्वादच्प्रत्ययः । अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः । तैस्तपस्विभिः पूर्यमाणम् ( व्याप्यमानं ) " प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति " इति श्रुतेः । यथाह— " कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति । एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन् " इति । [ आहिताग्नीनामग्नयः स्वयं प्रत्युद्गमं कुर्वन्तीति पौराणिकाः—सु० ] ।

५० नीवाराणां भाग एव भागधेयोऽशः ( वण्टो वा ) । " रूपनामभागेभ्यो धेयः " इति वक्तव्यसूत्रात्स्वाभिधेये धेयप्रत्ययः । तस्योचितैः ( योग्यैः ) । अत एवोटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैः ( अर्थात् मुनिगृहद्वारावरणशीलैः ) मृगैः । ऋषिपत्नीनाम् ( मुनिस्त्रीणां ) । अपत्यैः ( पुत्रैः ) इव । आकीर्णं व्याप्तम् ।

५१ सेकान्ते वृक्षमूलसेचनावसाने मुनिकन्याभिः ( ऋषिसुताभिः ) । सेक्त्रीभिः । आलवालेषु जलाधा

48. At last towards the close of day, that king of unrivalled fame, arrived with his queen and with the horses fatigued, at the hermitage of the great sage who constantly lived under a system of spiritual discipline

49. By that time the pious inmates of that hermitage were returning home from their rambles in the forest, in quest of sacrificial wood, fruits and the sacred कुश grass,—secretly welcomed by the sacred fire of each.

50. And the domesticated deer, loved as children by the wives of the *Rishis* and used to handfuls of नीवार corn as their portion in the evening, were flocking before the cottage-door.

51. By that time the daughters of the *Munis* were leaving the sides of the young plants, after

48. B. C. D. E. स्कन्धामक्तसमित्कुशैः for समित्कुश°. Châ Din. Va. Vija. and Su,. also read with B. C. D. and E. explain: समिधश्चकुशाश्च समित्कुशं स्कन्धासक्तं अंशे न्यस्तं समित्कुशं येषां तैः—B.D. and Vija. अग्निप्रत्युद्गमात्पूतैः पूर्यमाणं तपस्विभिः for the second half of the stanza, also supported by Su. and Va.; between 49-50. B. reads:—" आकीर्यमाणमासन्नविधिभिः समिदाहरैः । वैखानसैरदृश्याग्निप्रत्युद्गमनवृत्तिभिः " also supported by Su.

51. D. विविक्तीकृतवृक्षकम् for तत्क्षणोज्झितवृक्षकम्.

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥
अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥
अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥

पप्रदेशेषु यदम्बु तत्पायिनाम् ( तरुमूलकृतोदकाधारगर्तस्तत्राम्बु पातुं शीलं येषां तथोक्तानां ) । "स्यादालवालमावालमावापः" इत्यमरः । विहंगानां पक्षिणां विश्वासाय विश्रम्भाय । "समौ विश्वासविश्रम्भौ" इत्यमरः । तत्क्षणे सेकक्षण उज्झिताः ( त्यक्ताः ) वृक्षका ह्रस्ववृक्षाः यस्मिंस्तम् । ह्रस्वार्थे कप्रत्ययः ।

५२ आतपस्य ( घर्मस्य ) अत्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु । "नीवारास्तृणधान्यानि" इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरभागेषु । "पर्णशालोटजोऽस्त्रियाम्" इति । "अङ्गनं चत्वराजिरे" इति चामरः । निषादिभिरुपविष्टैर्मृगैर्वर्तितो निष्पादितः । [ प्रारब्धः । कर्मणो रोमन्थतपोभ्यां वर्तिचरोरित्यत्र सूत्रे यो वर्तिधातुस्तदनुसारेण वर्तित इति प्रयोगः—चा० ] । रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम् ।

५३ अभ्युत्थिताः प्रज्वलिताः । होमयोग्या इत्यर्थः । "समिद्धेऽग्नावाहुतीर्जुहोति" इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः ( मारुतोत्थापितैः ) । आहुतिगन्धः ( आज्यगन्धः ) येषामस्तीत्याहुतिगन्धिनः । तैर्धूमैराश्रमोन्मुखानतिथीन्पुनानं पवित्रीकुर्वाणम् । [ विरोधाभासः—चा० ] । कुलकम् ।

५४ अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिम् । धुरं वहन्तीति धुर्याः युग्याः । "धुरो यड्ढकौ" इति यत्प्रत्ययः । "धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः" इत्यमरः । धुर्यान्रथाश्वान्विश्रामयाविनीतश्रमान्कुर्वित्यादिश्याज्ञाप्य । ( आर्द्रपृष्ठाः क्रियन्तामित्यर्थः ) । तां पत्नीं रथादवारोहयदवतारितवान्स्वयं चावततार । "विश्रमय" इति ह्रस्वपाठे "जनीजॄष्–" इति मित्त्वे "मितां ह्रस्वः" इति ह्रस्वः । दीर्घपाठे "मितां ह्रस्वः" इति सूत्रे "वा चित्तविरागे" इत्यतो "वा" इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणत्वाद्ध्रस्वाभाव इति वृत्तिकारः ।

---

having watered them, to allow the little birds to drink from the water-beds at the foot of the shrubs, without being afraid of their presence.

52. By that time, owing to its being the close of day the corn-grains of नीवार, that had been **spread out** to dry, were being collected in **heaps** in one part of the yard ; and close by the deer **lay ruminating** at their ease.

53. And volumes of smoke betokening the mountain flame, and odorous with the sacrificial **offerings, came wafted** by the evening breeze and sanctified by its contact the royal **guests**, who **were now** entering into the holy retreat.

54. Then having ordered the charioteer to tend the yoked horses, the king alighted from the **car and also** helped the queen to alight.

---

52. D. आतपापाय° for आतपात्यय°.

53. A. D. अभ्युत्थिताग्निपिशुनैः. B. Din. Vija. Va. and Châ., अभ्युद्धृत° C. and Su., अभ्युत्थानाग्नि°.

54. A. C. D. E. Châ. Va. Din. and Su., विश्रामय. B. and Vija. विश्रमय, also commented upon by Malli. who says:—विश्रमय इति ह्रस्वपाठे जनीजृषितिमित्वे "मितां ह्रस्वः" इति ह्रस्वः । दीर्घपाठे "मितां ह्रस्वः" इति सूत्रे "वा चित्तविरागे" इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणत्वाद्ध्रस्वाभाव इति वृत्तिकारः; A. अवारोहयत् also noticed by Châ.; B. C. D. E. Châ. Din. Va. Vija. and Su., अवारोपयत्; D. अवरुरोह for अवततार.

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥
विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुंधत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥
तयोर्जगृहतुः पादान्राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥

५५ सभायां ( संसदि ) साधवः सभ्याः ( आचारज्ञाः )। " सभाया यः " इति यप्रत्ययः । गुप्ततमेन्द्रिया अत्यन्तनियमितेन्द्रिया मुनयः सभार्याय ( सपत्नीकाय ) गोप्त्रे ( प्रजानां ) रक्षकाय । नयः शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं यस्य तस्मै नयचक्षुषे। अत एवार्हते प्रशस्ताय। पूज्यायेत्यर्थः । " अर्हः प्रशंसायाम् " इति शतृप्रत्ययः । तस्मै राज्ञेऽर्हणां पूजां चक्रुः । " पूजा नमस्यापचितिः सपर्याऽर्चार्हणाः समाः " इत्यमरः ।

५६ स राजा सायंतनस्य सायंभवस्य । " सायंचिरम्–" इत्यादिना ट्युल्प्रत्ययः । विधेर्जपहोमाद्यनुष्ठानस्यान्तेऽवसानेऽरुंधत्यान्वासितं पश्चादुपवेशनेनोपसेवितम् । कर्मणि क्तः । उपसर्गवशात्सकर्मकत्वम् । अन्वास्यैनामित्यादिवदुपपद्यते । तपोनिधिं वशिष्ठम् । स्वाहया स्वाहादेव्या । " अथाग्नायी स्वाहा च हुतभुक्प्रिया " इत्यमरः । अन्वासितं हविर्भुजमिव । ददर्श ( अद्राक्षीत् )। " समित्पुष्पकुशाग्न्यम्बुमृद्भाक्षतपाणिकः । जप होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत्" इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम् । अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तं न तु कर्माङ्गत्वेन । विधेरन्त इति कर्मणः समाप्त्यभिधानात् । [ अग्नेरौपम्येन वशिष्ठस्य तेजस्वित्वं पावनत्वं चोक्त–चा० ]।

५७ मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोररुंधतीवशिष्ठयोः पादाञ्जगृहतुः(पादोपसंग्रहणं चक्रतुः )। "पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । पादग्रहणमभिवादनम्। गुरुपत्नी गुरुश्च । कर्तारौ । सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ प्रीत्या हर्षेण प्रतिननन्दतुः । [ दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनंदेच्च सर्वशः इति मनुः– चा० ]। आशीर्वादादिभिः संभावयांचक्रतुरित्यर्थः । [ चारित्रवर्द्धनस्तु पादौ इति पाठ गृहीत्वा तमेव समर्थयति । ननु पादानिति वक्तव्ये पादाविति कथं द्विवचनप्रयोगः । पादजातेर्द्वित्वविवक्षितत्वात् । त्रीण्यं चक्षुरित्यादिवन्न दोषः । उक्त च वामनेन " स्तनादौ द्वित्वं द्वित्वाविष्टा जातिः प्रायेण " इति । यथा माघे " स्तनौ दधानास्तरुण्यः " इति । मागधीपदेन विशिष्टवंशत्वं ज्ञाप्यते । तेन च गुरुजनचरणप्रणामौचित्यं द्योत्यते । ननु कथं राजा राज्ञीत्यादीनामेकवचनानां जगृहतुः प्रतिननन्दतुरिति द्विवचनक्रियाभिः सम्बन्धः । द्वयोर्नाम्नोर्बहूनां वा यदि वाक्यं समुच्चये । अङ्गत्वाश्रिता संख्यापाद्यादौ वा विशेषतः इति विकल्पविधानान्न दोषः—चा० ]।

---

55. The Munis, who were perfect in their manners, and pre-eminent in the virtue of self-control, gave a hearty welcome to the wise (lit: whose eyes were the S'ástras) King, the protector of his subjects and who deserved the rights of hospitality, and to his beloved queen.

56. After the evening devotions he waited upon the holy sage (lit: the treasure of asceticism), who was accompanied by his wife अरुन्धती, and who accordingly resembled the god Fire attended by स्वाहा, his wife.

57. Both the king and the queen, the daughter of the Magadha king, prostrated themselves at the feet of the holy couple, and the preceptor and his wife too in their turn, gave a loving welcome to their royal guest.

---

56. D. and E. अन्वासिनम् for अन्वासितम्.

57. C. and Chà., पादौ for पादान्.

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥
अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥
उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥

५८ मुनिः । अतिथ्यर्थमातिथ्यम् । "अतिथेर्ञ्यः" इति ञ्यप्रत्ययः । आतिथ्यस्य क्रिया । तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम् । राज्यमेवाश्रमस्तत्र मुनिम् । मुनितुल्यमित्यर्थः । तं दिलीपं राज्ये कुशलं पप्रच्छ । पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम् । यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः तथाप्यत्र सप्ताङ्गवचनः । "उपपन्नं ननु शिवं सप्तस्वङ्गेषु" इत्युत्तरविरोधात् । तथाह मनुः—"स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते" इति । तत्र "ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च" इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद्ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसन्धेयम् । अत एवोक्तं 'राज्याश्रममुनिम्' इति ।

५९ अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां वरः श्रेष्ठः । ( वावदूकानामग्रेसरः । ) "यतश्च निर्धारणम्" इति षष्ठी । अर्थपती राजाथर्वणोऽथर्ववेदस्य निधेः [ अथर्ववेदाभिज्ञस्य । अथर्वनिधिपदेन दुरितोपशमननिमित्तशान्तिकपौष्टिकप्रवीणत्वं पौरोहित्योचितत्वं द्योतते । तथाहि "पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् । दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा" इति मिताक्षरायां—चा० ] तस्य मुनेः पुरोऽग्रेऽर्थ्यामर्थादनपेताम् । "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । वाचमाददे । वक्तुमुपक्रान्तवानित्यर्थः । अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते । यथाह कामन्दकः— "त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः । अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम्" इति ।

६० हे गुरो । सप्तस्वङ्गेषु स्वाम्यमात्यादिषु । "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । सप्ताङ्गानि" इत्यमरः । शिवं कुशलमुपपन्नं ननु युक्तमेव । नन्ववधारणे । "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः । कथमित्यत्राह—यस्य मे दैवीनां देवेभ्य आगतानां दुर्भिक्षादीनां, मानुषीणां मनुष्येभ्य आगतानां चौरभयादीनाम् । उभयत्रापि "तत आगतः" इत्यण् । "टिड्ढाणञ्—" इत्यादिना ङीप् । आपदां व्यस-

58. After the king had rested a while and recovered from the effects of the fatigue of the previous journey (caused by the joltings of the car), through the kind hospitality of the sage, the latter asked the pious monarch whether everything fared well in his kingdom.

59. Then the lord of wealth, the best of the eloquent and by whom the enemies' cities were conquered, spoke in words replete with sense before that respository of the Atharva Veda (the sage Vas'istha).

60. As long as the duty of averting all my dangers, either human or divine, rests with you, so long prosperity is sure to reign in all the seven departments of my state.

58. B. आतिथेयस्तमातिथ्यं विनीताध्वपरिश्रमम् for the first half, supported by Chà. Din. and Su., who say "अतिथिरेवातिथ्यः" C. आतिथेयस्तमातिथ्यविनीताध्वपरिश्रमम्.

59. A. B. C. E. Din. Val. Vija. Chà., °निधेः. D. and Su., अथर्वविदः. D. °पुरःसरः for °पुरःपुरः-

60. A. C. E. Su. Vija. and Va., प्रतिहर्ता. D. Din. and Chà., प्रतिहन्ता. B. has प्रतिकर्ता

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥
हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥
पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥
त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥

मानां । ( कर्तृकर्मणोः कृतीति षष्ठी ) । त्वं प्रतिहर्ता वारयितासि । अत्राह कामन्दकः—" हुताशनो व्याधिर्दुर्भिक्ष मरणं तथा । इति पञ्चविध दैवं मानुषं व्यसनं ततः । आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् " इति । तत्र मानुषापत्प्रतीकारमाह—

६१ दूरात्परोक्षे एव प्रशमितारिभिः । मन्त्रान्कृतवान्मन्त्रकृत् । [ मन्त्र संहिताविभागं कृतवान्—चा० ] । " सुकर्मपापमन्त्रपुण्येषु कृञः " इति क्विप् । तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्तृभिः । दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्र भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव । वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इव । [ इव शब्देनात्मनः पौरुषं संभावयति—चा० ] । इत्युत्प्रेक्षा । " प्रत्यादेशो निराकृतिः " इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव नः पौरुष फलतीति भावः । सम्प्रति दैविकापत्प्रतीकारमाह—

६२. हे होतस्त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्त हविराज्यादिकम् । कर्तृ । अवग्रहो वर्षप्रतिबन्धः ( वृष्टिविघातः ) । " अवे ग्रहो वर्षप्रतिबन्धे " इत्यप्प्रत्ययः । " वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ " इत्यमरः । तेन विशोषिणां विशुष्यतां शस्यानां वृष्टिर्भवति । वृष्टिरूपेण शस्यान्युपजीवयतीति भावः । अत्र मनुः – " अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " इति ।

६३. आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् । वर्षशतमित्यर्थः । " शतायुर्वै पुरुषः " इति श्रुतेः । " अचतुर- " आदिसूत्रेणाच्प्रत्ययान्तो निपातः । मदीयाः प्रजाः । पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । निरातङ्काः ( निर्गतः आतङ्कः रोगसन्तापभय याभ्यस्ताः तथोक्ताः ) निर्भयाः । " आतङ्को भयमाशङ्का " इति हलायुधः । निरीतयोऽतिवृष्ट्यादिरहिता इति यत्तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसंपत्तिरेव हेतुः । " व्रताध्ययनसंपत्तिरित्येतद्ब्रह्मवर्चसम् " इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । " ब्रह्महस्तिभ्यां वर्चसः " इत्यच्प्रत्ययः । " अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः " इति कामन्दकः ।

६४. ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण [ अथवा ब्रह्मणस्तपसो योनिः कारणं तेन—चा० ] गुरुणा त्वयैवमुक्तप्रकारेण चिन्त्यमानस्यानुध्यायमानस्य । अत एव निरापदो व्यसनहीनस्य मे संपदः सानुबन्धाः सा-

61. You are yourself a composer of the hymns of the Vedas, and your hymns are efficacious enough to thwart my enemies from a distance ; consequently they have made my arrows useless, which can pierce only those who come within their mark.

62. The holy offerings that you O sacrificer, pour, according to the rule, on the sacrificial fire, become converted into rain for nourishing the parched--up crops.

63. That my subjects live to the full age of man, or that they are free from fear and from all agricultural losses, are all owing to the influence of your religious austerity and learning.

64. How could the fortunes of a man be not in a state of continued prosperity, whose in-

61. A. D. प्रशमितारिभिः, B. E. Din. Chà. Vija Su. and Va., संशमितारिभिः, C. संयमितारिभिः.

62. C. वृष्टये. Also Chà. Va. Din. and Su., who say " तादर्थ्ये चतुर्थी ".

63. B. C. E. supported by Chà. Din. Va. Vija. and Su., तत्र for तस्य.

किंतु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥
नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥
मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥

स्यतयः ( सप्रवाहाः ) । अविच्छिन्ना इति यावत् । कथं न स्युः । स्युरेवेत्यर्थः । [ संवीतस्य हि लोकेस्मि दोषान्वेषणं क्षमं । शिवलिङ्गस्य संस्थाने कस्याभस्मत्वभावना –चा० ] । संप्रत्यागमनप्रयोजनमाह—

६५. किंतु तवैतस्यां वध्वां स्नुषायाम् । " वधूर्जाया स्नुषा चैव " इत्यमरः । अदृष्टा सदृश्यनुरूपा प्रजा ( सन्तानं ) येन तं मां [ सदृशप्रजामित्यनेन सर्वथा सन्तानाभावो नास्ति–चा० ] सद्वीपापि । [ इति सार्वभौमं सूच्यते–चा० ] रत्नानि सूयत इति रत्नसूरपि । " सत्सूद्विष– " इत्यादिना क्विप् । मेदिनी नावति न प्रीणाति । ( रत्नदापि मही अप्रजस्य मे न किमपि सुखमावहतीत्यर्थः )। अवधातू रक्षणगतिप्रीत्याद्यर्थेषूपदेशा- दत्र प्रीणने । रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् । तदेव प्रतिपादयति–

६६. मत्तः परं मदनन्तरम् । " पञ्चम्यास्तसिल् " । पिण्डविच्छेददर्शिनः पिण्डदानविच्छेदमुत्प्रेक्षमाणाः । वंशोद्भवा वंश्याः पितरः । स्वधेत्यव्ययं पितृभोज्ये वर्तते । तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितृकर्मणि । " पितृदान निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः " इत्यमरः । प्रकामभुजः पर्याप्तभोजिनो न भवन्ति नूनं सत्यम् । (मन्मृतेरनन्तरं स्वधासंग्रहैकबुद्धयो मे पितरः पिण्डदानलोपमवलोक्य श्राद्धे पर्याप्तं न किल भोक्ष्यंते तथाहि । "अस्मात्परं बत यथाश्रुतिसंभृतानि । को नः कुले निवपनानि नियच्छतीति । नूनं प्रसूति- विकलेन मया प्रसिक्तं । धौताश्रुशेषमुदकं पितरः पिबन्ति" इत्येव समार्थः श्लोकांशः ) । " कामं प्रकामं पर्याप्तम् " इत्यमरः । निर्धना ह्यापद्धन कियदपि संगृह्णन्तीति भावः ।

६७, मत्परं मदनन्तरम् । " अन्यारात्– " इत्यादिना पञ्चमी । दुर्लभं दुर्लभ्यं मत्वा ( ज्ञात्वा ) मयाव र्जितं मद्दत्तं पयः पूर्वैः पितृभिः स्वनिःश्वासैर्दुःखजैः कवोष्णमीषदुष्णं यथातथोपभुज्यते । [ दिलीपानन्तरं पयो न लप्स्याम इति शोकावेशान्निर्गच्छद्भिर्निःश्वासैरीषदुष्णं पितरः स्वीकुर्वते इति तात्पर्यार्थः–चा० ] । नूनमिति तर्के [ उत्तरे वा–चा० ] । कवोष्णमिति कुशब्दस्य कवादेशः । " कोष्णं कवोष्ण मन्दोष्णं कदुष्णं त्रिषु तद्वति " इत्यमरः ।

---

terests are being taken care of by a spiritual preceptor like your venerable self--one who is descended directly from ब्रह्मा the creator.

65. But the sovereignty of the whole earth, with all its inlands, and with all its hidden treasures, does not give me any comfort, seeing that I am denied the pleasure of seeing worthy issue, from this your daughter-in-law.

66. Methinks! my venerable ancestors, apprehending the total cessation of the पिण्ड offerings after my death, do not now eat to their heart's content at श्राद्ध ceremony, in their anxiety to store up present *Pindas* as a provision for the future.

67. Methinks! those venerable ancestors of mine are drinking the libations of water offered by me, made hot by their sighs, at the prospect of such libations ceasing altogether after my death.

---

67. A. पयः पूर्वैः सनिश्वासैः कवोष्णमुपभुज्यते. B. E. Va. Vija. and su., पयः पूर्वे सनिःश्वासं कवोष्णमुपभुञ्जते. C. पयः पूर्वैः सनिःश्वासं कवोष्णमुपभुज्यते D. Din. and Cha., पयः पूर्वे सनिश्वासैः कवोष्णमुपभुञ्जते.

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ ६८ ॥
लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ ६९ ॥
तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥
असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुंतुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥

६८. इज्या यागः । " व्रजयजोर्भावे क्यप " इति क्यप्प्रत्ययः । तया [ दानेन च–चा० ] विशुद्धात्मा विशुद्धचेतनः प्रजालोपेन संतत्यभावेन निमीलितः कृतनिर्मीलनः सोऽहम् । लोक्यते इति लोकः । न लोक्यते इत्यलोकः । लोकश्चालोकश्चात्र स्त इति लोकश्चासावलोकश्चेति वा लोकालोकः चक्रवालोऽचल इव । लोकालोकश्चक्रवालः " इत्यमरः । प्रकाशते इति प्रकाशश्च देवर्णविमोचनात् । न प्रकाशते इत्यप्रकाशश्च पितॄणांविमोचनात् । पचाद्यच् । अस्मीति शेषः । लोकालोकोऽप्यन्तः सूर्यसंपर्कोद्बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम् । ननु तपोदानादिसपन्नस्य किमपत्यैरित्यत्राह—

६९. समुद्भवत्यस्मादिति समुद्भवः कारणम् । तपोदाने समुद्भवो यस्य तत्तपोदानसमुद्भवं यत्पुण्यं तल्लोकान्तरे परलोके सुखं सुखकरम् । शुद्धवंशे भवा शुद्धवंश्या संततिर्हि परत्र परलोके इह च लोके शर्मणे सुखाय । ( तपोदानक्रियादिभिः समुद्भूतं पुण्यं परलोकसुखावह भवति पर तु अमलिनकुले जाता संततिः उभावपि लोके सुखाय संपत्स्यते ) । " शर्मशातसुखानि च " इत्यमरः । भवतीति शेषः ।

७०. हे विधातः स्रष्टः , तया सतत्या हीनमनपत्यं माम् । स्नेहात्प्रेम्णा स्वयमेव सिक्तं जलसेकेन वर्धितं वन्ध्यमफलम् । " वन्ध्योऽफलोऽवकेशी च " इत्यमरः । आश्रमस्य । [ आश्रमशब्देन स्नेहाधिक्यं–चा० ] । वृक्षकं वृक्षपोतमिव । पश्यन्कथं न दूयसे न परितप्यसे । विधातरित्यनेन समर्थोऽप्युपेक्षसे इति गम्यते ।

७१. हे भगवन्मे ममान्त्यमृणं पैतृकमृणम् । अनिर्वाणस्य मज्जनरहितस्य । " निर्वाणं निर्वृतौ मोक्षे

---

68. On the one hand my soul is purified and enlightened by the performance of sacrificial rites, but on the other a cloud of despair presses upon it, on account of the failure of issue ; thus I resemble the लोकालोक mountain, one half of which is lighted and the other half dark.

69. The merit arising from penance and alms-giving procures felicity only in the next world, while offspring born of a pure family ( origin ) are for happiness both here and hereafter.

70. How is it ! O venerable father ! that you are not pained to see me devoid of that blessing———as you would surely be when you see a beloved tree of this hermitage, planted with your own hands, failing to produce any fruits, in the natural season ?

71. Be it known to you, venerable sage, that these last of my debts have become galling to my spirit ; as the state of bondage, at the tying pole, is deeply irksome to the heat-stricken elephant, panting for its daily bath.

---

68 A. D. Din., & chà. अप्रकाशः B. C. E. Va. Vija. & Su;, अन्धकारः.

69. A. B. C. E. °वंश्या हि supported by Chà. Din. Vija. Va. & Su.; D. °वंशास्तु.

70. A. E. विधातर्.; B. C. Vija. and Va., वितानम्.; D. Chà. Din. and Su. विनेतर्; we with A; A. B. Va. Vija and Su., °वृक्षकम् ; C. D. E. Din. and Chà. [illegible]पादपम्.

71. A. B. C. E. Din. and Chà., ऋणमन्त्यम्. D. Vija. and Su., [illegible];

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥
इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥
सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

विनाशी गजमज्जनं " इति यादवः । दन्तिनो गजस्य । अरुर्मर्म तुदतीत्यरुंतुदं मर्मस्पृक् । " व्रणोऽस्त्रियामीर्ममरुः " इति । " अरुंतुदस्तु मर्मस्पृक् " इति चामरः । " विध्वरुषोस्तुदः " इति खश्प्रत्ययः । " अरुर्द्विषत्-- " इत्यादिना मुमागमः । आलानं बन्धनस्तम्भमिव । " आलानं बन्धनस्तम्भे " इत्यमरः । असह्या सोढुमशक्या पीडा दुःखं यस्मिंस्तदवेहि । दुःसहदुःखजनकं विद्धीत्यर्थः । " निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि " इति पालकाप्ये । " ऋणं देवस्य यागेन ऋषीणां दानकर्मणा । संतत्या पितृलोकानां शोधयित्वा परिव्रजेत् " ।

७२. हे तात, तस्मात्पैतृकादृणाद्यथा मुच्ये मुक्तो भवामि । कर्मणि लट् । तथा संविधातुं कर्तुमर्हसि । हि यस्मात्कारणादिक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् । दुरापे दुष्प्राप्येऽर्थे । सिद्धयस्त्वदधीनास्त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी " न लोक- " इत्यादिना कृद्योगेषष्ठीनिषेधात् । [ कथं कर्तरि षष्ठी । आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियं । कोशदण्डसमग्राणां किमेषामस्ति दुष्करमित्यादावलंकारिकैरादृतत्वान्न दोषः । यदाह च भोजः । इदं शास्त्रमाहात्म्यदर्शनालसचेतसां । अपशब्दवदाभाति न च सौभाग्यमुज्झतीति--चा० ] ।

७३. इति राज्ञा विज्ञापितः ऋषिर्ध्यानेन ( समाधिना ) स्तिमिते ( निश्चले ) लोचने ( नेत्रे ) यस्य ध्यानस्तिमितलोचनो निश्चलाक्षः सन्क्षणमात्रम् । सुप्तमीनो ( सुप्ताः निद्रां प्राप्ताः मीनाः मत्स्याः यत्र स तथोक्तः ) ह्रदः ( तडागः ) इव । तस्थौ ( स्थितः ) ।

७४. स मुनिः प्रणिधानेन चित्तैकाग्र्येण [ योगसमाधिना--चा० ] भावितात्मा शुद्धान्तःकरणः [ भावितज्ञानमय आत्मा जीवो यस्य सः--विज० ] भुवो भर्तुर्नृपस्य संततेः स्तम्भकारणं संतानप्रतिबन्धकारणमपश्यत् । अथानन्तरमेनं नृपं प्रत्यबोधयत् । स्वदृष्टं ज्ञापितवानित्यर्थः । एनमिति " गतिबुद्धि-" इत्यादिनाणिकर्तुः कर्मत्वम् ।

---

72. Order it so then, O father, that I may be discharged from these debts, in everything difficult of achievement, by the princes of the royal line of इक्ष्वाकु, success is entirely at your disposal.

73. Thus addressed by the king, the *rishi* remained for some time in a state of trance (lit. with his eyes closed in deep meditation), calm and motionless like the waters of a lake, in which the fish are asleep.

74. By profound religious meditation (*i e* by second sight) he discovered the cause of the obstacles lying in the way of his having progeny, and then, in an inspired mood, thus divulged the secret to the lord of the earth.

---

A. B. C. E. Din. Vija. and Chà., अनिर्वाणस्य.; D. and Su., नवबद्धस्य also noticed by Chà. and Din.

72. B. C. E. Val. and Vija. मुच्ये यथा तात. A. Din. and Chá. यथा विमुच्येहं. D. and Su., यथा हि मुच्येहं; A. B. C. E. and Vija. तथा. D. Chà. Din. Su. and Va., यथा.

73. A. B. C. E. Châ. Vija. Va. Din. Su., इव., D. यथा.

74. D. संततिस्तम्भकारणम् for सन्ततेः स्तम्भकारणं; D. पुरः for भुवः.

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥
धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥
अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥
स शापो न त्वया राजन्न च सारथिना श्रुतः ।
नदत्याकाशगंगायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥

७५. पुरा पूर्वं शक्रम् [ शंकते भयं प्राप्नोति तपस्विभ्योऽपीति शक्रस्तं–विज० ] इन्द्रमुपस्थाय संसेव्योर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तवपथि ( मार्गे ) कल्पतरुच्छायां ( देवद्रुमच्छायां ) आश्रिता सुरभिः कामधेनुरासीत् । तत्र स्थितेत्यर्थः । [ अर्थात् सूर्यवंश्याः सर्वेपि शक्रस्याराधनायै दिवि गच्छन्तो भुवनत्रये ऽस्खलितगतयः आसन्–सु० ] । ततः किमित्याह—

७६ ऋतुः पुष्पम् । रज इति यावत् । " ऋतुः स्त्रीकुसुमेऽपि च " इत्यमरः । ऋतुना निमित्तेन । [ रजोदर्शनादूर्ध्वं चतुर्थे दिने–सु० ] । स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्य ऋत्वभिगमनलक्षणस्य लोपाद्भ्रंशाद्भयं तस्मात् स्मरन्ध्यायन् । " मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन्"। इति शास्त्रात्प्रदाक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं नाचरो नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः– " ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा " इति । अकरणे दोषमाह पराशरः– " ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति । बालगोघ्नापराधेन विध्यते नात्र संशयः " इति । [ "ऋतुस्नातां च यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः–"सु० विज० चा० ] ।

७७. यस्मात्कारणान्मामवजानासि तिरस्करोषि । अतः कारणान्मत्प्रसूतिं मम संततिमनाराध्यासेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप । ( यन्मामनादृत्य इतः गतोऽसि तद्विना मत्प्रसूत्याराधनं तव प्रजाः न कदापि भविष्यतीत्येवं सा कामधेनुस्तस्मै राज्ञे शापं दत्तवतीत्यर्थः) । शप आक्रोशे । कथं तदस्माभिर्न श्रुतमित्याह—

७८. हे राजन्स शापस्त्वया न श्रुतः । सारथिना च न श्रुतः । अश्रवणे हेतुमाह–क्रीडार्थमागता उद्दामा-

75. On one occasion, when you were returning to the earth after waiting upon Indra, there was a कल्प tree on your way, at whose shade lay at her ease the divine cow सुरभि.

76. At that time, in your anxiety not to be guilty of violating a sacred obligation to this queen, who was waiting for you after her customary monthly ablution, you did not behave respectfully towards that holy cow, who was worthy of the honour of being gone round.

77. And she cursed you by saying—" As thou hast treated me with disrespect, so shalt thou never have any issue without first propitiating my offspring."

78. At that time, an elephant, one of the keepers of the different corners of the heavens,

76. A. ऋतुस्नातामिमां स्मरन्. D. ऋतुस्नातां तु संस्मरन्. C. E. Châ. Din. Vija. and Va., इमां संचिन्त्य सत्वरः, B. E. Vija. and Su. read " इमां देवीमृतुस्नातां स्मृत्वा सपदि सत्वरः । प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनः " for 'धर्मलोपभयात्' and (B. श्रुत्वा for स्मृत्वा ). E and Vija. read 'इमां देवीं;' and between 75 and 76 'इमां देवीं' also noticed by Châ. and Din. लक्ष्मीसेन one of the oldest and most authentic Ms. of the Jaina family, belonging to the Kolhapur collection, omits stanzas 77 and 78. A. and B. omit the same.

ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥
हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजंगपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥
सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥
इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥

नां दाश्च उद्धताः ( उत्कटाः ) दिग्गजा यस्मिंस्तथोक्ते आकाशगंगायाः मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ( शब्दायमाने सति ) । अस्तु प्रस्तुते किमायातमित्यत्राह—

७९. तदवज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्याप्तुमिष्टमीप्सितं मनोरथम् । आप्नोतेः सन्नन्तात्क्तः । ईकारश्च । सार्गलं सप्रतिबन्धं विद्धि जानीहि । तथाहि । पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति [ रुणद्धि । उक्तञ्च । अपूज्या यत्र पूज्यन्ते पूज्यपूजा व्यतिक्रमः । दुर्भिक्षं मारिरोगाश्च भवन्त्येवं न संशयः—सु० ] । तर्हि गत्वा तामाराधयामि । सा वा कथंचिदागमिष्यतीत्याशा न कर्तव्येत्याह—

८०. सा च सुरभिरिदानीं ( सांप्रतं ) दीर्घं ( अविश्रान्तं ) सत्रं । ( " सत्रमाच्छादने यज्ञे सदा दाने वनेपि च " इत्यमरः ) । चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसः ( वरुणस्य ) हविषे दध्याज्यादिहविरर्थं भुजंगपिहितद्वारं भुजंगावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति । पाताले तिष्ठतीत्यर्थः । "अधिशीङ्स्थासां कर्म " इति कर्मत्वम् । तर्हि का गतिरित्यत आह—

८१ तस्याः सुरभेरियं तदीया । तां सुतां सुरभेः प्रतिनिधिं ( तुल्यरूपां ) कृत्वा शुचिः शुद्धः । सह पत्न्या वर्तत इति सपत्नीकः सन् । " नद्यृतश्च " इति कप्प्रत्ययः । आराधय । हि यस्मात्कारणात्सा प्रीता तुष्टा सती । कामान्दोग्धीति कामदुघा भवति । " दुहः कब्घश्च " इति कप्प्रत्ययः । घादेशश्च ।

८२. इति वादिनो वदत एव होतुर्हवनशीलस्य । " तृन् " इति तृन्प्रत्ययः । अस्य मुनेराहुतीनां (आ-

---

was diverting itself by playing with the waters of the heavenly river ; consequently there being a great noise, neither you nor your charioteer could hear that curse, pronounced by सुरभि.

79. Know then ! O prince, that the attainment of your desire is being postponed by that insult you offered to the divine cow ; it is but meet that the non-payment of homage to those who are worthy of it should thus stand in the way of our welfare.

80. सुरभि is at present staying, O prince, in the nether regions,——the gates of which are guarded by serpents,—with a view to supply *ghee* for a sacrificial ceremony of Prachetas, that would last for a long time.

81. Make then the daughter of सुरभि her mother's representative, and worship her accompanied by the queen with your body purified. She too if pleased, can fulfil all your desires.

82. Scarcely had the sacrificer finished his speech, when the blessed cow Nandini by name, the source of his offerings, returned home from her grazing rambles in the forest.

---

79. D. Din. and Châ., अवेहि तदवज्ञानाद्यत्नापेक्षं मनोरथं. B. अवैमि तदपध्यानाद्यत्नापेक्षं मनोरथं, C. A. अवेहि तदवज्ञानादनपेक्षं मनोरथं, ( अनपेक्षं for यत्नापेक्षं.) for the first páda.

81. B. C. E. and Va., स गां मदीयां for सुतां तदीयां. D. E. and Vija. स त्वमेकान्तरां तस्यां मदीयां-वत्समातरम् for the first Pàda, also Châ. Din. and Su.; E. and Vija. तस्या for तस्यां, D. and Vija. सा वां कामं निधास्यति, E. सर्वकामं विधास्यति for नि॰ प्रा. also Châ. and Su.; Vija. has विधास्यति for निधास्यति.

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम् ॥ ८३ ॥
भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥
रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥

ष्यादीनां ) साधनं कारणं । नन्दयतीति व्युत्पत्त्या नन्दिनी नाम अनिन्द्या अगर्ह्या प्रशस्ता धेनुः ( गौः ) वनात् ( काननात् ) आवृते प्रत्यागता । ( तस्मिन्मुनौ एवं उक्तमात्रे एव सा कामधेनुर्वनात्प्रतिनिवृत्त्य । आविर्बभूवेत्यर्थः ) । " अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् " इति भावः । [ हेतुरिति सम्बन्धे षष्ठी-चा० ] । संप्रति धेनुं विशिनष्टि—

८३. पल्लववत्स्निग्धा चासौ पाटला ( रक्ता ) च । संध्यायामप्येतद्विशेषणं योग्यम् । ललाटे ( भाले ) उदयो यस्य स ललाटोदयः । तमाभुग्नमीषद्वक्रम् । " आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि " इत्यमरः । " उदितश्च " इति निष्ठातस्य नत्वम् । श्वेतरोमाण्येवाङ्कस्तं बिभ्रती । नवं शशिनं बिभ्रती संध्येव स्थिता ।

८४. कोष्णेन । किंचिदुष्णेन । " कवं चोष्णे " इति चकारात्कादेशः । अवभृथादप्यवभृथस्नानादपि ( यागान्तस्नानादपि ) मेध्येन पवित्रेण । " पूतं पवित्रं मेध्यं च " इत्यमरः । वत्सस्यालोकेन प्रदर्शनेन प्रवर्तिना प्रवहता प्रस्नवेन क्षीराभिस्यन्दनेन भुवमभिवर्षन्ती सिञ्चन्ती । कुण्डम् ( कुण्ड्यते रक्ष्यते जलं वाह्विर्वा अत्र जलाधारपात्रविशेषं ) इव ऊध आपीनं यस्याः सा कुण्डोध्नी । " ऊधस्तु क्लीबमापीनम् " इत्यमरः । " ऊधसोऽनङ् " इत्यनङादेशः । " बहुव्रीहेरूधसो ङीष् " इति ङीष् ।

८५. खुरोद्धूतैः ( उत्थापितैः ) अन्तिकात्समीपे गात्रं स्पृशद्भिः । " दूरान्तिकार्थेभ्यो द्वितीया च " इति चकारात्पञ्चमी । रजसां कणैः ( धूलिलेशैः ) । महीं क्षियते ईष्टे इति महीक्षित् । तस्य । तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम् ( तीर्थे पुण्यक्षेत्रे यज्ञे वा अभिषेकः स्नानं तस्माज्जातां ) । शुद्धिम् ( नैर्मल्यं ) आदधाना कुर्वाणा । एतेन वायव्यं स्नानमुक्तम् । उक्तं च मनुना—" आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम् । आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् " इति ।

---

83. Her colour was reddish yellow, like that of a new leaf, and she bore a circle of white hair on her forehead, which gave her the appearance of the twilight hour, adorned with the newly rising moon.

84. At the sight of her young the warm milk from the teats of her full udder flowed out in streams, soaking the earth, and having greater sanctifying effects than the अवभृथ ablutions during a sacrificial ceremony.

85. The dust raised by her feet settled down upon the person of the monarch and gave all the purification that he could otherwise obtain by bathing in sacred places of pilgrimage.

---

83. Between 82-83 B. D. E. and Vija. read " ताम्रां ललाटजां रेखां बिभ्रती सा सितेतरां । संध्या प्रातिपदेनेव प्रतिभिन्ना हिमांशुना. " ( D. द्युतिभिन्ना for प्रतिभिन्ना. Vija. रेखां for रेखां

84. D. and Su., क्षितिं for भुवं; प्रस्रवेण for प्रस्नवेन; D. °प्रवर्तिनी for °प्रवर्तिना; E. वत्सालोभ° for वत्सालोक°.

85. A. B. C. E. Châ, Din. Vija. and Su., तीर्थाभिषेकजां शुद्धिं. D. and Va., तीर्थाभिषेकसंशुद्धिम्; A. महीक्षितः D. Vija. and Va. महीभृतः B. C. E. Châ Din. and Su. महीपतेः.

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥
अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥
वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥
प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९
वधूर्भक्तिमती चैनामर्चितामातपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

८६. निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वशिष्ठः । पुण्यं [ मनोज्ञं पुण्यावहं वा—चा० ] दर्शनं यस्यास्तां तां धेनुं दृष्ट्वा । आशंसितं मनोरथः । नपुंसके भावे क्तः । तत्रावन्ध्यं सफलं प्रार्थनं यस्य स तम् । अवन्ध्यमनोरथमित्यर्थः । याजयितुं योग्यं याज्यं ( यजमानं ) पार्थिवं पुनरब्रवीत् । [ ननु अभीष्टसिद्धेरुत्पत्स्यमानत्वादिदानीं कथमाशंसितं वंध्यामिति । अत्यासन्नसिद्धत्वेनोक्तत्वान्न दोषः—चा० ] ।

८७. हे राजन्नात्मनः कार्यस्य सिद्धिम् ( मनोभीष्टसिद्धिं ) अदूरवर्तिनीं शीघ्रभाविनीं विगणय विद्धि । यद्यस्मात्कारणात्कल्याणी मङ्गलमूर्तिः । " बह्वादिभ्यश्च " इति ङीप् । इयं धेनुर्नाम्नि कीर्तिते कथिते सत्येवोपस्थिता ( संप्राप्ता ) ।

८८. वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन् । इमां गां ( धेनुं ) शश्वत्सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव । कर्तुः । अनुगमनेनानुसरणेन । अभ्यसनेनानुष्ठातुरभ्यासेन विद्यामिव । प्रसादयितुं प्रसन्नां कर्तुमर्हसि ( योग्योभवसि ) । गवानुसरणप्रकारमाह—

८९. अस्यां नन्दिन्यां प्रस्थितायां ( गतायां त्वमपि अस्याः पृष्ठतः ) प्रतिष्ठेथाः प्रयाहि । "समवप्रविभ्यः स्थः " इत्यात्मनेपदम् । स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु । तिष्ठेत्यर्थः । निषण्णायामुपविष्टायां निषीदोपविश । विध्यर्थे लोट् । पीतमम्भः ( जलं ) यया तस्यां पीताम्भसि सत्यामपः ( तोयं ) पिबेः पिब । [ अथ पत्न्याः परिचर्याप्रकारमाह—चा० ] ।

९०. वधूर्जाया च भक्तिमती प्रयता सती गन्धादिभिरर्चितामेनां गां प्रातरा तपोवनात् । ( तपोवनपर्यन्तं )।

---

86. The holy sage, who was skilled in reading the meanings of signs and omens, could at once see that the blessed cow's opportune arrival boded the speedy fulfilment of the desire of his disciple, who was worthy of sacrifices being done for him, and thus addressed the latter.

87. Depend upon it, O King, the fruition of your desires is close at hand ; for at the very mention of her name as it were, this blessed cow has thus made her appearance.

88. As one has to acquire learning by constant application and self-denial, so you should try to propitiate this divine cow, by constantly waiting upon her, and by following her,——living all the time upon the vegetable products of the forest.

89. You are to move when she moves, to stand when she stands, to sit down when she does the same, and to drink water, only after she has assuaged her thirst.

90. And this our self-subdued daughter-in-law, should also follow her after being worship-

---

86. B. and Vija. तपोधनः for तपोनिधिः D. °पार्थिवं for °प्रार्थनं E. अवध्यं for अवंध्य°
88 D. °वृत्ति for वृत्तिः; सम्यगाराधनेन for आत्मानुगमनेन.
89. B. C. E. Châ. Din. Va. Vija. and Su., स्थानमाचरेः for स्थितिमाचरेः.
90. D. E. Châ. Din. and Su. प्रयातां for प्रयता.

इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥
तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२ ॥
अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ॥ ९३ ॥
सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।
कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥ ९४ ॥

आङ् मर्यादायाम् । पदद्वयं चैतत् । अन्वेत्वनुगच्छतु । सायमपि प्रत्युद्व्रजेत्प्रत्युद्गच्छेत् । विध्यर्थे लिङ् ।

९१. इत्यनेन प्रकारेण त्वमा प्रसादात्प्रसादपर्यन्तम् । " आङ् मर्यादाभिविध्योः " इत्यस्य वैभाषिकत्वादसमासत्वम् । अस्या धेनोः परिचर्यापरः शुश्रूषापरो भव । ते तव अविघ्नं विघ्नस्याभावोऽस्तु । " अव्ययं विभक्ति–" इत्यादिनार्थाभावेऽव्ययीभावः । पितेव पुत्रिणां सत्पुत्रवताम् । प्रशंसायामिनिप्रत्ययः । धुर्यग्रे स्थेयास्तिष्ठेः । [ यथान्यः पुत्रवान् भारं वहति तथा त्वमपि भूयाः इत्यर्थः । त्वया यथा त्वं पिता पुत्रवांस्तथा त्वमपि भूयाः इति–चा० ] । आशीरर्थे लिङ् । " एर्लिङि " इत्याकारस्यैकारादेशः । त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः ।

९२. देशकालज्ञः । देशोऽग्निसंनिधिः । कालोऽग्निहोत्रावसानसमयः । विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतमिति जानन् । अत एव प्रीतिमान् ( सानन्दः ) शिष्योऽन्तेवासी राजा सपरिग्रहः सपत्नीकः । " पत्नीपरिजनादानमूलशापाः परिग्रहाः " इत्यमरः । आनतो विनयनम्रः सन् । शासितुर्गुरोरादेशमाज्ञां तथेति प्रतिजग्राह स्वीचकार । [ देशकालत्वेन गोरक्षणप्रवृत्तिकारणत्वं सूच्यते–चा० ] ।

९३. अथ प्रदोषे रात्रौ दोषज्ञो विद्वान् । " विद्वान्विपश्चिद्दोषज्ञः " इत्यमरः । सूनृतवाक्सत्यप्रियवाक् । " प्रियं सत्यं च सूनृतम् " इति हलायुधः । स्रष्टुः सूनुर्ब्रह्मपुत्रो मुनिः ( वशिष्ठः ) । अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति । ऊर्जितश्रिय ( ऊर्जिता प्रबला श्रीर्यस्य तं तथोक्तं) विशांपतिं मनुजेश्वरम् । " द्वौ विशौ वैश्यमनुजौ " इत्यमरः । संवेशाय निद्रायै । " स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि " इत्यमरः । विससर्जाज्ञापयामास ।

९४. कल्पवित् ( कल्पं शास्त्रं वेत्तीति कल्पवित् । " कल्पश्च प्रभवे न्याये शास्त्रे ब्रह्मविधाविति " इति विश्वः ) । व्रतप्रयोगाभिज्ञो मुनिः । तपःसिद्धौ सत्यामपि । तपसैव राजयोग्याहारसंपादनसामर्थ्ये सत्यपीत्यर्थः । नियमापेक्षया तदाप्रभृत्येव व्रतचर्यापेक्षया । अस्य राज्ञो वन्याम् ( वनेसाधुर्वन्या तां तथोक्तां ) एव । संविधीयतेऽनयेति संविधाम् कुशादिशयनसामग्रीम् । " आतश्चोपसर्गे " इतिकप्रत्ययः । अकर्तरि च कारके

ped in the morning, with every mark of devotion, up to the border of the grounds of this hermitage, and should also go up to that point to receive her upon her return in the evening.

91. Go on attending upon her in this wise, till she is propitiated. May your desires be crowned with success, and may you stand at the head of happy mortals, favoured with worthy children.

92. The King and the queen, who knew the time and the place, received, in a spirit of love and humility, the instructions of their holy preceptor.

93. After this the learned son of Creator, truthful and agreeable in words, bade the lord of men of distinguished fortune to retire for the night.

94. Though the sage, by reason of his great proficiency in holy asceticism, had the power to provide comforts worthy of his royal guests, yet looking to the necessity of their exercising

91. B. C. E. Va. Vija. and Su., भूयाः for स्थेयाः.
93. A. D. E. उदितश्रियं for ऊर्जितश्रियं.

निर्दिष्टां कुलपतिना स पर्णशालामध्यस्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां संविष्टः कुशशयने निशां निनाय ९५

# अथ द्वितीयः सर्गः

——ooo——

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देरविन्दासनसुन्दरि त्वाम् ॥

संज्ञायाम् " इति कर्माद्यर्थत्वम् । कल्पयामास संपादयामास । [ यद्यपि तपोमाहात्म्यान्नानाविधानि भक्ष्यभोज्यानि सुकराणि तथापि शास्त्रप्रतिपादितप्रयोगाभिज्ञो मुनिर्भूपस्य व्रतविषयनियमार्थं वन्यामेव वृत्तिं कृतवानिति तात्पर्यम्–चा० ] ।

९५. स राजा कुलपतिना ( कुलं मुनिसमुदायः तस्य पतिः तेन तथोक्तेन ) मुनिकुलेश्वरेण वशिष्ठेन निर्दिष्टां ( दर्शितां ) पर्णशालाम् ( पर्णकुटीम् ) अध्यास्याधिष्ठाय । तस्यामधिष्ठानं कृत्वेत्यर्थः । "अधिशीङ्–" इत्यादिनाधारस्य कर्मत्वम् । कर्मणि द्वितीया । प्रयतो नियतः परिग्रहः पत्नी द्वितीयो यस्येति स तथोक्तः । कुशानां शयने । [ कुशैर्दर्भैः परिकल्पितं शयनं तस्मिन् । शाकपार्थिवादिसमासः–चा० ] । संविष्टः सुप्तः सन् । तस्य वशिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितं ( ज्ञापितं ) अवसानं ( विरामः ) यस्यास्तां निशां निनाय गमयामास । अपररात्रेऽध्ययने मनुः—" निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् " । " न चापररात्रमधीत्य पुनः स्वपेत्" इति गौतमश्च । प्रहर्षणीवृत्तमेतत् । तदुक्तम्– " म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम् " । इति श्री महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये वशिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः ।

१. अथ निशानयनानन्तरं यशोधनः ( यशः कीर्तिरेव धनं द्रविणं यस्य स तथोक्तः ) प्रजानामधिपः प्रजेश्वरः ( दिलीपः ) प्रभाते प्रातःकाले जायया सुदक्षिणया । प्रतिग्राहयित्र्या । प्रतिग्राहिते स्वीकारिते गन्धमाल्ये ( चन्दनपुष्पस्रजादि ) यया सा जायाप्रतिग्राहितगन्धमाल्या । तां तथोक्ताम् । पीतं पानमस्यास्तीति पीतः । पीतवानित्यर्थः । " अर्शआदिभ्योऽच् " इत्यच्प्रत्ययः । " पीता गावो भुक्ता ब्राह्मणाः " इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धो वत्सो यस्यास्तामृषेर्धेनुं वनाय वनं गन्तुम् । " क्रियार्थोपपद–" इत्यादिना चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात्सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयम् । तथाहि श्रुतिः—" पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः " इति । यशोधनः इत्यनेन पुत्रवत्ताकीर्तिलोभाद्राजानर्हे गोरक्षणे प्रवृत्त इति गम्यते । अस्मिन्सर्गे वृत्तमुपजातिः—" अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः " इति ।

---

abstinence, as preparatory to the life they were about to lead, ordered for them only such food and such bedding as suited a forest life.

95. He, with his pure wife as his second (companion), having occupied a hut made of leaves, pointed out to him by the lord of the clan, and lying on a rude carpet made of Kusa grass, passed the night the close of which was indicated to him by his ( Muni's ) disciples reading the Vedas.

1. Then in the morning the lord of the people, who valued his honour as a treasure set free the cow of the sage ( to go ) to a forest, whose young had had his fill of drink, and had then been tied to his post, and who had been made to accept sandle and flowers by his wife.

---

95. D. E. Din. and Chá., अनैषीत् for निनाय.

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ॥
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥
निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥
व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥
आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

२. पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः । "स्वैरिणी पांसुला" इत्यमरः । "सिध्मादिभ्यश्च" इति लच्प्रत्ययः । अपांसुलानां पतिव्रतानां धुरि अग्रे कीर्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी [ उक्तञ्च । "पतिं धर्मरतं पत्नी साध्वी शुश्रूषते तु या । नित्यं त्वनल्पहृदया धर्मपत्नीं तु तां विदुः" इति–चा०] । खुरन्यासैः ( खुराणां क्षेपणैः ) पवित्राः पांसवः (रजांसि) यस्य तम् । "रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" इत्यमरः । तस्या धेनोर्मार्गम् ( तपोवनपर्यन्तं )। स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव । अन्वगच्छदनुसृतवती च । यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससारेत्यर्थः । धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात् । पांसुलपथप्रवृत्ताप्यपांसुलानामिति विरोधालंकारो ध्वन्यते ।

३. दयालुः कारुणिकः । "स्याद्दयालुः कारुणिकः" इत्यमरः । "स्पृहिगृहि–" इत्यादिनालुच्प्रत्ययः । यशोभिः सुरभिर्मनोज्ञः [ प्रसिद्धः श्रेष्ठो वा–चा० ] । "सुरभिः स्यान्मनोज्ञेऽपि" इति विश्वः । राजा तां दयितां निवर्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम् । धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः स्तनाः । "स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः । अपयोधराः पयोधराः संपद्यमानाः पयोधरीभूताः । अभूततद्भावे च्विः । "कुगतिप्रादयः" इति समासः । पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम् । "अनेकमन्यपदार्थे" इत्यनेकपदार्थग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः । गोरूपधरां ( गोरूपमाकारस्तस्य धरा तां तथोक्तां) उर्वीमिव । जुगोप ररक्ष । भूरक्षणप्रयत्नेनेव ररक्षेति भावः । धेनुपक्षे पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्ताम् । दुग्धतिरस्कृतसागरामित्यर्थः ।

४. व्रताय ( गोपालनरूपव्रतं नियमः तस्मै ) धेनोरनुचरेण । न तु जीवनार्थेनेति भावः । तेन दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निवर्तितः । शेषत्वं सुदक्षिणापेक्षया । कथं तर्ह्यात्मरक्षणमत आह–न चेति । तस्य दिलीपस्य शरीररक्षा च अन्यतः पुरुषान्तरान्न । कुतः । हि यस्मात्कारणान्मनोः । प्रसूयत इति प्रसूतिः संततिः स्ववीर्यगुप्ता स्ववीर्येणैव रक्षिता । न हि स्वनिर्वाहकस्य परापेक्षेति भावः ।

५. सम्राण्मण्डलेश्वरः । "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्"

---

2. The lawful wife of the lord of men, who deserved to be ranked at the head of chaste women, followed her path, the dust on which was purified by the prints of her hoofs, as Smriti follows the meaning of Sruti.

3. The compassionate King, who appeared charming on account of his pure fame, having persuaded his beloved spouse to return, took the sole charge of protecting the daughter of Surabhi, who looked, as if she was the earth incarnate, with her udder and four teats representing the four oceans.

4. That follower of the holy cow had now entered upon a new life of spiritual discipline, accordingly he dismissed the small residue of attendants. He needed no guards to protect his body ; for the princes of the line of Manu, were guarded by their own powers.

5. That Universal emperor tried to propitiate her, now by bringing her palatable morsels of grass, now by gently rubbing her sides, now by keeping the gnats off from her body, and now by allowing her unrestrained liberty to graze as she pleased.

---

5. B. F. अव्याहतस्वैरगतैः. C. अभ्याहतस्वैरगतैः for अव्याहतैः स्वैरगतैः.

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥
स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥
लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥

इत्यमरः । स राजा । आस्वादवद्भी रसवद्भिः स्वादयुक्तैरित्यर्थः । तृणानां कवलैर्ग्रासैः । " ग्रासस्तु कवलार्थकः " इत्यमरः । कण्डूयनैः खर्जनैः । ( गात्रकर्षणैरित्यर्थः ) । दंशानां वनमक्षिकाणां निवारणैः । " दंशस्तु वनमक्षिका " इत्यमरः । अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च । तस्या धेन्वाः समाराधनतत्परः शुश्रूषासक्तोऽभूत् । तदेव परं प्रधानं यस्येति तत्परः । " तत्परौ प्रसितासक्तौ " इत्यमरः । ( इत्थं स राजा प्रजाभिलाषी सन् तस्या नन्दिन्याः सेवादक्षो बभूव ) ।

६. भूपतिस्तां गां स्थितां सतीं स्थितः सन् । स्थितिरूर्ध्वावस्थानम् । प्रयातां प्रस्थितामुच्चलितः प्रस्थितः । निषेदुषीं निषण्णाम् । उपविष्टामित्यर्थः । " भाषायां सदवसश्रुवः " इति क्वसुप्रत्ययः । " उगितश्च " इति ङीप् । आसनबंधे उपवेशने धीरः स्थितः । उपविष्टः सन्नित्यर्थः । जलमाददानां पिबन्तीं जलाभिलाषी । पिबन्नित्यर्थः । इत्थं छायेवान्वगच्छदनुसृतवान् । [ छायाप्युक्तलक्षणा लौकिकी उपमा तेन भेदोपि नास्ति । यदाह वामनः न लिंगवचने भेदो लौकिक्यामुपमायां—चा० ] ।

७. न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेनानुमिताम् ( ज्ञातां ) । सर्वथा राजैवायं भवेदित्यूहितां राजलक्ष्मीं दधानः स राजा । अनाविष्कृतदानराजिः ( अनाविष्कृता अप्रकटिता दानराजिर्मदलेखा यस्य स तथोक्तः ) बहिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः । [ उक्तं च । भद्रो मन्दो मृगश्चेति संकीर्णश्चेति जातयः । चतस्रः करिणां तासां भद्रोन्तर्मद एव यः—व० ] । तथाभूतो द्विपेन्द्र इव । आसीत् ।

८. लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिताः (बद्धाः) ये केशास्तैरुपलक्षितः। " इत्थंभूतलक्षणे " इति तृतीया । स राजा । अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा सन् । " धनुषश्च " इत्यनङादेशः । मुनिहोमधेनो रक्षापदेशाद्रक्षणव्याजात् । वन्यान्वनेभवान्दुष्टसत्त्वान्दुष्टजन्तून् । ( सिंहव्याघ्रादीनित्यर्थः ) । " द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु " इत्यमरः । विनेष्यन्शिक्षयिष्यन्निव । दावं वनम् । " वने च वनवह्नौ च दवो दाव इहेष्यते " इति यादवः । विचचार । वने चचारेत्यर्थः । " देशकालाध्वगन्तव्यः कर्मसंज्ञा ह्यकर्मणाम् " इति दावस्य कर्मत्वम् । विसृष्टेत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया प्रमादयोऽपि राजोपचारं चक्रुरित्याह—

6. He stopped only when she stopped, moved only when she was in motion, lay down only (lit: sticking fast to the tie of his seat) when she was lying at her ease, and thought of drinking water only when she assuaged her thirst,—thus that lord of the earth followed the sacred cow, as the shadow of a man follows his body

7. Though he had laid aside all the *insignia* of his royal office, yet a circle of ineffable glory always surrounded him, and gave him an appearance suited to that office, *consequently*, in this thing he resembled a proud elephant in whom the conditions of madness were all ready within, but whose temples had not yet commenced to stream out the maddening sweat

8 His hair were tied together with strings made of tendrils of wild creepers and he in his

7. B C. F. Va. and Su., संन्यस्तचिह्नाम् for स न्यस्तचिह्नाम्; B. C. Va. and Su. राज्यलक्ष्मीम् for राजलक्ष्मीम्.

8. A. C. D. Chà. Din. Va and Su, रक्षापदेशात् B. F. रक्षोपदेशात्; A. B. D. F. Chà. Din. and Va., मुनि°. C. F. and Su., गुरु°.

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥
मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥
धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

९. विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य । पाशभृता वरुणेन समस्य तुल्यस्य । [ असतो नियमनात्—चा० ] । " प्रचेता वरुणः पाशी " इत्यमरः । अनुभावोऽनेन सूचितः तस्य राज्ञः पार्श्वयोर्द्रुमाः ( निकटवृक्षाः ) । उन्मदानामुत्कटमदानां वयसां खगानाम् । " खगबाल्यादिनोर्वयः " इत्यमरः । विरावैः शब्दैः । आलोकस्य शब्दं वाचकमालोकयति शब्दम् । जयशब्दमित्यर्थः । " आलोको जयशब्दः स्यात् " इति विश्वः । [ आलोकस्य दर्शनस्य शब्दः आलोकशब्दस्तं जय जीवेत्यालोकशब्दः । जय जय महाराज प्रभो स्वामिन् पादमवधार्यताम् इति आलोकशब्दः—व० ] । उदीरयामासुरिवावदन्निव । [ एतेन सेवाचाटूक्तिः—चा० ] । इत्युत्प्रेक्षा । ( तस्य महानुभावस्य एकाकिनो वने विचरतः जयति जयति देवः इत्येवंविधं बन्दिकृत्यं मदकलपटुपक्षिकूजितैरेव संपादितमित्यर्थः ) ।

१०. मरुत्प्रयुक्ता वायुना प्रेरिता बाललता आरात्समीपेऽभिवर्तमानम् । " आराद्दूरसमीपयोः " इत्यमरः । मरुतो वायोः सखा मरुत्सखोऽग्निः । स इवाभातीति मरुत्सखाभम् । [ यद्वा । मरुतां देवानां सखा इन्द्रः तत्तुल्यं तेजो यस्य तं तथोक्तं—चा० ] । " आतश्चोपसर्गे " इति कप्रत्ययः । अर्च्यं पूज्यं तं दिलीपं प्रसूनैः पुष्पैः । पौरकन्याः पौराश्च ताः कन्या आचारार्थैः ( मंगलार्थैः ) लाजैराचारलाजैरिव । अवाकिरन् । ( अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः इत्येव समार्थः श्लोकांशः ) । तस्योपरि निक्षिप्तवत्य इत्यर्थः । [ पुरप्रवेशे हि राजा कुमारीभिः ( लाजाप्रक्षेपणैः ) अवकीर्यते इत्याचारः—व० ] । सखा हि सखायमागतमुपचरतीति भावः । [ युक्तं मरुत्सखस्य मंगलप्रेरणमिति च्छाया—चा० ] ।

११. धनुर्भृतः ( धनुश्चाप बिभर्तीति तस्य तथोक्तस्य ) अप्यस्य राज्ञः । एतेन भयसंभावना दर्शिता । तथापि विशङ्कैर्निर्भीकैरन्तःकरणैः ( चित्तैः ) । कर्तृभिः । दयया कृपारसेनार्द्रो भावोऽभिप्रायो यस्य तद्दयार्द्रभावं तदाख्यातम् । दयार्द्रभावमेतदित्याख्यातमित्यर्थः । " भावः सत्वस्वभावाभिप्रायचेष्टात्मजन्मसु " इत्यमरः । [ चित्तमेव कथयत्यनुरागमिति—चा० ] । तथाविधं वपुर्विलोकयन्त्यः ( पश्यन्त्यः ) हरिण्यः ( मृग्यः ) अक्ष्णां ( नेत्राणां ) प्रकामविस्तारस्यात्यन्तविशालतायाः फलमापुः । [ अतिसौन्दर्यात्—चा० ] । " विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं च " इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ।

---

forest rambles always carried his bow ready for use. It seemed as if the protection of the Muni's cow was a mere pretext, his real motive being the disciplining of the cruel inhabitants of the forest.

9. As he walked alone and unattended, strong and muscular like king Varuna, the trees on both sides of the road acted the part of criers, with the chorus of thousands of their elated feathery visitors.

10. And the tender creepers of the forest, moved gently by the breeze, honoured him, who was worthy of adoration and lustrous like fire (lit. the friend of wind) as he stood before them, with showers of their flowers;—thus acting the part of the young girls of his capital, who always welcomed him back with showers of the customary *Lajas* (the fried-grain-rice).

11. Though he always carried a bow about him, yet his manners, which were softened by compassion, inspired such a confidence in the minds of the female deer, that they quietly (lit. with fearless mind) viewed him as he passed——thus obtaining a sufficient reward for having got those beautiful large eyes of theirs.

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥
पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥
शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥ १४ ॥
संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतंगस्य मुनेश्च धेनुः ॥ १५ ॥

१२. स दिलीपो मारुतपूर्णरन्ध्रैः ( मारुतेन समीरणेन पूर्णानि पूरितानि रन्ध्राणि छिद्राणि येषां तैः ) अत एव कूजद्भिः स्वनद्भिः । कीचकैर्वेणुविशेषैः । [ सच्छिद्रवंशैः—चा० ]। " वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः " इत्यमरः । वंशः सुषिरवाद्यविशेषः । " वंशादिकं तु सुषिरम् " इत्यमरः । आपादितं संपादितं वंशस्य कृत्यं कार्यं यस्मिन्कर्मणि तत्तथा । कुञ्जेषु लतागृहेषु । " निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे " इत्यमरः । वनदेवताभिरुद्गीयमानमुच्चैर्गीयमानं स्वं ( स्वकीयं ) यशः शुश्राव श्रुतवान् । [ राज्ञो महानुभावतया वनदेवता यशो गायन्ति स्म इत्यर्थः—चा० ] ।

१३. गिरिषु निर्झराणां वारिप्रवाहाणाम् । " वारिप्रवाहो निर्झरो झरः " इत्यमरः । तुषारैः सीकरैः । " तुषारौ हिमसीकरौ " इति शाश्वतः । पृक्तः सपृक्तः ( संमीलितः ) अनोकहानां वृक्षाणामाकम्पितानीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीत्याकम्पितपुष्पगन्धी । ईषत्कम्पितपुष्पगन्धवान् । एवं शीतो मन्दः सुरभिः पवनो वायुरनातपत्रं व्रतार्थं परिहृतच्छत्रम् । अत एवातपक्लान्तं ( घर्मखिन्नं ) आचारेण पूतं शुद्धं तं नृपं सिषेवे ( सेवितवान् ) । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः । [ वृक्षादयो राजोपचारं चक्रुः—चा० ] ।

१४ गोप्तरि ( रक्षके ) तस्मिन्राज्ञि वनं ( काननं ) गाहमाने प्रविशति सति वृष्ट्या ( मेघवर्षणेन )। विनापि । दवाग्निर्वनाग्निः । " दवदावौ वनानलं " इति हैमः । शशाम ( शान्तो बभूव ) । फलानां पुष्पाणां च वृद्धिः । विशेष्यत इति विशेषा । अतिशयितासीत् । कर्मार्थे घञ्प्रत्ययः । सत्त्वेषु जन्तुषु मध्ये । " यतश्च निर्धारणम् " इति सप्तमी । अधिकः प्रबलो व्याघ्रादिरूनं दुर्बलं हरिणादिकं न बबाधे [ नावधिष्ट । एतेन राज्ञो महापौरुषत्वमुक्तम्—सु० ] ।

१५. पल्लवस्य रागो वर्णः पल्लवरागः । " रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु " इति शाश्वतः ।

12. As he passed he heard the sweet musical tunes issuing from the natural bamboo holes, filled with air, as if it were the fairies of the forest, singing loudly in notes of excellent music, his own fair fame in bowers of creepers.

13. He who was holy by his observance of devotion had no umbrella to cover his head, but the soft cooling breeze, surcharged with the particles of water from the hill-streams, and scented with the fragrance of many flowers gently shaking on the trees, mitigated considerably the effects of the heat of the sun.

14. When he entered the forest as its protector, the wild wood-land-fire become extinguished, even without any shower of rain, the trees began to blossom and to bear fruits in abundance; and the stronger amongst the animals no longer tyrannised over the weaker ones.

15. After having by their rambles purified the spaces intervening between the cardinal points,

13. B. D. °कम्पनपुष्पगन्धी. C. Chà. Din. Va. and Su., कम्पितपुष्पगन्धिः We with A. and F.

14. B. C. F. Chà. Din. Va. and Su., विशेषात् for विशेषा; D. F. वने for वनम्—We according to A. supported by Chà. Din. Va. and Su.

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥
स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥
आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।
उभावलंचक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

स इव ताम्रा पल्लवरागताम्रा पतंगस्य सूर्यस्य प्रभा कान्तिः । " पतगः पक्षिसूर्ययोः " इति शाश्वतः । मुनेः (वशिष्ठस्य) धेनुश्च । दिगन्तराणि दिशामवकाशान् । " अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये " इत्यमरः । सञ्चारेण (स्वैरगमनेन) पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय । धेनुपक्षे आलयाय च । गन्तुं प्रचक्रमे ।

१६. मध्यमलोकपालो भूपालः । [ भुवो मध्यमत्वं तु स्वर्गपातालापेक्षया । उक्तं च । वासवदत्तायां "अवततार मध्यमलोकमंशुमाली " इति—चा॰ ] । देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्यास्तां धेनुमन्वगनुपदं ययौ । " अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् " इत्यमरः । सतां मतेन सद्भिर्मान्येन । " गतिबुद्धि " इत्यादिना वर्तमाने क्तः । " क्तस्य च वर्तमाने " इति षष्ठी । तेन राज्ञोपपन्ना युक्ता सा धेनुः । सतां मतेन विधिनानुष्ठानेनोपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धास्तिक्यबुद्धिरिव । बभौ च ।

१७. स राजा । पल्वलेभ्योऽल्पजलाशयेभ्यः उत्तीर्णानि निर्गतानि वराहाणां (शूकराणां) यूथानि कुलानि येषु तानि । बर्हाण्येषां सन्तीति बर्हिणा मयूराः । "मयूरो बर्हिणो बर्ही " इत्यमरः । फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः । आवासवृक्षाणां (रात्रिस्थितितरूणां) उन्मुखाः (अभिमुखाः) बर्हिणाः (मयूराः) येषु तानि श्यामायमानानि वराहबर्हिणादिमलिनिम्नाश्यामानि । श्यामानि भवन्तीति श्यामायमानानि (हरितीभूतानि)। " लोहितादिडाज्भ्यः क्यष् " इति क्यष्प्रत्ययः । " वा क्यषः " इत्यात्मनेपदं शानच् । मृगैः (हरिणैः) अध्यासिता अधिष्ठिताः शाद्वलाः (नवतृणानि) येषु तानि । शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः । " शाद्वलः शादहरिते " इत्यमरः । " शादः कर्दमशष्पयोः " इति विश्वः । " नडशादाड्ड्वलच् " इति ड्वलच्प्रत्ययः । वनानि पश्यन्ययौ ।

१८ गृष्टिः सकृत्प्रसूता गौः । " गृष्टिः सकृत्प्रसूता गौः " इति हलायुधः । नरेन्द्रश्च । उभौ यथाक्रमम् । आपीनमूधः । " ऊधस्तु क्लीबमापीनम् " इत्यमरः । आपीनस्य भारोद्वहने प्रयत्नात्प्रयासात् । वपुषो गुरुत्वादाधिक्याच्च । अञ्चिताभ्यां चारुभ्यां गताभ्यां गमनाभ्यां तपोवनादावृत्तः पन्थास्तं तपोवनावृत्तिपथम् (तपोवनागमनमार्ग) । " ऋक्पू—" इत्यादिना समासान्तोऽप्रत्ययः । अलञ्चक्रतुर्भूषितवन्तौ ।

the cow of the Muni and the light of the sun which were (both) red as the colour of a fresh sprout, bent their course towards home at the close of the day

16. The protector of the intermediate world followed the steps of the sacred animal, who was such an invaluable help towards the Muni's discharging his duties to his gods, to his ancestors and to his guests; and when thus following he who was honoured by the good looked like practical piety following devotion.

17. By that time the herds of the wild boars were leaving the water of the muddy ponds, the peacocks were returning to their accustomed perching trees for nightly shelter; and the deer were lying down in their accustomed grassy plots, and on the whole scene the sable mantle of night was gently falling, the King enjoyed the sight as he passed

18. On account of the labour of bearing the burden of the udders the cow which had only one calf, and the king by reason of his bodily heaviness both decorated the way by which they returned from the sacred forest with their graceful gaits

17. F. °शाड्वलानि for °शाद्वलानि.

18. Chà. notices उरसः for वपुषः.

वशिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥
पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव संध्या ॥ २० ॥
प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥
वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥

१९. वशिष्ठधेनोरनुयायिनमनुचरं वनान्तादावर्तमान प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषेषु ( अक्षिस्पन्देषु ) अलसा मन्दा पक्ष्मणां पङ्क्तिः ( अक्षिरोमाली ) यस्याः सा । [ " पक्ष्म स्यान्नेत्ररोमाणीति " हैमः कोषः—चा० ] । निर्निमेषासतीत्यर्थः । लोचनाभ्याम् । करणाभ्याम् । उपोषिताभ्यां ( कृतव्रताभ्यां ) इव । उपवासो भोजननिवृत्तिः । तद्वद्भ्यामिव । वसतेः कर्तरिक्तः । पपौ [सादरमद्राक्षीत् । सादरमालोकनं पानमुच्यते—चा० ] । यथापोषितोऽतितृष्णया जलमधिकं पिपासति तद्वदतितृष्णयाधिकं व्यलोकयदित्यर्थः ।

२०. वर्त्मनि ( मार्गे ) पार्थिवेन पृथिव्या ईश्वरेण । " तस्येश्वरः " इत्यञ्प्रत्ययः । पुरस्कृताग्रतः कृता । धर्मस्य पत्नी धर्मपत्नी । धर्मार्थपत्नीत्यर्थः । अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । पार्थिवस्य धर्मपत्न्या ( सुदक्षिणया ) प्रत्युद्गता ( संमुखं प्राप्ता ) सा धेनुस्तदन्तरे तयोर्दम्पत्योर्मध्ये । दिनक्षपयोर्दिनरात्र्योर्मध्यगता ( मध्ये स्थिता ) संध्येव । [ धेनोरपि लोहितत्वात् । समासे लिंगभेदात्प्रतीतेर्दिनशब्दस्य नोपमादोषः । यदाह । इष्टः पुंनपुंसकयोः प्रायेणेति—चा० ] । रराज शुशुभे । ( तयोर्दम्पत्योर्मध्यं गता सा मुनिहोमधेनुः पल्लवस्निग्धपाटलवर्णतया दिवसरात्र्योर्मध्यगता सध्येव रेजे ) ।

२१. अक्षतानां पात्रेण सह वर्तेते इति साक्षतपात्रौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनीं (पयो दुग्धमस्याः अस्तीति पयस्विनी तां तथोक्तां ) प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य (प्रदक्षिणां दत्त्वा ) प्रणम्य ( नत्वा ) च । तस्या धेन्वा विशालं ( विस्तीर्णं ) शृङ्गातरं शृङ्गमध्यम् । अर्थसिद्धेः कार्यसिद्धेर्द्वार प्रवेशमार्गमिव । [ तदर्चने पुत्रलाभभावात्—चा० ] । आनर्चार्चयामास । अर्चतेर्भौवादिकाल्लिट् ।

२२. सा धेनुर्वत्सोत्सुकापि वत्से उत्कण्ठितापि स्तिमिता निश्चला सती सपर्या ( राज्ञीकृतां ) पूजां प्रत्यग्रहीत् ( स्वीचकार ) इति हेतोस्तौ दपती ननन्दतुः । पूजास्वीकारस्यानन्दहेतुत्वमाह—भक्त्येति । पूज्येष्व-

---

19. As the King returned from the forest-skirts, along with (lit : following) the cow of Vasistha, his loving and beloved queen drank him, as it were, with her wistful (lit : the rows of eyelashes were slow in twinkling) and long-fasting eyes.

20. Placed in front by the ruler of the earth on the way and met in advance by the lawful consort of the king, that cow in the intervening space between them looked very much like the twilight coming between day and night.

21. सुदक्षिणा carrying in her hands a tray full of अक्षता suited for a ceremony of welcome, went round the cow, who yielded abundant milk, as a mark of respect, bowed and worshipped the spacious portion of her head between her two horns, which was the gate, as it were, to the fulfilment of her wishes.

22. Though she was anxious to meet her young, yet with patience she accepted the worship offered to her ; whereupon the royal couple were exceedingly glad; for such marks of favour to a devotee, shown by a cow like that, betoken the speedy fulfilment of such a one's desire.

---

21. D. आत्मसिद्धेः for अर्थसिद्धेः.

**गुरोः सदारस्य निपीड्य पादौ समाप्य सांध्यं च विधिं दिलीपः ।**
**दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥**
**तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।**
**क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥**
**इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः ।**
**सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥**
**अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥**

नुरागो भक्तिः । तयोपपन्नेषु युक्तेषु विषये तद्विधानाम् । तस्या धेन्वा विधा इव विधा प्रकारो येषां तेषाम् । महतामित्यर्थः । प्रसादस्य ( प्रसन्नानुग्रहस्य ) चिह्नानि लिङ्गानि पूजास्वीकारादीनि पुरःफलानि । पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यत इत्यर्थः ।

२३. भुजोच्छिन्नरिपुः ( भुजाभ्यां बाहुभ्यां उच्छिन्नाः उन्मूलिता विनाशिता वा रिपवः शत्रवो येन स तथोक्तः ) दिलीपः सदारस्य दारैररुधत्या सह वर्तमानस्य गुरोः । उभयोरपीत्यर्थः । " भार्या जायाथ पुं भूम्नि दाराः " इत्यमरः । पादौ ( चरणौ ) निपीड्याभिवन्द्य । सांध्यं संध्यायां विहितं विधिमनुष्ठानं च समाप्य । दोहावसाने निषण्णामासीनां दोग्ध्रीं दोहनशीलाम् । " तृन् " इति तृन्प्रत्ययः । धेनुमेव पुनर्भेजे सेवितवान् । ( सभार्यस्य गुरोर्वशिष्ठस्य पादौ संगृह्य सांध्यं विधिं समाप्य चासौ नृपो भूयोपि तां दोहावसाने भूमौ निषण्णां गृष्टिं सिषेवे ) । दोग्ध्रीमिति निरुपपदप्रयोगात्कामधेनुत्वं गम्यते ।

२४. गोप्ता रक्षको गृहिणीसहायः ( गृहिणी एव सहायः यस्य सः ) पत्नीद्वितीयः सन् । उभावपीत्यर्थः। अन्तिके ( निकटे ) न्यस्ताः ( स्थापिताः ) बलयः प्रदीपाश्च यस्यास्तां तथोक्तां तां पूर्वोक्तां निषण्णां धेनुमन्वास्य अनुपविश्य क्रमेण सुप्ताम् ( निद्रागतां ) अनु अनन्तर संविवेश सुष्वाप । प्रातः सुप्तोत्थिताम् ( आदौ सुप्ता पश्चादुत्थिता तां तथोक्तां ) अनूदतिष्ठदुत्थितवान् । अत्रानुशब्देन धेनुराजव्यापारयोः पौर्वापर्यमुच्यते । क्रमशब्देन धेनुव्यापाराणामेव । इत्यपौनरुक्त्यम् । " कर्मप्रवचनीययुक्ते– " इति द्वितीया ।

२५. इत्थमनेन प्रकारेण प्रजार्थं संतानाय महिष्या सममभिषिक्तपत्न्या सह । " कृताभिषेका महिषी " इत्यमरः । व्रतं ( नियमं ) धारयतः ( पालयतः ) । महनीया पूज्या कीर्तिः ( यशः ) यस्य तस्य । [ क्लेशसहिष्णुत्वात्–चा० ]। दीनानामुद्धरणं दैन्यविमोचनम् । तत्रोचितस्य परिचितस्य तस्य नृपस्य । त्रयो गुणा आवृत्तयो येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्त दिनानि एकविंशतिदिनानि व्यतीयुः ।

२६. अन्येद्युरन्यस्मिन्दिने द्वाविंशे दिने । " सद्यः परुत्परारि– " इत्यादिना निपातनादव्ययम् । " अथाह्नाय पूर्वेद्युरित्यादौ पूर्वोत्तरापरात् । तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः " इत्यमरः । मुनिहोमधेनुः । आ-

23. After having bowed at the feet of his spiritual preceptor and his wife, and having finished his evening devotions, Dilipa, who had destroyed all his enemies with his own hands, once more waited upon the cow, who had by that time been milked, and was lying at her ease.

24. The protector and the queen ( lit · who had his consort for his companion), placed the spices and other offerings and the evening lamps close by the holy cow and waited till she was asleep, when they retired to their beds, waking up in the morning, only after she had risen from her slumber.

25. In this manner, King Dilipa, of adorable fame, who was the reliever of the distressed, lived with his noble queen in a state of strict observance of religious discipline for three weeks, in the hope of getting issue.

25. B. C. F. Chà. Din. Va. and Su., पालयतः for धारयतः.

सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥
तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥
स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥

त्मानुचरस्य भावमभिप्रायं दृढभक्तित्वम् । " भावोऽभिप्राय आशयः " इति यादवः । जिज्ञासमाना ज्ञातुमिच्छन्ती ( अर्थात् परीक्षितुकामा )। " ज्ञाश्रुस्मृदृशां सनः " इत्यात्मनेपदे शानच् । प्रपतत्यस्मिन्निति प्रपातः पतनप्रदेशः ( भृगुः । " प्रपातस्तु तटो भृगुः " इत्यमरः ) । गङ्गायाः प्रपातस्तस्यान्ते समीपे विरूढानि जातानि शष्पाणि बालतृणानि यस्मिंस्तत् । [ विरूढशष्पं तत्र गमनहेतुः—चा० ] । " शष्पं बालतृणं घासः " इत्यमरः । गौरीगुरोः ( गौर्याः पार्वत्याः गुरुः हिमाद्रिस्तस्य ) पार्वतीपितुर्गह्वरं गुहामाविवेश ।

२७. सा धेनुर्हिंस्रैर्व्याघ्रादिभिर्मनसापि दुष्प्रधर्षा ( धर्षितुमशक्या अनभिभाव्या ) दुर्धर्षेति हेतोरद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना । ( " ईक्षणं दर्शने दृष्टौ " इति विश्वः ) । नृपेणालक्षितम् ( अज्ञातं ) अभ्युत्पतनमाभिमुख्येनोत्पतनं यस्य स सिंहः । [ हिनस्ति मारयतीति सिंहः । तृहिहिंसिहिंसायामित्यस्य प्रयोगः । हिंसेर्वर्णविपर्ययः—चा० ]। तां धेनुं प्रसह्य हठात् । " प्रसह्य तु हठार्थकम् " इत्यमरः । चकर्ष । किलेत्यलीके ।

२८. गुहानिबद्धेन ( कन्दराभिप्रसृतेन ) प्रतिशब्देन प्रतिध्वनिना दीर्घम् । [ इत्यन्यचित्तस्यापि आकर्षणहेतुः—चा० ]। तस्या इदं तदीयम् । आक्रन्दितमार्तघोषणम् । आर्तेष्वापन्नेषु ( दुःखितेषु ) साधोर्हितकारिणो नृपस्य नगेन्द्रसक्तां ( हिमाचललग्नां ) दृष्टिम् । रश्मिषु प्रग्रहेषु । [ करणस्यैवाधिकरणविवक्षायां सप्तमी । यथोक्तं । व्याददाने चतुर्थी स्यात् । दर्शने कथनेपि च आदायकरणे योगे । सप्तमी कैश्चिदुच्यते—सु० ] । " किरणप्रग्रहौ रश्मी " इत्यमरः । आदायेव गृहीत्वेव । निवर्तयामास । [ यथा प्रग्रहैः कश्चित्पुरुषः घोटकादि अन्यतो यातमाकृष्य निवारयति तथा गोक्रन्दितं राज्ञो दृष्टिं निवारितवदिति भावः—चा० ]।

२९ धनुर्धरः स नृपः पाटलायां रक्तवर्णायां गवि ( धेनौ ) तस्थिवांसं स्थितम् । " क्वसुश्च " इति क्वसुप्रत्ययः । केसरिणं सिंहम् । सानुमतोऽद्रेः । धातोर्गैरिकस्य विकारो धातुमयी । ( प्राचुर्यार्थे मयट् ) । तस्यां ( गैरिकादिधातुप्रचुरायां ) अधित्यकायामूर्ध्वभूमौ । " उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका " इत्यमरः ।

26. On the following (i e twenty second) day, desirous of knowing how the King really felt towards her, the Munis cow, the source of his sacrificial offerings, entered a cave of the sire of Gauri ( i.e. the Himalayas) covered with long grass, growing on the sides of a cataract of the Gangâ.

27. The King was quite confident that the holy cow could not be attacked, even in thought, by any beasts of prey , consequently he was intently looking at the beauty of the mountain sceneries ; in the meantime a lion sprang upon her and seized her forcibly, before he could notice it.

28. Her lowing swollen by the echo arising from the caves, drew back the sight, rivetted on the king of mountains, of the king kind to the distressed, as if drawing it by means of reins (catching, as it were, in a noose of ropes )

29. That bow-man beheld the lion sitting upon the rosy cow like the full blossomed Lodhra tree on the table land of a mountain full of red metallic substance.

26. A. D. °निरूढ° for °विरूढ°; D. F. and Su., गुरुहोमधेनुः for मुनिहोमधेनुः.

28. A. B.D. Din. and Châ., °सक्ताम्. C. F. Va. and Su. न्यस्तां.; Châ. also notices this reading. F. has नगेन्दु° for नगेन्द्र°;

29. A. D. Din. and Châ., लोध्र°. B. C. F. Va. and Su., रोध्र°; A. B. C.

ततो मृगेंद्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषंगो नृपतिर्निषंगादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥
वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्तांगुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥
बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥ ३२ ॥

" उपाधिभ्यां त्यकन्नासन्नारूढयोः " इति त्यकन्प्रत्ययः । प्रफुल्लो विकसितस्तम् । 'फुल्ल विकसने' इति धातोः पचाद्यच् । [ सानुमतो ग्रहणेन पौनरुक्त्यं तथा च भट्टिकाव्ये " समुद्रोपत्यकां हैमी पर्वताधित्यकापुरी "—चा० ] । लोध्राख्यं द्रुममिव । [ केसरिपदेन प्रफुल्लत्वात्साम्यं—चा० ] । ददर्श ।

३०. ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी ( मृगेन्द्रवत् गन्तुं शीलमस्य सः ) सिंहगामी । शरणं रक्षणम् । " शरणं गृहरक्षित्रोः " इत्यमरः । " शरणं रक्षणे गृहे " इति यादवः । शरणे साधुः शरण्यः । ( शरणागतवत्सलः ) । " तत्र साधुः " इति यत्प्रत्ययः । प्रसभेन बलात्कारेणोद्धृताः ( उन्मूलिताः ) अरयः ( वैरिणः ) येन स नृपती राजा । [ एतेन सामर्थ्योक्तिः—चा० ] । जाताभिषङ्गो जातपराभवः सन् । [ अर्थाज्जाताभिमाननिकृतिः सन् उत्पन्नक्रोधः—सु० ] । " अभिषङ्गः पराभवः " इत्यमरः । वध्यस्य वधार्हस्य । " दण्डादिभ्यो यः " इति यप्रत्ययः । मृगेन्द्रस्य ( सिंहस्य ) वधाय ( नाशाय ) निषङ्गात्तूणीरात् । " तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः " इत्यमरः । शरमुद्धर्तुं ( निष्कासितुं ) ऐच्छत् ।

३१. प्रहर्तुस्तस्य वामेतरो दक्षिणः करः । नखप्रभाभिः ( करजप्रभाभिः ) भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि ( पक्षाणि ) यस्य तस्मिन् । " कङ्कः पक्षिविशेषे स्याद्गुप्ताकारे युधिष्ठिरे " इति विश्वः । " कङ्कस्तु कर्कटः " इति यादवः । सायकस्य ( बाणस्य ) पुङ्खे ( मूले ) एव कर्तयाख्यं मूलप्रदेशे । " कर्तरी पुङ्खे " इति यादवः । सक्ताङ्गुलिः ( लग्नाङ्गुलिः ) सन् । चित्रार्पितारम्भश्चित्रलिखितशरोद्धरणोद्योग इव । ( चित्रगतशरोत्कर्षणतत्परः इव दृष्टः इत्यर्थः ) । अवतस्थे ।

३२. बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । "प्रतिबन्धः प्रतिष्टम्भः" इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषो राजा । मन्त्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिर्भोगी सर्प इव । " भोगी राजभुजंगयोः " इति शाश्वतः । अभ्यर्णमन्तिकम् । " उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् " इत्यमरः । आगस्कृतमपराधकारिणमस्पृशद्भिः स्वतेजोभिरन्तरदह्यत । " अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि " इति यादवः । [ अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणत्यागेप्यसहनं तत्तेजः समुदाहृतमिति भरतः—चा० ] ।

30 Then the King, whose motions were as graceful as those of a lion and who was a refuge to the needy and who had conquered all his enemies by his might, felt humiliated by this sudden attack and tried to draw an arrow from his arrow-case for killing the King of beasts that certainly deserved death.

31. But in his attempt to kill the lion, his right hand, (owing to some mysterious cause) stuck to the feathery handle of his arrow, and could not be moved, so that it remained there, firmly fixed, his nails reflecting their light on the feathers of the shaft, as if the whole scene was a piece of painting (lit. readiness for action as painted on canvass)

32. This sudden restraint upon his hand further irritated the King, who began to burn

---

F. Chà. Din. Va. Su., प्रफुल्लम्. D प्रफुल्तम् also Malli., who says " प्रफुल्तम् " इति तकारपाठे 'ञिफला विशरणे' इति धातोः कर्तरि क्तः । उत्परस्यातः इत्युकारादेशः ।

31. A. C. D. Chà. Din. Va. and Su., सक्ताङ्गुलिः. B. लग्नाङ्गुलिः.

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥
अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४ ॥
कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५ ॥

३३. निगृहीता पीडिता धेनुर्येन स सिंहः । आर्याणां ( कुलशीलाद्युपेतानां ) सतां गृह्यं पक्ष्यम् । " पदास्वैरिबाह्यापक्ष्येषु च " इति क्यप् । मनुवंशस्य केतु चिह्नं केतुवद्व्यावर्तकम् । सिंह इवोरुसत्त्वो महाबलस्तम् । आत्मनो वृत्तौ बाहुस्तम्भरूपे [ क्षात्रकर्मणि –चा० ] व्यापारेऽभूतपूर्वत्वाद्विस्मितम् ( साश्चर्यं ) । कर्तरि क्तः । तं दिलीपं मनुष्यवाचा । करणेन । पुनर्विस्माययन्विस्मयमाश्चर्यं प्रापयन्निजगाद । ' स्मिङीषद्धसने ' इति धातोर्णिचि वृद्धावायादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम् । [ आर्यगृह्यत्वं सिंहसमानबलत्व च सभाषणहेतु'–चा० ] ।

३४. हे महीपाल, तव श्रमेणालम् ( कृतम् ) । साध्याभावाच्छ्रमो न कर्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तृतीया । उक्तं च न्यासोद्योते– " न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य । अपि तर्हि गम्यमानापि " इति । " अलं भूषणपर्याप्तिशक्तिवारणवाचकम् " इत्यमरः । इतोऽस्मिन्मयि । सार्वविभक्तिकस्तसिः । प्रयुक्तम् ( मुक्तं ) अप्यस्त्रं ( शस्त्रं । दैवशक्तित्वात् ) वृथा स्यात् । तथाहि । पादपोन्मूलने ( तरूणामुत्पाटने ) शक्तिः ( सामर्थ्यं ) यस्य तत्तथोक्तं मारुतस्य ( वायोः ) रंहो वेगः शिलोच्चये पर्वते न मूर्च्छति न प्रसरति ।

३५. कैलास इव गौरः शुभ्रस्तम् । " चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः " इति शाश्वतः । वृषं वृषभमारुरुक्षोरारोढुमिच्छोः । स्वस्योपरि पदं निक्षिप्य वृषमारोहतीत्यर्थः । अष्टौ मूर्तयो यस्य स तस्याष्टमूर्तेः शिवस्य पादार्पणं पादन्यासस्तदेवानुग्रहः प्रसादस्तेन पूतं ( शुद्धं ) पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं [ निकुम्भो गणभेदः कुम्भकर्णपुत्रो वा चा० । पार्वतीवाहनः सिंहः–व० ] । कुम्भोदरं नाम किंकरं मामवेहि

internally with rage, that could not touch an enemy so much within his reach, as swells an infuriated cobra made powerless by an incantation, or a drug.

33. Then the lion, who had seized the cow, addressed him, who was acceptable to the noble, the standard of Manu's race, and of a valour mighty like that of a lion, in human accents thus astonishing him ( the more ) who was ( already ) surprised at his own state.

34. Cease mighty King ! fruitless is all thy labour. Even if discharged, thy shafts will be of no use here. The force of the wind which is sufficient only to uproot a tree, is of no effect, against a mountain.

35. Be it known to thee, O prince, that this back of mine is sanctified by the favour of the footsteps of the great Siva, when mounting his great bull, which is as white as the mount kailasa. My name is Kumbhodara, and am a servant of the great god who is visibly present in his eight forms, and a friend of Nikumbha.

---

33. A. D. विस्माययन्. B. C. F. Cha. Din. Va. and Su., विस्मापयन्, on this Malli. says " विस्मापयन् " इति पाठे पुगागममात्रं वक्तव्यं । तच्च " नित्यं स्मयतेः " इति हेतुभयविवक्षायामेवेति " भीस्म्योर्हेतुभये " इत्यात्मनेपदे विस्मापयमान इति स्यात् । तस्मान्मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् । करणविवक्षायां न कश्चिद्दोषः । A. D. सिंहोरुसत्त्वम्. B. C. F. Chà. Din. Va. and Su., भूपालसिंहम्.

35. A. C. D. Va. and Su., अवैहि; B. Din. and Cha., अवेहि; A. B. D. निकुम्भमित्रम्, C. F. Cha. Din. Va. and Su., निकुम्भतुल्यम्.

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥
कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥
तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥
तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

विद्धि । " पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्ट मूर्तयः " इति यादवः ।

३६. पुरोऽग्रतोऽमुं देवदारुं पश्यसि । इति काकुः । असौ देवदारुः । वृषभो ध्वजे यस्य स तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः । अभूततद्भावे च्विः । यो देवदारुः स्कन्दस्य मातुर्गौर्या हेम्नः कुम्भ एव स्तनः । तस्मान्निःसृतानां ( निर्गतानां ) पयसामम्बूनां रसज्ञः स्वादज्ञः । स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः । पयसां क्षीराणाम् । " पयः क्षीरं पयोऽम्बु च " इत्यमरः । स्कन्दसमानप्रेमास्पदमिति भावः ।

३७. कदाचित् ( कस्मिंश्चित्प्रस्तावे ) कटं कपोलं । ( गण्डस्थलमित्यर्थः )। कण्डूयमानेन कर्षता । "कण्ड्वादिभ्यो यक् " इति यक । ततः शानच । वन्यद्विपेन ( वन्यगजेन ) अस्य देवदारोस्त्वक् ( वल्कलं ) उन्मथिता ( उन्मूलिता )।अथाद्रेस्तनया गौरी । असुरास्त्रैः ( दैत्यप्रहरणैः ) आलीढं क्षतम् । [ व्याप्तमिति–चा० ] । सेनां नयतीति सेनानीः स्कन्दः । " पार्वतीनन्दनः स्कन्दः सेनानीः " इत्यमरः । "सत्सूद्विष–" इत्यादिना क्विप् । तमिव । एनं देवदारुं शुशोच ।

३८. तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत्तथा तदाप्रभृत्येव वनद्विपानां ( वनवासिनां गजानां ) त्रासार्थं भयार्थं शूलभृता शिवेन । अङ्कं समीपमागताः प्राप्ताः सत्त्वाः प्राणिनो वृत्तिः ( आजीविका ) यस्मिंस्तत् । " अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः " इति केशवः । सिंहत्वं ( सिंहरूपं ) विधाय ( कृत्वा ) । अस्मिन्नद्रिकुक्षौ गुहायामहं व्यापारितो नियुक्तः । [ मम समीपे ये जीवाः आगच्छन्ति तान् भक्षित्वा जीवामीति भावः–सु० ] ।

३९. परमेश्वरेण प्रदिष्टो निर्दिष्टः कालो भोजनवेला [ मृत्युर्वेति–चा० ] यस्याः सोपस्थिता प्राप्तैषा

---

36. Yonder देवदारु tree, that thou seest has been adopted as a son by the bull-bannered god. It has had the good fortune of having been nursed, by Parvati, the mother of स्कन्द, from out of her own golden watering pots representing her nursing breasts as it were

37. On one occasion, a wild elephant rubbed its temples against that tree and made a scar on its bark, whereupon the daughter of the mountain (Himâlaya) was deeply aggrieved as if it was her own son स्कन्द, wounded by the weapons of the Asuras.

38. From that day, the trident-bearing god (Siva), after transforming me into a lion, has appointed me, to keep guard over this mountain valley to scare away all wild elephants,—all the while living upon such animals alone as came unsought into my clutches

39. To day this cow's opportune arrival is quite providential and this bloody break-fast will suffice the satisfaction of me, who have grown hungry, as sufficeth the nectar of the moon to give satisfaction to the enemy of the gods (Rahu).

---

36. A. C. D. F. Châ. Din. and Va., अमुं. B. and Su., अयम्.
38. D. मतंगजानाम् for वनद्विपानां. 39. B. D. कला for सुधा.

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥
इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥
प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभंगे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनम् । सुरद्विषो राहोः । चन्द्रमस इयं चान्द्रमसी सुधा ( अमृतं ) इव । क्षुधितस्य बुभुक्षितस्य तस्याद्धागतसत्त्ववृत्तेर्मे ममसिंहस्य तृप्त्यै ( संतोषाय ) अलं पर्याप्ता । " नमःस्वस्ति– " इत्यादिना चतुर्थी । [ भोजनहेतुत्वाद्गौरेव पारणादिष्टमृत्युरिति केचित्–चा० ] ।

४०. स एवमुपायशून्यस्त्वं लज्जां ( त्रपां ) विहाय ( त्यक्त्वा ) निवर्तस्व । भवांस्त्वं गुरोर्दर्शिता प्रकाशिता शिष्यस्य कर्तव्या भक्तिर्येन स तथोक्तोऽस्ति । ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह–शस्त्रेणेति । यद्रक्ष्यं ( रक्षायोग्यं ) धनं शस्त्रेणायुधेन । " शस्त्रमायुधलोहयोः " इत्यमरः । अशक्या रक्षा यस्य तदशक्यरक्षम् । रक्षितुमशक्यमित्यर्थः । तद्रक्ष्यं नष्टमपि शस्त्रभृतां यशो न क्षिणोति न हिनस्ति । अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः ।

४१. पुरुषाणामधिराजो नृप इति प्रगल्भं ( चतुरं ) मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्येश्वरस्य प्रभावात्प्रत्याहतास्त्रः कुण्ठितास्त्रः सन्नात्मनि विषयेऽवज्ञामपमानं शिथिलीचकार । तत्याजेत्यर्थः । अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः । समानेषु हि क्षत्रियाणामभिमानः । न सर्वेश्वरं प्रतीति भावः ।

४२. स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्पूर्वभङ्गे इषुप्रयोगे (बाणसंधाने) वितथप्रयत्नो विफलप्रयासः । अत एव वज्रं कुलिशं मुमुक्षन्मोक्तुमिच्छन् । अम्बकं लोचनम् । " दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि " इति हलायुधः । त्रीण्यम्बकानि यस्य स त्र्यम्बको हरः । तस्य वीक्षणेन जडीकृतो निष्पन्दीकृतः । वज्रं पाणौ यस्य स वज्रपाणिरिन्द्रः । " प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् " इति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स इव स्थितो नृप एनं सिंहं प्रत्यब्रवीच्च । " बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः " इति महाभारते ।

---

40. Return home then It is no disgrace to thee Thou hast shown thy dutifulness of disciple to the preceptor. Inability to protect something, which cannot be protected by arms does not in the least detract from the glory of warriors ( lit . those who hold weapons).

41. The great king of mortals, when he listened to these proud words of the king of beasts knew that the missile in his hand had been suddenly made useless (lit · impeded in its course) by the supernatural powers of Siva, and accordingly moderated his self-reproach.

42. He, baffled in his attempt of discharging an arrow——which for the first time knew what a check was,——like Indra (lit · in whose hand there is the thunder-bolt ) when about to discharge the thunder but suddenly paralysed by the mysterious gaze of the three-eyed-god, thus addressed him.

40. B. Va. and Su., गुरौ for गुरोः; B. Châ. Din. Va. and Su., क्षणोति for क्षिणोति. F. has यदशक्यरक्ष्यं for यदशक्यरक्षं.

42. B. C. F. Châ. Din. Va. and Su., °सङ्गे, A. D. °भङ्गे; B. C. F. Châ. Din. Va. and Su., वीक्षितेन for वीक्षणेन.

संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥

मान्यः स मे स्थावरजंगमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥

४३. हे मृगेन्द्र । संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयम् । यद्वचः " स त्वं मदीयेन " इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह– अन्तरिति । हि यतो भवान्प्राणभृताम् ( प्राणिनां ) अन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं ( चित्ताभिप्रायं ) वेद वेत्ति । " विदो लटो वा " इति णलादेशः । अतोऽहमभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म सबध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासंभावितार्थमेतदित्युपहसन्ति । अतस्तु मौनमत्र भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ।

४४. प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जंगमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अलङ्घ्यशासन इत्यर्थः । शासनं च " सिंहत्वमङ्कागतसत्त्ववृत्ति " इत्युक्तरूपम् । तर्हि विसृज्य गम्यताम् । नेत्याह–गुरोरपीति । पुरस्तादग्रे नश्यत् ( व्यापाद्यमानं ) इदमाहिताग्नेर्गुरोर्धनमपि गोरूपमनुपेक्षणीयम् ( अत्याज्यं ) । आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ।

४५. सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन ( मत्सम्बन्धिना ) देहेन शरीरस्य वृत्तिं ( पारणारूपं ) जीवनं निर्वर्तयितुं संपादयितुं प्रसीद । दिनावसाने ( दिवसान्ते ) उत्सुकः ( सोत्कण्ठः ) माता समागमिष्यतीत्युत्कण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् [ विमुच्यतां । उत्सुकबालवत्सत्वेन द्वयोरपि नाशः सूचितः–चा० ] ।

43. Under my present condition of helplessness, O mighty lion, what I am about to say will be most likely regarded as laughable by you, but you know all the inmost secrets of men's hearts, hence it is well that I should speak.

44 True, my respect is due to the great god, who is the author of the creation, preservation, and destruction of all things, animate and inanimate , but it is also my duty, on the other hand, not to allow this property of my spiritual preceptor, who has daily to kindle his sacrificial fire, to be destroyed before my eyes.

45. Do me one favour then, appease your hunger with this body of mine, and leave this cow of the great sage, whose young calf is anxiously looking forward for her return at the close of day.

---

43. A. D. संरुद्धचेष्टस्य. C. F. Chà. Din. Su. and Va., संरुद्धचेष्टस्तु. B. संरुद्धचेष्टश्च.; A. B. C. F. Va. and Su., हि. D. Din. and Chà., तु.

45. A. B. D. F. Va. and Su., प्रसीद. Chà. also notices this, C. Din. and Chà., यतस्व; B. C. F. Chà. Din. Va. and Su., विमुच्यताम्. for विसृज्यताम्.

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥
इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥
प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभंगे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

गोरूपा शोणितपारणा रुधिरस्य व्रतान्तभोजनम् । सुरद्विषो राहोः । चन्द्रमस इयं चान्द्रमसी सुधा ( अमृतं ) इव । क्षुधितस्य बुभुक्षितस्य तस्याङ्कागतसत्त्ववृत्तेर्मे ममसिंहस्य तृप्त्यै ( संतोषाय ) अलं पर्याप्ता । " नमःस्वस्ति– " इत्यादिना चतुर्थी । [ भोजनहेतुत्वाद्गौरेव पारणादिष्टमृत्युरिति केचित्–चा० ] ।

४०. स एवमुपायशून्यस्त्वं लज्जां ( त्रपां ) विहाय ( त्यक्त्वा ) निवर्तस्व । भवांस्त्वं गुरोर्दर्शिता प्रकाशिता शिष्यस्य कर्तव्या भक्तिर्येन स तथोक्तोऽस्ति । ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह–शस्त्रेणेति । यद्रक्ष्यं ( रक्षायोग्यं ) धनं शस्त्रेणायुधेन । " शस्त्रमायुधलोहयोः " इत्यमरः । अशक्या रक्षा यस्य तदशक्यरक्षम् । रक्षितुमशक्यमित्यर्थः । तद्रक्ष्यं नष्टमपि शस्त्रभृतां यशो न क्षिणोति न हिनस्ति । अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः ।

४१. पुरुषाणामधिराजो नृप इति प्रगल्भं ( चतुरं ) मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्येश्वरस्य प्रभावात्प्रत्याहतास्त्रः कुण्ठितास्त्रः सन्नात्मनि विषयेऽवज्ञामपमानं शिथिलीचकार । तत्याजेत्यर्थः । अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः । समानेषु हि क्षत्रियाणामभिमानः । न सर्वेश्वरं प्रतीति भावः ।

४२. स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्पूर्वभङ्गे इषुप्रयोगे (बाणसंधाने) वितथप्रयत्नो विफलप्रयासः । अत एव वज्रं कुलिशं मुमुक्षन्मोक्तुमिच्छन् । अम्बकं लोचनम् । " दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि " इति हलायुधः । त्रीण्यम्बकानि यस्य स त्र्यम्बको हरः । तस्य वीक्षणेन जडीकृतो निष्पन्दीकृतः । वज्रं पाणौ यस्य स वज्रपाणिरिन्द्रः । " प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् " इति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स इव स्थितो नृप एनं सिंहं प्रत्यब्रवीच्च । " बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः " इति महाभारते ।

---

40. Return home then It is no disgrace to thee Thou hast shown thy dutifulness of a disciple to the preceptor. Inability to protect something, which cannot be protected by arms, does not in the least detract from the glory of warriors (lit those who hold weapons).

41. The great king of mortals, when he listened to these proud words of the king of beasts, knew that the missile in his hand had been suddenly made useless (lit · impeded in its course) by the supernatural powers of Siva, and accordingly moderated his self-reproach.

42. He, baffled in his attempt of discharging an arrow——which for the first time knew what a check was,——like Indra (lit in whose hand there is the thunder-bolt) when about to discharge the thunder but suddenly paralysed by the mysterious gaze of the three-eyed-god, thus addressed him.

40. B. Va. and Su., गुरौ for गुरोः; B. Châ. Din. Va. and Su., क्षणोति for क्षिणोति. F. has यदशक्यरक्ष्यं for यदशक्यरक्षं.

42. B. C. F. Châ. Din. Va. and Su., °सङ्गे, A. D. °भङ्गे; B. C. F. Châ. Din. Va. and Su., वीक्षितेन for वीक्षणेन.

संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥

मान्यः स मे स्थावरजंगमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥

४३. हे मृगेन्द्र । संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयम् । यद्वचः "स त्वं मदीयेन" इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह– अन्तरिति । हि यतो भवान्प्राणभृताम् ( प्राणिनां ) अन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं ( चित्ताभिप्राय ) वेद वेत्ति । "विदो लटो वा" इति णलादेशः । अतोऽहमभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म सबध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासंभावितार्थमेतदित्युपहसन्ति । अतस्तु मौनमत्र भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ।

४४. प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जंगमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अलङ्घ्यशासन इत्यर्थः । शासनं च "सिंहत्वमङ्कागतसत्त्ववृत्ति" इत्युक्तरूपम् । तर्हि विसृज्य गम्यताम् । नेत्याह–गुरोरपीति । पुरस्तादग्रे नश्यत् ( व्यापाद्यमानं ) इदमाहिताग्नेर्गुरोर्धनमपि गोरूपमनुपेक्षणीयम् ( अत्याज्यं ) । आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ।

४५. सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन ( मत्सम्बन्धिना ) देहेन शरीरस्य वृत्तिं ( पारणारूपं ) जीवनं निर्वर्तयितुं संपादयितुं प्रसीद । दिनावसाने ( दिवसान्ते ) उत्सुकः ( सोत्कण्ठः ) माता समागमिष्यतीत्युत्कण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् [ विमुच्यतां । उत्सुकबालवत्सत्वेन द्वयोरपि नाशः सूचितः–चा० ] ।

43 Under my present condition of helplessness, O mighty lion, what I am about to say will be most likely regarded as laughable by you, but you know all the inmost secrets of men's hearts, hence it is well that I should speak.

44. True, my respect is due to the great god, who is the author of the creation, preservation, and destruction of all things, animate and inanimate, but it is also my duty, on the other hand, not to allow this property of my spiritual preceptor, who has daily to kindle his sacrificial fire, to be destroyed before my eyes.

45. Do me one favour then, appease your hunger with this body of mine, and leave this cow of the great sage, whose young calf is anxiously looking forward for her return at the close of day.

---

43. A. D. संरुद्धचेष्टस्य. C. F. Chà. Din. Su. and Va., संरुद्धचेष्टस्तु. B. संरुद्धचेष्टश्च.; A. B. C. F. Va. and Su., हि. D. Din. and Chà., तु.

45. A. B. D. F. Va, and Su., प्रसीद. Chà. also notices this, C. Din. and Chà., यतस्व; B. C. F. Chà. Din. Va. and Su., विमुच्यताम्. for विसृज्यताम्.

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥
एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥
अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥४९॥

४६. अथ भूतेश्वरस्य पार्श्ववर्त्यनुचरः स सिंहः गिरेर्गह्वराणां गुहानाम् । " देवखातबिले गुहा । गह्वरम् " इत्यमरः । अन्धकारं ध्वान्तं दंष्ट्रामयूखैः ( दंष्ट्राप्रभाभिः ) शकलानि खण्डानि कुर्वन् । निरस्यन्नित्यर्थः । किंचिद्विहस्य ( ईषद्धासं कृत्वा ) अर्थपतिं नृपं भूयः ( पुनः ) बभाषे ( जगाद ) । हासकारणम् "अल्पस्य हेतोर्बहु हातुमिच्छन् " इति वक्ष्यमाणं द्रष्टव्यम् ।

४७. एकातपत्रमेकच्छत्रं जगतः ( लोकस्य ) प्रभुत्वं स्वामित्वम् [ भूपान्तराभावात्-चा० ] । नवं वयो यौवनम् । इद कान्तं रम्यं वपुश्च । इत्येवं बहु ( प्रभूतं ) । अल्पस्य हेतोरल्पेन कारणेन । अल्पफलायेत्यर्थः । " षष्ठी हेतुप्रयोगे " इति षष्ठी । हातुं त्यक्तुमिच्छंस्त्वं विचारे कार्याकार्यविमर्शे मूढो मूर्खो मे मम प्रतिभासि ।

४८. तव भूतेषु ( प्राणिषु ) अनुकम्पा कृपा चेत् । " कृपा दयानुकम्पा स्यात् " इत्यमरः । कृपैव वर्तते चेदित्यर्थः । तर्हि त्वदन्ते तव नाशे सति इयमेका गौः । स्वस्ति क्षेममस्या अस्तीति स्वस्तिमती ( कल्याणिनी ) । भवेत् । जीवेदित्यर्थः । " स्वस्त्याशीः क्षेमपुण्यादौ " इत्यमरः । हे प्रजानाथ ( लोकपते ) । जीवन्पुनः पितेव प्रजा उपप्लवेभ्यो विघ्नेभ्यः शश्वत्सदा । " पुनः सदार्थयोः शश्वत् " इत्यमरः । पासि रक्षसि । स्वप्राणव्ययेनैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः । 'न धर्मलोपादियं प्रवृत्तिः, किंतु गुरुभयादित्यत आह–

४९. अथेति पक्षान्तरे । अथवा । एकैव धेनुर्यस्य तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम् । अत एवापराधे गवोपेक्षालक्षणे सति चण्डादतिकोपनात् । " चण्डस्त्वत्यन्तकोपनः " इत्यमरः । अत एव

46. Then partly chasing the darkness of the mountain-caves with the reflections ( lit : rays ) of his white teeth, laughed a little the servant of the lord of all beings , and thus replied to the king.———

47. Thou dost not seem to be wise in thy decision, O prince, in thus offering to sacrifice so much as thy sovereignty over the whole world with only one imperial umbrella over thy head, thy tender youth, and thy comely person, for a trifle like this beast

48. If the good of other creatures be thy motive, consider, O lord of people, which is the greater good, whether by giving up thyself, to secure the happiness of this single cow, or by saving thy life, always to protect thy people, as their father, from all their troubles.

49. But if thou fearest to meet the great displeasure of thy preceptor, who is the very image of fire, and who will be naturally offended for the loss of his single cow, it is in thy power to allay his anger by presenting crores of cows, whose udders are ample and full like jugs of water.

46. B. Chà. Din. Va. and Su., गिरिकन्दराणां for गिरिगह्वराणां; D. शकलं प्रकुर्वन् for शकलानि कुर्वन्. 47. D. दातुम् for हातुम्. 47. D, ह्रातुम् for हातुम्
49. B. C. F. Chá. Din. Va. and Su., °दण्डात् for °चण्डात्.

तद्रक्ष कल्याणपरंपराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥

कृशानुः ( अग्निः ) प्रतिमोपमा यस्य तस्मादग्निकल्पाद्गुरोर्बिभेषि । इति काकुः । " भीत्रार्थानां भयहेतुः " इत्यपादानात्पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहेति भावः । अस्य गुरोर्मन्युः क्रोधः । " मन्युर्दैन्ये क्रतौ क्रुधि " इत्यमरः । घटा इवोधांसि यासां ता घटोघ्नीः । " ऊधसोऽनङ् " इत्यनङादेशः । " बहुव्रीहेरूधसो ङीष् " इति ङीप् । कोटिशः ( कोटिप्रमाणाः ) गाः ( धेनूः ) स्पर्शयता प्रतिपादयता । " विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् " इत्यमरः । भवता विनेतुमपनेतुं शक्यः ।

५०. तत्तस्मात्कारणात्कल्याणपरंपराणां ( मगलसंततीनां ) भोक्तारम् । कर्मणि षष्ठी । ऊर्जो बलमस्यास्तीत्यूर्जस्वलम् । " ज्योत्स्नातमिस्रा–" इत्यादिना वलच्प्रत्ययान्तो निपातः । आत्मदेहं रक्ष । ननु गामुपेक्ष्यात्मदेहरक्षणं स्वर्गहानिः स्यात् । नेत्याह–महीतलेति । ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रेण भूतलसम्बन्धमात्रेण भिन्नमैन्द्रमिन्द्रसम्बन्धि पदं स्थानमाहुः । स्वर्गान्न भिद्यत इत्यर्थः ।

५१. मृगेन्द्रे एतावदुक्त्वा विरते ( मौनीभूते ) सति गुहागतेन ( कन्दरास्थितेन ) अस्य सिंहस्य प्रतिस्वनेन ( प्रतिशब्देन ) शिलोच्चयः शैलोऽपि प्रीत्या तमेवार्थं क्षितिपालमुच्चैरभाषतेव । इत्युत्प्रेक्षा । भाषिरयं ब्रुविसमानार्थत्वाद्विकर्मकः । ब्रुविस्तु द्विकर्मकेषु पठितः । तदुक्तम्– " दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना " इति ।

५२. देवानुचरस्येश्वरकिङ्करस्य सिंहस्य वाचं ( वाणीं ) निशम्य ( श्रुत्वा ) मनुष्यदेवो राजा पुनरप्युवाच ( जगाद ) । किंभूतः सन् । तेन सिंहेन यदध्यासितं व्याक्रमणम् । नपुंसके भावे क्तः । तेन कातरे अक्षिणी ( नेत्रे ) यस्यास्तया । " बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् " इति षच् " षिद्गौरादिभ्यश्च " इति ङीष् । किं वा वक्ष्यतीति भीत्येव स्थितयेत्यर्थः । धेन्वा निरीक्ष्यमाणः । अत एव सुतरां दयालुः सन् । सुतरामित्यत्र " द्विवचनविभज्य–" इत्यादिना सुशब्दात्तरप् । " किमेत्तिङव्यय– " इत्यादिनाम्प्रत्ययः । " तद्धितश्चासर्वविभक्तिः " इत्यव्ययसंज्ञा । किमुवाचेत्याह–

50. Preserve then thy strong and manly body, wherewith thou enjoyest so many (lit a succession of) blessings, thy prosperous kingly power too is equal to that of Indra with the only difference that thou holdest thy sway on the surface of the earth.

51. After having said this, when the speech of the mighty lion ceased, its echoes resounded in the mountain-caves; the rocks also loudly repeated the same request to the lord of the earth, as if with great pleasure.

52. Moved mightily by the piteous and imploring looks of the animal under lion's grasp, the great king thus rejoined to the words ( lit: having heard the words ) of the servant of Siva.

---

52. D. F. वाच: for वाच; B. Din. and Cha., तदध्यासनकातराक्ष्या for तदध्यासितकातराक्ष्या.

क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥
कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ ५४ ॥
सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥

५३. " क्षणु हिंसायाम् " इति धातोः संपदादित्वात्क्विप् । " गमादीनाम् " इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूप सिद्धम् । क्षतो नाशात् [ आयुधात्–चा० ] त्रायते ( रक्षति ) इति क्षत्त्रः । सुपेति योगविभागात्कः । तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति–क्षतादित्यादिना । उदग्र उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य शब्दो वाचकः । क्षत्त्रशब्द इत्यर्थः । क्षतात्त्रायत इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु । नाश्वकर्णादिवत्केवलरूढः । किंतु पङ्कजादिवद्योगरूढ इत्यर्थः । ततः किमित्यत आह–तस्य क्षत्त्रशब्दस्य विपरीतवृत्तेर्विरुद्धव्यापारस्य क्षतत्त्राणमकुर्वतः पुंसो राज्येन किम् । उपक्रोशमलीमसैर्निन्दामालिनैः । " उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः । "ज्योत्स्नातमिस्रा–" इत्यादिना मलीमसशब्दो निपातितः । " मलीमसं तु मलिनं कच्चरं मलदूषितम् " इत्यमरः । तैः प्राणैर्वा किम् । निन्दितस्य सर्वं व्यर्थमित्यर्थः । एतेन "एकातपत्रम् " इत्यादिना श्लोकद्वयेनोक्तं प्रत्युक्तमिति वेदितव्यम् । " अथैकधेनोः " इत्यत्रोत्तरमाह—

५४. अनुनयः क्रोधापनयः । ( प्रसादः इत्यर्थः ) । चकारो वाकारार्थः । महर्षेरनुनयो वान्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनाद्दानात् । " त्यागो वितरण दानमुत्सर्जनविसर्जने । विश्राणनं वितरणम्" इत्यमरः । कथ नु शक्यः । न शक्य इत्यर्थः । अत्र हेतुमाह–इमां गां सुरभेः कामधेनोः । "पञ्चमी विभक्ते" इति पञ्चमी । अनूनामन्यूनामवेहि जानीहि । तर्हि कथमस्याः परिभवोऽभूदित्याह–रुद्रौजसेति । अस्यां गवि त्वया । कर्त्रा । प्रहृतं तु प्रहारस्तु । नपुंसके भावे क्तः । रुद्रौजसेश्वरसामर्थ्येन । न तु स्वयमित्यर्थः । "सप्तम्यधिकरणे च" इति सप्तमी । तर्हि किं चिकीर्षितमित्यत्राह—

५५. सेयं गौर्मया । निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतमिति निष्क्रयः प्रतिशीर्षकम् । " एरच् " इत्यच्प्रत्ययः । स्वदेहार्पणमेव निष्क्रयः ( मूल्यं ) तेन भवत्तस्त्वत्तः । पञ्चम्यास्तसिल् । मोचयितुं न्याय्या न्यायादनपेता । युक्तेत्यर्थः " धर्मपथ्यर्थ– " इत्यादिना यत्प्रत्ययः । एवं सति तव पारणा भोजनं विहता ( नष्टा ) न स्यात् । मुनेः क्रिया होमादिः । स एवार्थः प्रयोजनम् । स चालुप्तः ( अप्रतिहतः ) भवेत् । स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यमितिभावः । अत्र भवानेव प्रमाणमित्याह—

---

53. A Kshatriya is so called all over the world, simply because it is his glorious privilege to protect others from death ( lit · a wound ) Of what good shall my sovereignty of the world be if I act in opposition to the spirit of that privilege? or of what good shall be my useless life, with its tarnished fame!

54. And again how is it possible to avert the wrath of the great sage by offering other cows? Know that this cow is in no way inferior to Surabhi, and it is only through the influence of the god Rudra that you have been able to attack her.

55. Accordingly, I am perfectly right in proposing to liberate this cow from you by the offer of my body as ransom; for thus you will have the gratification of your hunger, and the means for the sacrificial ceremonies of the sage will also be unobstructed.

54. A. D. च for नु; A· D. शक्यानुनयः for शक्योऽनुनयः, Châ. also notices this reading; A.D.and Châ., चान्य°. B.C.F. Va. Din. and Su., अन्य°; A.D.F. नु for तु.

भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥
किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७ ॥
सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।
तद्भूतनाथानुग नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥
तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥

५६. परवान्स्वामिपरतन्त्रो भवानपि । "परतन्त्रः पराधीनः परवान्नाथवानपि" इत्यमरः । इदं वक्ष्यमाणमवैति । भवतानुभूयत एवेत्यर्थः । "शेषे प्रथमः" इति प्रथमपुरुषः । किमित्यत आह—हि यस्माद्धेतोः । "हि हेताववधारणे" इत्यमरः। तव देवदारौ विषये महान्यत्नः। महता यत्नेन रक्ष्यत इत्यर्थः। इदं शब्दोक्तमर्थं दर्शयति—स्थातुमिति । रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयमक्षतेनाव्रणेन । नियुक्तेनेति शेषः । नियोक्तुः स्वामिनोऽग्रे स्थातुं शक्यं न हि । सर्वथा चैतदप्रतिहार्यमित्याह—

५७. किमपि किं वाहं तवाहिंस्योऽवध्यो मतश्चेत्तर्हि मे यशः एव शरीरं तस्मिन्दयालुः कारुणिको भव । "स्याद्दयालुः कारुणिकः" इत्यमरः । ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशः । अत आह—एकान्तेति । मद्विधानां मादृशानां विवेकिनामेकान्तविध्वंसिष्ववश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेष्वनास्था खल्वनपेक्षैव। "आस्थात्वालम्बनास्थानयत्नापेक्षासु कथ्यते" इति विश्वः । [ अतो देहभक्षणेन यशो रक्षणीयं ममेति तात्पर्य—सु० ]। सौहार्दादहमनुसरणीयोऽस्मीत्याह—

५८. संबन्धं सख्यम्। आभाषणमालापः पूर्वं कारणं यस्य तमाहुः। (विद्वांसः इति शेषः)। "स्यादाभाषणमालापः" इत्यमरः । स तादृक्संबन्धो वनान्ते ( अत्रारण्यमध्ये ) संगतयोः ( मिलितयोः ) नावावयोर्वृत्तो जातः । तत्ततो हेतोर्हे भूतनाथानुग शिवानुचर । एतेन तस्य महत्त्वं सूचयति । अत एव संबन्धिनो मित्रस्य मे प्रणयं याच्ञाम् [ स्नेहं—चा० ] । "प्रणयास्त्वमी । विश्रम्भयाच्ञाप्रेमाणः" इत्यमरः । विहन्तुं ( नाशयितुं ) नार्हसि ( न योग्यो भवसि )।

५९. तथेति ( अंगीकृत्य ) गाम् [ वाणी—सु० धेनुं—चा० ] उक्तवते हरये सिंहाय । "कपौ सिंहे सुव-

---

56. You are also a servant, appointed to your present duty by another, and great is the care with which you keep guard over this देवदारु tree, consequently you will be able to understand me when I say, that it is difficult for a servant to stand before his master after having failed to protect his charge, himself unhurt and uninjured.

57. Or, if it be your motive to avoid all injury to me, better be kind to avoid injury to my fame (lit: to my body made of fame); for, in truth, no great care is due to the bodies (lit: material lumps) of men like me,——bodies made of earth and other elements, and perishable like all other earthly things.

58. The friendship of good men springs up at the first acquaintance (lit. after the exchange of a few words), they say; accordingly we are friends now, after our meeting together in the midst of this forest; do not refuse, then, O follower of the lord of living beings, to comply, with this cordial request of mine, now that I have become your friend.

59. So be it, the lion replied, and instantly Dilipa's arm was disengaged; who laying down his arms offered his body to the lion, as if it was a lump of flesh to be thrown away.

56. B.C. F. Va. and Su., यदशक्यम् for न हि शक्यम्. 58. B. Châ. Din. Va. and Su., जातः for वृत्तः. 59. B. F. Châ. Din. Va. and Su., संन्यस्त° for स न्यस्त°.

तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥
उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्राविणीं न सिंहम् ॥ ६१ ॥
तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥
भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

र्णे च वर्णे विष्णौ हरिं विदुः " इति शाश्वतः । मद्यस्तत्क्षणे प्रतिष्टम्भात्प्रतिबन्धाद्विमुक्तो बाहुर्यस्य स दिलीपः । न्यस्तशस्त्रस्त्यक्तायुधः सन् । स्वदेहम् ( निजशरीरं ) । आमिषस्य मांसस्य । " पललं क्रव्यमामिषम् " इत्यमरः । पिण्डं कवलमिव । उपानयत्समर्पितवान् । एतेन निर्ममत्वमुक्तम् ।

६०. तस्मिन्क्षणे ( तत्पतनावसरे ) उग्रं ( उत्कटं ) सिंहनिपातमुत्पश्यत उत्प्रेक्षमाणस्य तर्कयतोऽवाङ्मुखस्याधोमुखस्य । " स्यादवाङप्यधोमुखः " इत्यमरः । प्रजानां पालयितू राज्ञ उपर्युपरिष्टात् । " उपर्युपरिष्टात् " इति निपातः । विद्याधरगणां देवयोनिविशेषाणां हस्तैर्मुक्ता पुष्पवृष्टिः ( कुसुमवृष्टिः ) पपात । [ उग्रे सिंहनिपाते शंकितस्योपरि कोमला पुष्पवृष्टिः पपातेति वैचित्र्यं—चा० ] ।

६१. राजा । अमृतमिवाचरतीत्यमृतायमानं(सुधातुल्यं)तत् । " उपमानादाचारे " इतिक्यच् । ततःशानच् उत्थितमुत्पन्नं " हे वत्स ( पुत्र ) , उत्तिष्ठ " इति वचो निशम्य श्रुत्वा । उत्थितः सन् । अस्तेः शतृप्रत्ययः । अग्रतोऽग्रे प्रस्रवः क्षीरस्रावोऽस्ति यस्याः सा तां प्रस्राविणीं गां स्वां जननीं ( मातरं ) इव ददर्श । [ प्रस्रवस्तु स्नेहवशाज्जनन्या अपि स्यात्—चा० ] । सिंहं न ददर्श ।

६२. विस्मितमाश्चर्यं गतम् [ विस्मयस्तु केसरिणोऽदर्शनात्—चा० ] । कर्तरि क्तः । तं दिलीपं धेनुरुवाच । किमित्यत्राह—हे साधो, मया मायां ( कपटं ) उद्भाव्य कल्पयित्वा ( अर्थादुत्पाद्य ) परीक्षितोऽसि । ऋषिप्रभावात् ( सामर्थ्यात् ) मयि अन्तको यमोऽपि प्रहर्तुं न प्रभुर्न समर्थः । अन्ये हिंस्राः घातुकाः [ सिंहादयः—चा० ] । " शरारुर्घातुको हिंस्रः " इत्यमरः " नमिकम्पि— " इत्यादिना रप्रत्ययः किमुत सुष्ठु । न प्रभव इति योग्यम् । [ सम्मुखं विलोकयितुमपि न समर्थाः किमुत प्रहर्तुं पुरे आसतामिति भावः—सु० ] । " बलवत्सुष्ठु किमुत स्वस्त्यतीव च निर्भरः " इत्यमरः ।

६३. हे पुत्र, गुरौ भक्त्या । मय्यनुकम्पया ( दयया ) च । ते तुभ्यं प्रीतास्मि ( तुष्टास्मि ) । " क्रि

---

60. Expecting the fatal up-springing of the lion the protector of the people sat with his face looking down-wards, and instantly showers of flowers fell upon him from the sky, scattered by the hands of Vidyadharas.

61. "Rise up my son,"——some one exclaimed, whereupon the king hearing the words sweet like nectar, raised his head, and looked around to see whence the voice proceeded, when lo! there was no lion, but in its stead there was the cow standing before him, her milk streaming out from affection, as if she was his own mother.

62. The cow thus addressed the wondering monarch —I invented that illusion to test thy faith, my good man, be at ease, such is the influence of the sage, that even death has no power to strike at me, far less such beasts of prey.

63. I am pleased with thy dutifulness to thy preceptor, and also with thy compassion for me;

---

60. B. D. F. अधोमुखस्य for अवाङ्मुखस्य.

63. A. B. C: Chà. Din. Va. and Su., वत्स for पुत्र. We with D. and F,

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥
सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥
वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥

याग्रहणमपि कर्तव्यम्" इति चतुर्थी। वरं [ पुत्ररूपं वर वा—चा० ] देवेभ्यो वरणीयमर्थम्। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये" इत्यमरः। वृणीष्व स्वीकुरु। [ गोः पयोदाने सामर्थ्यं न तु वरदाने इत्याह—चा० ]। तथाहि मां केवलानां पयसां ( दुग्धानां ) प्रसूतिं कारणं नावेहि न विद्धि। किंतु प्रसन्नां ( संतुष्टां ) माम्। कामान्दोग्धीति कामदुघा। तामवेहि "दुहः कब्घश्च" इति कप्प्रत्ययः।

६४. ततः ( अनंतरं )मानितार्थी मानिताः पूजिताः अर्थिनो याचकाः येन सः ) स्वहस्तार्जितो वीर इति शब्दो येन सः। ( स्वपराक्रमाल्लब्धः वीर इति शब्दो येन अर्थादेकवीरः )। एतेनास्य दातृत्वं दैन्य राहित्यं चोक्तम्। स राजा हस्तौ समानीय संधाय। अञ्जलिं बद्ध्वेत्यर्थः। वंशस्य कर्तारं प्रवर्तयितारम्। अत एव रघुकुलमिति प्रसिद्धिः। अनन्तकीर्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे।

६५. सा पयस्विनी गौः संतानं ( संतति ) कामयते ( अभिलषति ) इति संतानकामः। "कर्मण्यण्"। तस्मै राज्ञे तथेति। काम्यत इति कामो वरः। कर्मार्थे घञ्प्रत्ययः। तं प्रतिश्रुत्य प्रतिज्ञाय हे पुत्र, मदीयं पयः ( दुग्धं ) पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वोपभुङ्क्ष्व पिबेति तमादिदेशाज्ञापितवती।

६६. हे मातः, वत्सस्य वत्सपीतस्य शेषम्। वत्सपीतावशिष्टमित्यर्थः। होम एवार्थः। तस्य विधिरनुष्ठानम्। तस्य च शेषम्। होमावशिष्टमित्यर्थः। तव। ऊधसि भवमौधस्यं क्षीरम्। ( दुग्धमिति यावत् )। "शरीरावयवाच्च" इति यत्प्रत्ययः। रक्षिताया उर्व्याः षष्ठांशं षष्ठभागमिव। [ राजा हि फलमाप्नोति रक्षितायाः क्षितेरपीति मनुः—चा० ]। ऋषेरनुज्ञाम् ( आदेश ) अधिगम्य ( प्राप्य )। उपभोक्तुं ( आहारयितु ) इच्छामि ( वाञ्छामि )।

---

ask any boon of me, my son, it is not milk alone that I can give, if propitiated I can also grant the fulfilment of one's all desires.

64. Then the king, who honoured the supplicants, folded both his hands——those very hands with the aid of which he had acquired a world-wide fame of hero——and prayed for the birth from सुदक्षिणा a son of endless glory, and who would be the founder of his dynasty.

65. So be it, cried the sacred cow, of copious milk, and after having granted the king the desired boon, who ardently longed for issue, ordered him thus :—make, my son, a vessel of leaves of plants to milch me in, and then drink its contents.

66. "I shall drink your milk, O mother, with the permission of the sage, and after your calf has been fed, and after the requisite quantity for sacrificial ceremony has been milched out, in pursuance of my custom to take only the 6th part of the product of the earth, well guarded by me, as my share of the revenue, but not now."

---

65. D. उपयुङ्क्ष्व for उपभुङ्क्ष्व. So also Malli. who says 'उपयुङ्क्ष्व' इति वा पाठः.

66. P. D. F. Din. and Châ., गुरोः for ऋषेः; B. C. F. Va. and Su.. ऊधस्यं for औधस्यं.

इत्थं क्षितीशेन वशिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥
तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥
स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वशिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥
प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वशिष्ठः ॥ ७० ॥

६७. इत्थं ( अमुना प्रकारेण ) क्षितीशेन ( राज्ञा ) विज्ञापिता वशिष्ठस्य धेनुः प्रीततरा । पूर्वशुश्रूषया प्रीता । संप्रत्यनया विज्ञापनया प्रीततरातिसंतुष्टा बभूव । तदन्विता तेन दिलीपेनान्विता ( युक्ता ) हैमवता-द्धिमवत्संबन्धिनः कुक्षेर्गुहायाः सकाशादश्रमेणानायासेनाश्रम प्रत्याययावागता च ।

६८. प्रसन्नेन्दुरिव मुखं यस्य स नृपाणां गुरुर्दिलीपः प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमूहितं तस्या धेनोः प्रसादमनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात्पुनरुक्तयेव । वाचा ( वाण्या ) गुरवे निवेद्य विज्ञाप्य पश्चात्प्रियायै ( सुदक्षिणायै ) शशंस ( कथयामास ) । कथितस्यैव कथनं पुनरुक्तिः । न चेह तदस्ति । किंतु चिह्नैः क-थितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ।

६९. अनिन्दितात्मागर्हितस्वभावः । सत्सु वत्सलः प्रेमवान्सद्वत्सलः । " वत्सांसाभ्यां कामबले " इति लच्प्रत्ययः । वशिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य चावशेष पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरम् शुभ्रं मूर्तं परिच्छिन्नं । ( देहबद्धमिति यावत् ) । यश इव । अतितृष्णः सन्पपौ ।

७०. वशी ( जितेन्द्रियः ) वशिष्ठः प्रातः ( प्रभाते । इति यात्राकालयोग्यात् ) । यथोक्तस्य पूर्वोक्तस्य व्र-तस्य गोसेवारूपस्याप्रभृता या पारणा तस्या अन्ते ( अवसाने ) प्रास्थानिकं प्रस्थानकाले भवम् । तत्काली-

67. Vasistha's cow became still more pleased with the above humble request of the lord of the earth, and returned without fatigue to the hermitage, from the valley of the mountain हिमवत्, followed by the king.

68. The king of kings with a countenance beaming with joy, like the bright moon, communicated to his preceptor, the happy news of the favour shown to him by the cow, and also related it in words which were, therefore, a repetition, to his queen, both of whom had nearly guessed everything by the evident marks of gladness in his looks.

69. With the permission of Vasistha, the King, of unblemished soul and who was kind to the virtuous, drank with great eagerness such milk of Nandini, as remained after feeding the young calf and also after supplying the requisite amount for the sacrificial ceremony——the white milk looking like his own fame incarnate.

70. The next morning, after having ordered their meals, suited to the finishing ceremony of their vow, Vasistha, who had restrained his self, duly performed the protective ceremonies on his guests at the time of departure and dismissed them to return to their capital.

67. D. Din and Chà., क्षितीपेन for क्षितीशेन.

69. A. वत्सहुतावशेषं. So also Chà. notices this. D. होमविधेश्च शेषं also noticed by Chà. B. C. F. Chà. Din. Va. and Su., वत्सनिर्पीतशेषं; B. C. F. Chà. Din. Va., and Su., शुद्धम् for शुभ्रं; A. C. F. Din. and Chà., मूर्तम्, D. भूपः, B. Va. ard Su., भूयः also noticed by Chà.; B. C. Va. and Su., अधितृष्णः for अतितृष्णः.

70. C. D. F. Va. and Din., संप्रेषयामास for प्रस्थापयामास.

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुंधतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥
श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ।
ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥
तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥

चितमित्यर्थः । " कालाट्ठञ् " इति ठञ्प्रत्ययः । " यथाकथंचिद्गुणवृत्त्यापि काले वर्तमानात्प्रत्यय इ-ष्यते " इति इकारः । ईयते प्राप्यतेऽनेनेत्ययनं स्वस्त्ययनं शुभावहमाशीर्वादं । ( मंगलाशिषमिति यावत् )। प्रयुज्य । तौ दंपती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ( संप्रेषयामास ) ।

७१. नृपो हुतं तर्पितम् ( प्रगीतं वा ) । हुतमश्नातीति हुताशोऽग्निः । " कर्मण्यण् " । तं भर्तुर्मुनेरनन्तरम् । प्रदक्षिणानन्तरमित्यर्थः । अरुंधतीं च सवत्सां ( वत्सयुक्तां ) धेनुं च प्रदक्षिणीकृत्य । प्रगतो दक्षिणं प्रदक्षिणम् । " तिष्ठद्गुप्रभृतीनि च " इत्यव्ययीभावः । ततश्च्विः । अप्रदक्षिणं प्रदक्षिणं संपद्यमानं कृत्वा प्रदक्षिणीकृत्य । सद्भिर्मङ्गलैः [ सतां मङ्गलैः प्रीतवह्निगोब्राह्मणप्रदक्षिणीकरणैः–स० ] प्रदक्षिणादिभिः मङ्गलाचारैः [ मंगलद्रव्यैर्वा–चा० ] उदग्रतरप्रभावः [ उदग्रतरः महीयान्प्रभावः पौरुषं यस्येति–चा० ] सन् । प्रतस्थे ( चचाल ) ।

७२. धर्मपत्नीसहितः ( सुदक्षिणया युक्तः ) सहिष्णुर्व्रतादिदुःखसहनशीलः स नृपः श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वनेनानुद्घातः पाषाणादिप्रतिघातरहितः । अत एव सुखयतीति सुखः । तेन रथेन (स्यन्दनेन) । स्वेन पूर्णेन सफलेन मनोरथेनेव । मार्गमध्वानं ययौ । मनोरथपक्षे ध्वानि श्रुतिः । अनुद्घातः प्रतिबन्धनिवृत्तिः ।

७३. अदर्शनेन ( बहुकालावलोकनाभावेन ) प्रवासनिमित्तेनाहितौत्सुक्यं जनितदर्शनोत्कण्ठम् । प्रजार्थेन संतानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतमङ्गं यस्य तम् । नवोदयं नवाभ्युदयं प्रजास्तृप्तिम् ( संतोषं ) अनाप्नुवद्भिरतिगृध्नुभिर्नेत्रैः । ओषधीनां नाथं सोममिव । तं राजानं पपुः । [ सादरमवलोकनं पानं–चा० ] । अत्यास्थया ददृशुरित्यर्थः । चन्द्रपक्षे । अदर्शनं कलाक्षयनिमित्तम् । प्रजार्थं लोकहितार्थम् । व्रतं देवताभ्यः कलादाननियमः । " तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः " इति व्यासः । उदय आविर्भावः । अन्यत्समानम् ।

---

71. The king went round the satiated holy fire, his venerable master and his wife Arundhati, and also the sacred cow with her calf ( of course, keeping them on his right side ), after which he started on his journey with his prowess redoubled by the protective rites.

72. By the car whose music was agreeable to the ear and which afforded ease on account of its being free from joltings, he patient as he was took the the way in company with his lawful wife ( queen ) as if he was carried [ not by a heavy car of wood, but ] on the wings of his successful desire.

73. Him, who, by his absence, had made the people eager ( to have his sight ), and whose body had become lean from the effects of his vow for issue, his subjects began to drink, as it were, with their eyes not getting satiety, as they do the newly rising lord of herbs ( the moon ).

---

71. B. C. F. Va. and Su., ततश्च होतारम् for अनंतरं भर्तुः ( C. and Su., च. B. तु. ) ; A. D. F. सन्मङ्गलोदग्रतरानुभावः for सन्मङ्गलोदग्रतरप्रभावः.

73. B. D. Din. and Chà., तमाहितोत्कण्ठमदर्शनेन for तमाहितौत्सुक्यमदर्शनेन; A. D. प्रजार्थं व्रतकर्शिताङ्गम् for प्रजार्थव्रतकर्शिताङ्गम्.

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजंगेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥
अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्युतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

७४. पुरः पुरीरसुराणां दारयतीति पुरंदरः शक्रः । " पूःसर्वयोर्दारिसहोः " इति खच्प्रत्ययः । " वाचंयमपुरंदरौ च " इति मुमागमो निपातितः । तस्य श्रीरिव श्रीर्यस्य स ( शक्रतुल्यवैभवः ) नृपः पौरैः ( पुरनिवासिभिर्लोकैः ) अभिनन्द्यमानः ( संस्तूयमानः ) । उत्पताकमुच्छ्रितध्वजम् । " पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् " इत्यमरः । पुरं प्रविश्य भुजंगेन्द्रेण ( शेषेण ) समानसारे तुल्यबले । " सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु " इत्यमरः । भुजे ( बाहौ ) भूयः ( पुनरपि ) भूमेर्धुरम् ( भारं ) आससञ्ज स्थापितवान् । [ शेषेण हि ध्रियते इति साम्यमुचितं–चा० ] ।

७५. अथ द्यौः सुरवर्त्म । " द्योः स्वर्गसुरवर्त्मनोः " इति विश्वः । अत्रेर्महर्षेर्नयनयोः समुत्थमुत्पन्नं नयनसमुत्थम् । " आतश्चोपसर्गे " इति कप्रत्ययः । ज्योतिरिव । चन्द्रमिवेत्यर्थः । " अत्रिदृशः स्यादत्रिनेत्रप्रसूतः " इति हलायुधः । चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—" नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः । तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा । समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयँल्लोकाञ्छीतांशुः सर्वभावनः " इति । सुरसरिद्गङ्गा वह्निना निष्ठ्यूतं विक्षिप्तम् । " च्छ्वोः शूडनुनासिके च " इत्यनेन निपूर्वात्ष्ठीवतेर्वकारस्य ऊठ् । " नुन्ननुत्तास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः " इत्यमरः । ऐशं तेजः स्कन्दमिव । अत्र रामायणम्—" ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः । देवकार्यमिदं देव समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज । देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् । इत्यैतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवकीर्य च । समन्ततस्तु तां देवीमभ्यसिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन " इति । राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै संततिलक्षणायै ( वैभवाय ) गुरुभिर्महद्भिर्लोकपालानामनुभावैस्तेजोभिः ( मात्राभिरंशैर्वा ) अभिनिविष्टमनुप्रविष्टं गर्भमाधत्त । दधावित्यर्थः । [ इन्द्रात्प्रभुत्वं तपनात्प्रतापं क्रोधं यमाद्वैश्रवणाच्च वित्तं । आह्लादकत्वं च निशाधिनाथादादाय राज्ञः क्रियते शरीरम्–हे० ] । अत्र मनुः–०" अष्टानां लोकपालानां वपुर्धारयते नृप " इति । ' अत्र आधत्त ' इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते । तथा मन्त्रे च दृश्यते—" यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं त्वं गर्भमाधेहि दशमे मासि सूतवे " इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारणे आधानशब्दप्रयोगदर्शनादिति । मालिनीवृत्तमेतत् । तदुक्तम्—" ननमयययुतेयं मालिनी भोगिलोकैः " इतिलक्षणात् ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः ।

---

74. The king, who was majestic in his appearance like Indra (lit. the town-destroying god), was thus welcomed back into his capital by his citizens, who had decorated the city with flags; and he once more put the yoke of the earth on his shoulders, equal in strength to the lord of the serpents.

75. As the heavens had once conceived the moon, which sprang from the eyes of Atri, and as the river of the gods ( the Gangâ ) had conceived in her the divine embryo deposited by fire, so for the good of the race of the whole line the queen conceived in time the coming prince (lit. the embryo ), made strong by the infusion of the spirits of the lords of different quarters of the sky.

# अथ तृतीयः सर्गः ।

——000——

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥
शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

१. राज्ञी गर्भमाधत्तेत्युक्तम् । संप्रति गर्भलक्षणानि वर्णयितुं प्रस्तौति— अथ गर्भधारणानन्तरं सुदक्षिणा । उपस्थितोदयं [ उपस्थितः प्राप्तः उदयः पुत्रोत्पत्तिलक्षणो यस्य यस्माद्वा–चा० ] प्राप्तकालं भर्तुर्दिलीपस्येप्सितं मनोरथम् [ कान्ताभिमतं–व० ] । भावे क्तः । पुनः सखीजनस्योद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम् । यद्वा कौमुदी नाम दीपोत्सवतिथिः [ दीपावल्युत्सवतुल्यमिति कश्चित्–चा० ] । तदुक्तं भविष्योत्तरे–"कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता" इति । तस्या मुखं प्रारम्भम् । इक्ष्वाकुकुलस्य सन्ततेरविच्छेदस्य निदानं मूलकारणम् । "निदानं त्वादिकारणम्" इत्यमरः । एवंविधं दौर्हृदलक्षणं गर्भचिह्नं [ मुखे पाण्डुरतादि–चा० ] वक्ष्यमाणं दधौ ( धारयामास ) स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी । यथाह वाह्नटः–" मातृजन्यस्य हृदयं मातुश्च हृदयं च तत् । संबद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाभिमाननम् " इति । तत्संबन्धित्वाद्गर्भो दौर्हृदमित्युच्यते । सा च तद्योगाद्दौर्हृदिनीति । तदुक्तं संग्रहे–" द्विहृदयां नारीं दौर्हृदिनीमाचक्षते " इति । अत्र दौर्हृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणाद्रूपकालंकारः । अस्मिन्सर्गे वंशस्थं वृत्तम्–" जतौ तु वंशस्थमुदीरितं जरौ " इति लक्षणात् । संप्रति क्षामताख्यं गर्भलक्षणं वर्णयति—

२. शरीरस्य सादात्कार्श्यादसमग्रभूषणा परिमिताभरणा लोध्रपुष्पेणेव पाण्डुना मुखेनोपलक्षिता सा सुदक्षिणा । विचेयाः मृग्यास्तारकाः ( नक्षत्राणि ) यस्यां सा तथोक्ता । विरलनक्षत्रेत्यर्थः । तनुप्रकाशेनाल्पकान्तिना

1. In time queen सुदक्षिणा began to show all the signs of pregnancy, with its fulfilment fast approaching, a happy state for which the king had so eagerly longed, which was but the beginning of the moonlight to the eyes of all her female attendants and which was the source of the permanence of the Ikshvaku race.

2. Unable to carry on her person all her ornaments on account of the feebleness of her limbs, she put off most of them; and her countenance became as pale as the लोध्र flower; consequently she resembled the night, during the small hours of the morning, with only a few lingering stars, and with the lovely crescent of the moon grown pale upon the approach of the day.

1. B. C. Chà. Din. Va. and Su, °कौमुदीमुखम्. A. °कौमुदीमहम् So also noticed by Malli: who says इति पाठं केचित्पठंति, D. G. °कौमुदीसुखम्. also noticed by Chà.; A. C. Din. and Chà., दौहृद°. B. G. Va. and Su., दोहृद°; for 'अथ' &c. D. reads "ततो विशां पत्युरनन्तसन्ततेर्मनोरथं किञ्चिदिवोदयोन्मुखम् । अनन्यसौहार्दरसस्य दोहदं प्रिया प्रपेदे प्रकृतिप्रियवन्दा" ।

2. B. C. and Va., रोध्र° for लोध्र°; B. C. G. Chà. Din Va. Su., विभातकल्पा

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥
दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥ ४ ॥
न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोशलेश्वरः ॥ ५ ॥

शशिनोपलक्षितेषदसमाप्तप्रभाता प्रभातकल्पा । प्रभातादीषदूनेत्यर्थः । "तसिलादिष्वा कृत्वसुचः" इति प्रभातशब्दस्य पुंवद्भावः । शर्वरी रात्रिरिव । अलक्ष्यत । शरीरसादादिगर्भलक्षणमाह वाह्भटः- "क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम् । जृम्भा प्रसेकः सदन रोमराज्याः प्रकाशनम्" इति ।

३. क्षितीश्वरः ( दिलीपः ) रहसि ( एकान्ते ) मृत्सुरभि मृदा ( मृत्तिकया ) सुगन्धि तस्या आननं तदानन सुदक्षिणामुखमुपाघ्राय ( सिंघित्वा ) तृप्तिं ( संतोष ) नाययौ । कः कमिव । शुचिव्यपाये ग्रीष्मावसाने । "शुचिः शुद्धेऽनपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि" इति विश्वः । पयोमुचा मेघानां पृषतैर्बिन्दुभिः । "पृषन्ति बिन्दुपृषताः" इत्यमरः । सिक्तमुक्षितं वनराज्याः ( अरण्यपंक्त्याः ) पल्वलम् ( अल्पसरः ) उपाघ्राय ( सिंघित्वा ) करी ( करः शुण्डादण्डोऽस्यास्तीति करी ) गज इव । अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसंधेयः । [ सरसि जलपाते सौरभ्यमिति पल्वलोक्तिः-चा॰ ] । गर्भिणीनां मृद्भक्षण लोकप्रसिद्धमेव एतेन दोहदाख्य गर्भलक्षणमुच्यते । दोहदलक्षणे मृद्भक्षणं इत्वन्तरमुत्प्रेक्षते--

४. हि यस्माद्दिगन्तविश्रान्तरथः ( दिगन्ते दिशां प्रान्ते विश्रांतः रथः स्यन्दनो यस्य सः ) चक्रवर्ती तस्याः सुतस्तत्सुतः । मरुत्वानिन्द्रः । "इन्द्रो मरुत्वान्मघवा" इत्यमरः । दिवं स्वर्गमिव । भुव ( मही ) भोक्ष्यते । "भुजोऽनवने" इत्यात्मनेपदम् । अतः प्रथमं ( पूर्वं ) सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे । अभिलष्यत इत्यभिलाषो भोग्यवस्तु । तस्मिन् । कर्मणि घञ्प्रत्ययः । रस्यन्ते स्वाद्यन्त इति रसा भोग्यार्थाः अन्ये च ते रसाश्च तान् ( मधुरतिक्ताम्लान् ) विलङ्घ्य विहाय मनो बबन्ध ( भावं चक्रे ) । विदधावित्यर्थः । दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्षते ।

५, मगधस्य राज्ञोऽपत्यं स्त्री मागधी सुदक्षिणा । "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यण्प्रत्ययः । ह्रिया

---

3. The fragrant breath of her mouth, smelling earth ( which she was fond of eating at this time ) was so agreeable to the lord of the earth that he was never tired of smelling it in private as an elephant in the wilderness is never tired of enjoying the smell of a pond of water, augmented by fresh showers of rain at the close of summer.

4. As Indra was the master of the whole heavens so was the prince to be born of her, destined to rule over the whole earth, the prince whose conquering chariot would not stop until it shall have reached the furthest ends of the quarters ; was it as a sign of this destiny, that she first evinced ( lit. set her mind on ) such an eagerness for eating the earth in preference to all other things of taste.

5. "Out of modesty the Magadha princess tells nothing about the things she likes or her desired

---

for प्रभातकल्पा. for 'शरीरसादाद' &c. B. and Su., read "मुखेन सा केतकपत्रपाण्डुना । कृशाङ्गयष्टिः परिमेय भूषणा । स्थितात्पताराां करुणेन्दुमण्डनम् । विभातकल्पां रजनीं व्यडम्बयत्" B. has स्थिताल्पताराकरुणेन्दुमण्डला । विभातवत्यां &c.

3. D. Va. Din. and Chà., रहः समाघ्राय for रहस्युपाघ्राय.

4. D. G. Châ. Din. Va. and Su., महीं for भुवं; A. D. Châ. Din. Va. and Su., मत्सुतः for तत्सुतः.

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥
क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।
पुराणपत्त्रापगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा ॥ ७ ॥
दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥

( लज्जया ) किंचित्किमपीप्सितमिष्टं मे मह्यं न शंसति नाचष्टे । केष वस्तुषु स्पृहावती ( साभिलाषा ) इत्यनुवेलमनुक्षणमादृत आदृतवान् । कर्तरि क्तः । '' आदृतौ सादरार्चितौ '' इत्यमरः । प्रियायाः सखीः सहचरीरुत्तरकोशलेश्वरो दिलीपः पृच्छति स्म पप्रच्छ । '' लट् स्मे '' इत्यनेन भूतार्थे लट् । सखीनां विश्रम्भभूमित्वादिति भावः ।

६. दोहदं गर्भिणीमनोरथः । '' दोहदं दौर्हृदं श्रद्धा लालसं च समं स्मृतम् '' इति हलायुधः । सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावतामुपेत्य प्राप्य यद्वस्तु वव्र आचकाङ्क्ष तदाहृतमानीतम् । भर्त्रेति शेषः । अपश्यदेव । अलभतेत्यर्थः । कुतः । हि यस्मादस्य भूपतेस्त्रिदिवेऽपि स्वर्गेऽपीष्टं वस्त्वनासाद्यमनवाप्यं नाभूत् । किं याच्ञया । नेत्याह—अधिज्यधन्वनः ( अधिज्यकार्मुकस्य ) इति । न हि वीरपत्नीनामलभ्यं नाम किंचिदस्तीति भावः । अत्र वाग्भटः—'' पादशोफो विदाहोऽन्ते श्रद्धा च विविधात्मिका '' इति । एतच्च पत्नीमनोरथपूरणाकरणे दृष्टदोषसंभवात् । न तु राज्ञः प्रीतिलौल्यात् । तदुक्तम्—'' देयमप्यहितं तस्यै हिताय हितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा '' । अन्यत्र च—'' दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् '' इति ।

७. सा सुदक्षिणा क्रमेण दोहदव्यथां ( गर्भपीडां ) च निस्तीर्य ( अतिक्रम्य ) प्रचीयमानावयवा पुष्यमाणावयवा सती । पुराणपत्त्राणामपगमात् ( जीर्णपर्णपरित्यागादर्थात् ) नाशादनन्तरं संनद्धाः संजाताः प्रत्यग्रत्वान्मनोज्ञाः पल्लवाः यस्याः सा लतेव ( वल्लीव ) । रराज ( शुशुभे ) । लक्षणान्तरं वर्णयति—

८. दिनेषु दोहददिवसेषु गच्छत्सु सत्सु नितान्तपीवरमतिस्थूलम् । आ समन्तान्नीलं मुखं चूचुकं यस्य तत् । तदीयं स्तनद्वयम् ( कुचयुगं ) । भ्रमरैरभिलीनयोरभिव्याप्तयोः सुजातयोः सुंदरयोः । [ '' सुजातं सुन्दरे प्रोक्तं सत्यजाते च वस्तुनीति '' विक्रमः—चा० ] । पङ्कजकोशयोः पद्ममुकुलयोः श्रियं ( शोभां ) तिरश्चकार ( अधरीचक्रे ) । अत्र वाग्भटः—'' अम्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ '' इति ।

objects" Thus did the lord of the Uttarakosals constantly make inquiries of her loved-female companions through politeness.

6. Whatever things she expressed a desire for, in her painful temperament through the qualms of pregnancy, she saw it brought to her without loss of time, nor was it a wonder, for there was nothing that he desired, even in heaven, which was unobtainable by the lord of the earth, when he put the string to his bow.

7. The trying days of the painful condition of pregnancy were gradually over and a singular loveliness returned to her limbs, wherewith she looked like a beautiful creeper adorned with crowns of fresh foliage, after the old and yellow ones had been dropped.

8. As days rolled on her breasts increased in their dimensions, and their nipples became black; thus they put to shame, as it were, the loveliness of two charming lotus-buds surmounted by two black bees.

6. B. C. G. Chà. Din. Va. and Su, अस्याः for अस्य; A. D. Chà. Din. Va. and Su., बभूव दुष्प्राप्यं for अभूदनासाद्यम्.

8. D. मधूकपाण्डुरं for नितान्तपीवरं. D. आश्याममुखं for आनीलमुखं; D. G. Chà. Din and Su., भ्रमरावलीढयोः for भ्रमराभिलीनयोः. Su. and F. first commenting upon

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥
प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगन्तसम्पदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥ १० ॥
सुरेन्द्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥ ११ ॥

नृपः ससत्त्वामापन्नसत्त्वाम् गर्भिणीमित्यर्थः । "आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । महिषीम् ( पट्टराज्ञीं ) । निधानं निधिर्गर्भे यस्यास्तां सागराम्बरां समुद्रवसनाम् । भूमिमिवेत्यर्थः । "भूतधात्री रत्नगर्भा विपुला सागराम्बरा" इति कोशः । अभ्यन्तरे ( मध्ये ) लीनः ( लग्नः ) पावकः ( अग्निः ) यस्यास्तां शमीमिव । शमीतरौ वह्निरस्तीत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति । अन्तःसलिलामन्तर्गतजलां सरस्वतीं । [ म्लेच्छदेशेषु सा ह्यन्तर्धाय भूयः पुण्यप्रदेशेषूद्भवतीति पुराणवार्त्तेति–व० सरस्वत्याः ऊर्ध्वं वालुकाः पातालान्तर्गतं जलमिति वार्त्तामात्रं–चा० ] । नदीमिव [ एतेनपीनत्वोक्तिः–चा० ] । अमन्यत । एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि । [ मालोपमा–चा० ] ।

१०. धीरः स राजा प्रियायामनुरागस्य स्नेहस्य । मनसः समुन्नतेरौदार्यस्य । भुजेन भुजबलेन करेण वार्जितानाम् । न तु वाणिज्यादिना । दिगन्तेषु संपदाम् । धृतेः पुत्रो मे भविष्यतीति संतोषस्य च । "धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु" इति विश्वः । सदृशीरनुरूपाः । पुमान्सूयतेऽनेनेति पुंसवनम् । ( "व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत् । गर्भेऽव्यक्ते तृतीये चेच्चतुर्थे मासि वा भवेदिति शौनकः । कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा । मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे" इति वशिष्ठः ) । तदादिर्यासां ताः क्रिया यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान् । आदिशब्देनानवलोभनसीमन्तोन्नयने गृहीते । अत्र मासि द्वितीये तृतीये वा पुंसवनं यदाह–" पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्" इति पारस्करः । "चतुर्थेऽनवलोभनम्" इत्याश्वलायनः । "षष्ठेऽष्टमे वा सीमन्तोन्नयनम्" इति याज्ञवल्क्यः ।

११. गृहागतो नृपः सुरेन्द्राणां लोकपालानां मात्राभिरंशैराश्रितस्यानुप्रविष्टस्य गर्भस्य गौरवाद्भारात्प्रयत्नेन मुक्तासनया । आसनादुत्थितयेत्यर्थः । उपचारस्याञ्जलावञ्जलिकरणे खिन्नहस्तया ( उपचारार्थं योऽञ्जलिस्तेन खिन्नौ हस्तौ यस्याः तया तथोक्तया ) पारिप्लवनेत्रया तरलाक्ष्या । "चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इत्यमरः । तया सुदक्षिणया ननन्द । "सुरेन्द्रमात्राश्रित–" इत्यत्र मनुः–"अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः" इति ।

---

9. Seeing which the king at once concluded that the queen was with child, resembling in that respect the ocean-garmented earth with all the valuable contents of her bowels, or the शमी tree with the fire latent in its interior, or the river सरस्वती with its stream of water hidden under sand.

10. The wise monarch ordered all the usual पुंसवन and other ceremonies to be duly performed, in a manner suited to the great love he bore to the queen, to the magnanimity of his heart, to the immense wealth acquired from the furthest ends of the quarters by the valour of his arms and also to the great joy he felt at the happy prospect of getting a son.

11. When the king entered the queen's apartments, she would raise herself, with difficulty, from her seat, so great was the pressure of her new and divinely animated burden, and as she joined her hands as a mark of respect to her husband, they seemed to be too feeble even for that

---

this stanza, comment also upon a slightly different reading of the same, "दिनेषु गच्छत्सु मधूकपाण्डुरं तदीयमाश्यामामुखं स्तनद्वयं समुद्रयोर्वारणदन्तकोशयोः । बभार कान्तिं गवलापिधानयोः" । F. has समुद्रभो for समुद्गयोः॰ and ॰पिधान्ययोः for पिधानयोः ।

10. D. श्रुतेः for धृतेः So also noticed by Châ. and Din.

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥१२॥
ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ १३ ॥

१२. अथ । कुमारभृत्या बालचिकित्सा । [ शल्यं शलाकं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतंत्रं वाजीकरणमित्यष्टावङ्गानीति सुश्रुते–चा० ] । "संज्ञायां समजनिषद–" इत्यादिना क्यप् । तस्यां कुशलैः कृतिभिः । ( प्रवीणैरिति यावत् ) । "कृती कुशलः" इत्यमरः । आप्तैर्हितैः भिषग्भिर्वैद्यैः । "भिषग्वैद्यौ चिकित्सकौ" इत्यमरः । गर्भस्य भर्मणि भरणे । "भरणे पोषणे भर्म" इति हैमः । "भृतिर्भर्म" इति शाश्वतः । भृञो मनिच्प्रत्ययः । अनुष्ठिते कृते सति । [ अजातेपि कुमारे कुमारभृत्याप्रयोगो न दोषाय कुमारभृत्या गर्भकर्मणि प्रजने च क्रियते इति कौटिल्येनोक्तत्वात्–चा० ] । काले दशमे मासि । अन्यत्र ग्रीष्मावसाने । प्रसवस्य गर्भमोचनस्योन्मुखीम् । आसन्नप्रसवामित्यर्थः । "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः । प्रियां भार्याम् । अभ्राण्यस्याः संजातान्यभ्रिता ताम् । "तदस्य संजात तारकादिभ्य इतच्" इतीतच्प्रत्ययः । दिवमिव । पतिर्भर्ता प्रतीतो हृष्टः सन् । "ख्याते हृष्टे प्रतीतः" इत्यमरः । ददर्श दृष्टवान् ।

१३. ततः शच्येन्द्राण्या समा ( तुल्या ) । "पुलोमजा शचीन्द्राणी" इत्यमरः । सा सुदक्षिणा समये प्रसूतिकाले सति । दशमे मासीत्यर्थ । "दशमे मासि जायते" इति श्रुतेः । उच्चसंश्रयैः । [ग्रहाणां द्विविधमुच्चत्वं राशिकृतं भागकृतं च तत्र प्रथमराशौ सूर्यस्योच्चता दशभागेषु । वृषे शीतगोस्त्रिषु भागेषु हरौ कुजस्याष्टाविंशेषु । कन्यायां बुधस्य पंचदशसु भागेषु । कर्के गुरोः पंचमु भागेषु । मीनेशुक्रस्य सप्तविंशतिभागेषु । तुलायां शनेर्विंशतिभागेषु–चा०] । उच्चसंस्थैस्तुङ्गस्थानगैरसूर्यगैरनस्तमितैः । [सर्वे ग्रहाः सूर्यराशिगता उच्यंते । उक्तं च । क्रूराक्रांतः क्रूरगतः क्रूरदृष्टस्तु यो ग्रहः विरश्मितां प्रपन्नश्च स विनष्टो बुधैः स्मृतः–चा०] । कैश्चिद्यथासंभवं पञ्चभिर्ग्रहैः सूचिता भाग्यसंपद्यस्य तं पुत्रम् । [ एकेन ग्रहेण सुखी द्वाभ्यां श्रेष्ठस्त्रिभिर्नृपतुल्यश्चतुर्भिर्नृपः पञ्चभिर्देवः इति भाग्यसंपद–चा० ] । त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः सा त्रिसाधना शक्तिः । "शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इत्यमरः । अक्षयमर्थमिव । असूत ( प्रासोष्ट ) । "षूङ् प्राणिगर्भविमोचने" इत्यात्मनेपदिषु पठ्यते । तस्माद्धातोः कर्तरि लङ् । अत्रेदमनुसन्धेयम्—" अजवृषभ

---

purpose, and there was a peculiar sense of help-less ness in her looks, which immensely pleased the monarch.

12. In the course of time after the measures of nourishment of the fœtus had been taken by the competent physicians skilled in the treatment of infants the king looked upon the queen, who had approached the time of her confinement, with the same satisfaction with which men behold the sky looking heavy with clouds, about to discharge their contents in the shape of a shower of rain at the close of summer

[illegible] At last, as three-fold kingly power brings on an undecaying store of wealth, so the queen, [illegible]mbled शची, brought forth in time a son, at whose birth five auspicious stars occupied the highest points ( apexes of their orbits ) in the heavens and did not set,—thus betokening the most exalted fortune that lay before the new-born babe in future.

---

12. B. C. Chà. Va. and Su., अधिष्ठिते for अनुष्ठिते; A. and Din. गर्भभर्मणि. D. गर्भकर्मणि. where Malli—'गर्भकर्मणि' इति पाठे गर्भाधानप्रभृतावौचित्यभङ्गः, B. C. G. Chà. Va. and Su., गर्भवेश्मनि. Chà. also notices गर्भरक्षणं. Chà. notices निरत्ययाय प्रसवाय तस्थुषीं for पतिः प्रतीतः प्रसवोन्मुखीं.

13. D. Chà. °संस्थितैः for °संश्रयैः; C. D. सूनुं for पुत्रं; A. D. अक्षतं for अक्षयं.

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४ ॥
अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥
जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥

मृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ” इति । सूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि । स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि । तत्रापि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः । यथाह नारदः—“ त्रिंशद्भागात्मकं लग्नम् ” इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके—“ रविणास्तमयो योगो वियोगस्तूदयो भवेत् ” इति । ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—“ स्वोच्चे पूर्णं स्वर्क्षकेऽर्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किंचित्पादं नूनं स्वत्रिकोणे ददाति ” इति । तदिदमाह कविरुच्चसंस्थैरसूर्यगैरिति च । एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गी भवति । तदुक्तं कूटस्थीये—“ सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः ” इति । तदिदमाह पञ्चभिरिति ।

१४. तत्क्षणं तस्मिन्क्षणे ( जन्मसमये )। कालाध्वनोरत्यन्तसंयोगे द्वितीया । दिशः प्रसेदुः प्रसन्ना बभूवुः । मरुतो वाताः सुखा मनोहरा ववुः । अग्निः प्रदक्षिणार्चिः सन्हविराददे स्वीचकार । इत्थं सर्वं शुभशंसि शुभसूचकं बभूव । तथाहि । तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदयाय (परोन्नतये अर्थात्परोपकाराय )। भवतीति शेषः । ततो देवा अपि संतुष्टा इत्यर्थः ।

१५. “ अरिष्टं सूतिकागृहम् ” इत्यमरः । अरिष्टे सूतिकागृहे शय्यां तल्पं परितोऽभितः । “ अभितः परितः समयानिकषाहाप्रतियोगेषु दृश्यते ” इति द्वितीया । विसारिणा । सुजन्मनः शोभनोत्पत्तेः । “ जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ” इत्यमरः । तस्य शिशोः ( कुमारस्य ) निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयः निशीथदीपा अर्धरात्रप्रदीपाः । “ अर्धरात्रनिशीथौ द्वौ ” इत्यमरः । आलेख्यसमर्पिताश्चित्रार्पिता इव बभूवुः । निशीथशब्दो दीपानां प्रभाधिक्यसंभावनार्थः ।

१६. भूपतेर्दिलीपस्यामृतसमिताक्षरममृतसमानाक्षरम् । “ सरूपसमसंमिताः ” इत्याह दण्डी । कुमारज-

---

14. That very moment the quarters became fair with the weather cleared off ; the breeze began to blow pleasant and cool , and the sacrificial fire, with an encircling flame on the right, received the offerings , in short, everything had an augury of good ; since it is for the good of the world that these great ones are born.

15. The midnight lamps suddenly lost their lustre and looked like lights painted on canvass on account of the well-born infant's own splendour spreading around the bed in the lying-in-chamber.

16. When the attendants of the ladies' apartments announced to the lord of the earth the

---

14. C. G. Chà. Din. and Su., हुत for हविः; D. G. and Su., तत्क्षणे for तत्क्षणं.

16. Between 16-17. B. Chà. Va. and Su., read and comment upon the following :-“ समीक्ष्य पुत्रस्य चिरात्पुत्रमुखं पिता निधानकुम्भस्य युवेव दुर्गतः । मुदा शरीरे प्रबभूव नात्मनः । पयोधिरिन्दूदयमूर्छितो यथा ” Va. has स वीक्ष्य for समीक्ष्य, पिता मुखं for मुखं पिता and मुदः for मुदा.

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥
स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥
सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥ १९ ॥

न्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचरायान्तःपुरचारिणे जनाय । [ " शुद्धान्तःस्यादन्तःपुरम् " इत्यभिधानचिन्तामणिः चा० ] । त्रयमेवादेयमासीत् ( दातुमशक्यमभूत् ) । किं तत् । शशिप्रभमुज्ज्वलं छत्रं । उभे चामरे च । छत्रादीनां राज्ञः प्रधानाङ्गत्वादिति भावः ।

१७. निवातो [ वातस्याभावः निवातं–चा० ] निर्वातप्रदेशः । " निवातावाश्रयावातौ " इत्यमरः । तत्र यत्पद्मं तद्वत्स्तिमितेन निष्पन्देन । ( निश्चलेन इति यावत् ) । चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतः तृष्णया पश्यतो नृपस्य गुरुरुत्कटः प्रहर्षः ( आनन्दः ) । कर्ता । इन्दुदर्शनात् ( चन्द्रविलोकनात् ) गुरुर्महोदधेः ( समुद्रस्य ) पूरो जलौघ इव । आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक । अन्तर्न माति स्मेति यावत् । नह्यल्पाधारेऽधिकं मीयत इति भावः । यद्वा हर्षं आत्मनि स्वस्मिन्विषये न प्रबभूव । आत्मानं नियन्तुं न शशाक । किंतु बहिर्निर्जगामेत्यर्थः ।

१८. स दिलीपसूनुः । तपस्विना पुरोधसा पुरोहितेन । " पुरोधास्तु पुरोहितः " इत्यमरः । वशिष्ठेन । तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यं स्यादिति भावः । तपोवनादेत्यागत्य । अखिले समग्रे जातकर्मणि जातस्य कर्तव्यसंस्कारविशेषे कृते सति । प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः । आकरोद्भवः खनिप्रभवः । " खनिः स्त्रियामाकरः स्यात् " इत्यमरः । मणिरिव । अधिकं बभौ ( रेजे ) । वशिष्ठमन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः । अत्र मनुः—" प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते " इति ।

१९. सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः । श्रुतिसुखा इत्यर्थः । मङ्गलतूर्यनिस्वना मङ्गलवाद्यध्वनयो वारयोषितां वेश्यानाम् । " वारस्त्री गणिका वेश्या रूपाजीवा " इत्यमरः । प्रमोदनृत्यैर्हर्षनर्तनैः सह मागधीपतेर्दिलीपस्य सद्मनि केवलं गृह एव न व्यजृम्भन्त ( वादयामासुः ) । किंतु । द्यौर्गेहो येषां ते दिवौकसो देवाः । पृषोदरादित्वात्साधुः । तेषां पथ्याकाशेऽपि व्यजृम्भन्त । तस्य देवांशत्वाद्देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ।

---

birth of his son, in words which sounded to him sweet as nectar, and so great was his joy, that there were only three things that he could not give away as marks of his exceeding pleasure—his white imperial umbrella splendid like the moon and his two *Chauries*

17. As the king drank up the lovely little face of his son, with eyes, motionless like a lotus-leaf in a breezeless tank, his great joy overflew all its bounds (lit could not contain within himself), as overflows the great ocean at the sight of the moon

18. After all the post-birth ceremonies had been performed by the family priest, the holy sage Vasistha, who came from the penance-grove for that purpose, the infant son of दिलीप assumed an additional glory like unto a piece of precious stone dug out of a mine of the earth, after it had undergone the process of polishing

19. The sounds, pleasing to the ear, of auspicious musical instruments (drums) accompanied by the delightful dancing of the courtezans, could be heard not only in the palace of the king—

17. A. D. निवीत,° G. निर्वात° for निवात°; B. C. and Va., प for न.
19. A. D. प्रमोदनृत्तैः for प्रमोदनृत्यैः.

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥
श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥
पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥

२०. रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य। अत एव चौराद्यभावात् । ( कारागृहे ) संयतो बद्धो न बभूव नाभूत् । [ युवराजाभिषेके च परचक्रावमर्दने । पुत्रजन्मनि वा मोक्षो बद्धस्य हि विधीयते–हे० ] । किं तेनात आह––विसर्जयेदिति । सुतजन्मना हर्षितस्तोषितः सन् । स यं बद्धं विसर्जयेद्विमोचयेत् । किंतु स राजा तदा पितॄणामृणाभिधानाद्बन्धनात्केवलमेकं यथा तथा । स्वयमेव । एक एवेत्यर्थः । " केवलः कृत्स्न एकश्च केवलश्चावधारितः " इति शाश्वतः । मुमुचे । कर्मकर्तरि लिट् । स्वयमेव मुक्त इत्यर्थः । [ यथा सुते जाते जनकः पितॄणामृणान्मुच्यते इत्यागमः–सु० ] । अस्मिन्नर्थे––" एष वा अनृणो यः पुत्री " इति श्रुतिः प्रमाणम् ।

२१. अर्थविच्छब्दार्थज्ञः पार्थिवः पृथिवीश्वरो दिलीपः । अयमर्भको बालकः श्रुतस्य शास्त्रस्यान्तं पारं यायात् । ( यावज्ज्ञातव्यं जानीयात् ) । तथा युधि ( संग्रामे ) परेषां शत्रूणामन्तं पारं च यायात् । यातुं शक्नुयादित्यर्थ. । [ उत्प्रेक्षा व्यग्या–चा० ] । " शकि लिङ्च " इति शक्यार्थे लिङ् । इति हेतोर्धातोः " अघिवघिलघि गत्यर्थाः " इति लघिधातोर्गमनाख्यमर्थमर्थविच्त्वादवेक्ष्यालोच्य । आत्मसंभवं पुत्रं नाम्ना रघुं चकार । " लङ्घिबंह्योर्नलोपश्च " इत्यप्रत्यये वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यत इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् । अत्र शङ्खः–" अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते " इति ।

२२. स रघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नात् ( पालनादिनियमात् ) शुभैर्मनोहरैः शरीरावयवैः ( अंगोपांगैः ) । हरिदश्वदीधितेः सूर्यस्य रश्मेः । " भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः " इत्यमरः । अनुप्रवेशाद्बालचन्द्रमा इव । [ श्रीसूर्यस्य सुखनाम्ना अमा नाम कला तस्याः प्रवेशात् । चन्द्रमाः किल सूर्यस्य सुखनाम्ना नाम नाडिकामनुप्रविश्य वर्धते–व० ] । दिने दिने प्रतिदिनम् । " नित्यवीप्सयोः " इति द्विर्वचनम् । वृद्धिं पुपोष । [ अमावास्यायां चन्द्रो रवौ गच्छति प्रतिपदि निःसरति ततः उदयं प्राप्य यथा दिने दिनं वर्द्धते तथायमपि ववृधे इत्यर्थः–चा० ] । अत्र वराहसंहिता वचनम्––" सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः " इति ।

the husband of the Magadha princess but also in the path of the gods ( lit. those whose abode is heaven ).

20. The protector, finding no prisoners whom, delighted at the birth of a son, he might liberate, only freed himself from the bond of his forefathers, that went under the name of a debt.

21. Feeling that the boy was destined to go to the furthest ends of learning and also of martial proficiency in his wars with his enemies, the king skilled in the art of wordiness called him *Raghu*,——a word formed from a verb-root meaning the act of going.

22. As by the reflection of the sun's rays, the crescent of the moon waxes larger and larger every day, so the little prince throve in all his handsome limbs of the body, under the care of his sire who had all the treasures at his command.

---

20. D. G. Din. and Châ., विमोचयेत् for विसर्जयेत्.

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरंदरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३ ॥
रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २४ ॥
उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥ २५ ॥
तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥

२३. उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्तिकेयेन । " कार्तिकेयो महासेनः शरजन्मा षडाननः " इत्यमरः । यथा ननन्दतुः ( मुमुदिरे ) । शचीपुरंदरौ जयन्तेन जयन्ताख्येन सुतेन । " जयन्तः पाकशासनिः " इत्यमरः । यथा ननन्दतुः । तथा तत्समौ ताभ्यामुमावृषाङ्काभ्यां शचीपुरंदराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां सदृशेन सुतेन ननन्दतुः । मागधी प्रागुक्ताख्याता ।

२४. रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ । " पुमान्स्त्रिया " इत्येकशेषः । तयोरिव तयोर्दंपत्योर्भावबन्धनं [ चेतोवृत्तिगुम्फनं-व० चित्तवृत्तिबन्धस्थानं मैत्रीकारणं-चा० ] हृदयाकर्षकं परस्पराश्रयमन्योन्यविषयं यत्प्रेम बभूव तदेकेन केवलेन ताभ्यामन्येन वा । " एकमुख्यान्यकेवलाः " इत्यमरः । सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि पर्यचीयत ववृधे । कर्मकर्तरि लिट् । अकृत्रिमस्वात्स्वयमेवोपचितमित्यर्थः । यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं हीयते । अत्र तु तयोः प्रागेकैककर्तृकमेकैकविषयं प्रेम संप्रति द्वितीयविषयलाभेऽपि नाहीयत । प्रत्युतोपचितमेवाभूदिति भावः । ( अद्वैत सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद् इत्येव समार्थः श्लोकांशः ) ।

२५. सोऽर्भकः शिशुः । " पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः " इत्यमरः । धात्र्योपमात्रा । "धात्री जनन्यामलकीवसुमत्युपमातृषु " इति विश्वः । प्रथममुदितमुपदिष्टं वच उवाच । तदीयामङ्गुलिमवलम्ब्य ( धृत्वा ) ययौ च । प्रणिपातस्य शिक्षयोपदेशेन नम्रोऽभूच्च । इति यत्तेन पितुः ( जनकस्य ) मुदं ( हर्षं ) ततान ।

२६. शरीरयोगजैः ( देहसंगमजातैरर्थात्पुत्रालिंगनसमुत्थितैः ) सुखैस्त्वचि त्वगिन्द्रियेऽमृतं ( सुधां )

23. As Parvati and Śankara, on whose flag was the sign of a bull, were delighted to have Kumára ( lit. one born in the reeds), and as Indra and Śachi, his wife, were delighted to have Jayanta, as their son, so the king and the Magadha-princess no way inferior to either of them were delighted to have the little prince as their heir of equal footing both with Kumára and Jayanta.

24. The affection which subsisted between them and which had fettered their hearts increased in its intensity toward each other though divided by their only son, like that of the male and female Chakraváka birds.

25. Gradually that little prince began to lisp out the words first taught by his nurse, and to exercise his little legs in walking by holding the proffered finger of the nurse, and also gently lowered his head in obedience to the nurse's command to bow to a superior,—all these little ways of the prince Raghu were a source of pleasure to his royal father.

26. As the king placed on his lap his infant son who infused, as it were, nectar into his

24. D. and Va., एकसुते न for एकसुतेन; A. D. पर्यचीयत, C. and Va. पर्यहीयत, also noticed by Chà., B. G. Chà. Din. and Su., न व्यहीयत.
25. B. D. शिशुस्ततान सः for ततान सोऽर्भकः

**अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।**
**स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २७ ॥**
**स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।**
**लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥**
**अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।**
**अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ २९ ॥**

निषिञ्चन्तं वर्षन्तमिव तं पुत्रमङ्कम् ( उत्संगं ) आरोप्य मुदातिभावादुपान्तयोः प्रान्तयोः संमीलितलोचनः ( प्रान्तमुद्रितनयनः ) सन् । नृपश्चिरात्सुतस्पर्शरसज्ञतां ( पुत्रस्पर्शरसाभिज्ञत्वं ) ययौ । ( असौ नृपतिश्चिरेण पुत्रस्पर्शसुखास्वादनरसमुपलेभे ) । रसः स्वादः ।

२७. स्थितेरभेत्ता मर्यादापालकः । [ एतेन स्वाचारनिष्ठत्वोक्तिः—चा० ] । स नृपः परार्ध्यजन्मनोत्कृष्टजन्मनानेन रघुणान्वयं वंशम् । प्रजानां पतिर्ब्रह्मा । गुणाः सत्त्वादयः । तेष्वग्र्येण मुख्येन सत्त्वेन वर्तते व्याप्रियत इति गुणाग्र्यवर्ती । तेन स्वस्य मूर्तिभेदेनावतारविशेषेण विष्णुनात्मनः सर्गं सृष्टिमिव । [ ब्रह्मत्वे सृजते लोकान्विष्णुत्वे पालयत्यपि रुद्रत्वे संहरत्येव तिस्रोवस्थाः स्वयंभुवः । इत्युक्तत्वान्मूर्तिभेदत्वम्—व०* ] । स्थितिमन्तं प्रतिष्ठावन्तममंस्त मन्यते स्म । मन्यतेरनुदात्तत्वादिट्प्रतिषेधः । अत्रोपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि । तत्र रघुपक्षे गुणा विद्याविनयादयः । " गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे । शुद्धे सत्त्वादिसध्यादिविद्यादिहरितादिषु " इति विश्वः । शेष सुगमम् ।

२८. " चूडा कार्या द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्या श्रुतिचोदनात् " इति मनुस्मरणात्तृतीये वर्षे वृत्तचूलो निष्पन्नचूडाकर्मा सन् ( वृत्त जात काकचूडाख्यं कर्म यस्य सः ) । डलयोरभेदः । स रघुः । " प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत् " इति वचनात्पञ्चमे वर्षे चलकाकपक्षकैश्चलशिखण्डकैः । " बालानां तु शिखाप्रोक्ता काकपक्षः शिखण्डकः " इति हलायुधः । सवयोभिः स्निग्धैः । [ समानवयस्कचलकाकपक्षकैः—चा० ] । " स्निग्धो वयस्यः सवयाः " इत्यमरः । अमात्यपुत्रैरन्वितः ( युक्तः ) सन् । लिपेः पञ्चाशद्वर्णात्मिकाया मातृकाया यथावद्ग्रहणेन सम्यग्बोधनोपायभूतेन वाङ्मयं शब्दजातम् । नद्या मुखं द्वारम् । " मुख तु वदने मुख्यारम्भे द्वाराभ्युपाययोः " इति यादवः । तेन ( सरिद्द्वारेण ) कश्चिन्मकरादिः समुद्रमिव । आविशत्प्रविष्टः । ज्ञातवानित्यर्थः । [ " वृत्तचूडकर्मा लिपिसंख्यानां चायुंजीत " इति चाणक्यः—चा० ] ।

२९. " गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः " इति

---

( father's ) skin through thrilling sensation produced from the touch of his body, his eyes closed at their corners with exceeding pleasure, he experienced the long desired joys of caressing his own child.

27. As the lord of all creatures considers the preservation of his creation secured by the incarnation of his own self in the shape of Vishnu possessed of the principal quality, so did the preserver of the hereditary traditions and customs feel the continuance of his line certain by reason of this prince of noble descent.

28. After the tonsure had been performed ( when the Chaula ceremony was over ) Raghu, attended by the sons of his father's courtiers of the same age with him, and wearing flowing locks, learnt his letters and entered thereby, as if through the mouth of a river, into the great ocean of learning.

29. Subsequently to the thread-ceremony, performed in accordance with the precepts, the learned preceptors who liked him much trained him carefully and found their attempts not unsuccessful here :—for efforts when directed to proper objects bear fruit i.e. seldom fail.

---

28. B. C. Va. and Su., वृत्तचूलः, A. वृत्तचौलः, D. G. Din and Chà., व्रतचूडः.
29. B. C. G. Chà. Din. and Su., अर्भके for अत्र ते.

**धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।**
**ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥**
**त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।**
**न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥**
**महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।**
**रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥**

मनुस्मरणादथ गर्भैकादशेऽब्दे विधिवदुपनीतं गुरुप्रियमेनं रघुं विपश्चितो विद्वांसो गुरवो विनिन्युः शिक्षितवन्तः । ते गुरवोऽत्रास्मिन्नवन्ध्ययत्नाः ( सफलप्रयत्नाः ) च बभूवुः । तथाहि । क्रिया शिक्षा । " क्रिया तु निष्कृती शिक्षाचिकित्सोपायकर्मसु " इति यादवः । वस्तुनि पात्रभूते । ( श्रेष्ठे इति यावत् ) । उपहिता प्रयुक्ता प्रसीदति फलति । ( पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्येत्येवं समार्थः श्लोकांशः ) । " क्रिया हि द्रव्यं विनयति नाद्रव्यम् " इति कौटिल्यः ।

३०. अत्र कामन्दकः— " शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः " इति । " आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः " इति च । उदारधीरुत्कृष्टबुद्धिः । [ शुश्रूषा श्रवणं चैव ग्रहणं चिंतनं तथा कथनं स्थितिहेतवः इति कामंदकः–चा० ] । स रघुः समग्रैर्धियः ( बुद्धेः ) गुणैः । चत्वारोऽर्णवा उपमा यासां ताश्चतुरर्णवोपमाः । [ एतेन विद्यानां महत्त्व–चा० ] । " तद्धितार्थोत्तरपदसमाहारे च " इत्युत्तरपदसमासः । ( आन्वीक्षिक्यादि– ) चतस्रो विद्याः । हरितां दिशामीश्वरः सूर्यः पवनातिपातिभिः ( वायुमतिक्रमितुं शीलं येषां तैः वातादपि वेगवत्तरैः ) हरिद्भिः ( नीलतुरगैः ) निजाश्वैः । " हरित्ककुभि वर्णे च तृणवाजिविशेषयोः" इति विश्वः । चतस्रो दिशः इव । क्रमात्ततार (पारं ययौ) । चतुरर्णवोपमत्वं दिशामपि द्रष्टव्यम् ।

३१. स रघुः "कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि च ' इति मनुस्मरणान्मेध्यां शुद्धां रौरवीं रुरुसंबन्धिनीम् । ( रुरुश्चित्रमृगस्तत्सबन्धिनीं ) । " रुरुर्महाकृष्णसारः " इति यादवः । त्वचं चर्म परिधाय वसित्वा मन्त्रवत्समन्त्रकमस्त्रमाग्नेयादिकं पितुरेवोपाध्यायादशिक्षताभ्यस्तवान् । " आख्यातोपयोगे " इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति—नेति । तद्गुरुरेकोऽद्वितीयः पार्थिवः केवलं पृथिवीश्वर एव नाभूत् । किंतु क्षितौ स दिलीप एको धनुर्धरोऽप्यभूत् । ( धत्ते त्वचं रौरवीमित्येवं समार्थः श्लोकांशः ) ।

३२ रघुः क्रमाद्यौवनेन भिन्नशैशवो निरस्तशिशुभावः सन् । महानुक्षा महोक्षो महर्षभः । " अचतुर–"

---

30. Raghu, of sublime genius, by dint of all his intellectual faculties gradually got across the four lores resembling the four oceans, as the Lord of the quarters (the sun) passes over the (four) directions by means of his bay horses, surpassing the Wind (in speed).

31. Clad in the sacred skin of the *ruru* deer, he learnt the art of missiles charged with all its mysterious incantations from his father himself; for his royal sire was not only the sole sovereign of the earth but also the sole warrior on it.

32. As the young calf grows in time into the big bull, and the infant elephant attains the state of a majestic beast, so Raghu after the days of childhood stepped into the happy period of youth, and thus maintained a body charming on account of his gravity.

---

30. B. C. पवनातिवर्तिभिः. for पवनातिपातिभिः.

31. D. and Su, प्रशिक्षितास्त्रः for अशिक्षितास्त्रं; A. C. मंत्रविद् for मंत्रवत्.

32. D. and Su, गम्भीरमनोहरं for गाम्भीर्यमनोहर.

अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद्गुरुः ।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥ ३३ ॥
युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद्गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥
ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥ ३५ ॥

आदिसूत्रेण निपातनादकारान्तत्वम् । तस्य भावस्तत्ता । तां स्पृशन्गच्छन्वत्सतरो दम्य इव । " दम्यवत्सतरौ समौ " इत्यमरः । द्विपेन्द्रभावं महागजत्वं श्रयन्व्रजन्कलभः । [ " कलभस्त्रिंशदब्दकः " इति हैमः कोषः–चा० ] । करिपोत इव । गाम्भीर्येणाचापलेन मनोहरं ( रम्यं ) वपुः ( शरीरं ) पुपोष ।

३३. " गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु " इति केशवः । गावो लोमानि केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्तव्यं केशान्ताख्यं कर्मोच्यते । [ गोप्रशंसापूर्वकं तद्दानप्रकारः इति–हे० ] । तदुक्तं मनुना— " केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः " इति । अथ गुरुः पिता । " गुरुर्गीष्पतिपित्रादौ " इत्यमरः । अस्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयत् कृतवानित्यर्थः । अथ नरेन्द्रकन्यास्तं रघुम् । दक्षस्य सुता रोहिण्यादयस्तमोनुदं चन्द्रमिव । " तमोनुदग्नीन्दुर्केषु " इति विश्वः । सत्पतिमवाप्याबभुः ( शुशुभिरे ) । रघुरपि तमोनुत् । अत्र मनुः—" वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् " इति । [ब्रह्मचर्यमाषोडशात्तु ततो गोदानानंतरं दारकर्मेति चाणक्यः–चा० ] । संप्रति यौवराज्ययोग्यतामाह—

३४. युवा ( तरुणः ) युगो नाम धुर्यस्कन्धगः सच्छिद्रप्रान्तो यानाङ्गभूतो दारुविशेषः । " यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु " इत्यमरः । युगवद्व्यायतौ दीर्घौ बाहू यस्य सः । अंसावस्य स्त इत्यंसलो बलवान् । मांसलश्चेति वृत्तिकारः । [ मनोज्ञस्कन्धः–सु० ] । " बलवान्मांसलोंऽसलः " इत्यमरः । " वत्सांसाभ्यां कामबले " इति लच्प्रत्ययः । कपाटवक्षाः (कपाटवद्विशालं विस्तीर्णं वक्षो हृदयं यस्य सः) परिणद्धकन्धरः परिणद्धा दृढा कन्धरा ग्रीवा यस्य सः) विशालग्रीवः । "परिणाहो विशालता" इत्यमरः । रघुर्वपुषः प्रकर्षादाधिक्याद्यौवनकृताद्गुरुं पितरमजयत् । तथापि विनयान्नम्रत्वेन नीचैरल्पकोऽदृश्यत । अनौद्धत्यं च विवक्षितम् । संप्रति तस्य यौवराज्यमाह—

३५. ततः आत्मना ( स्वेन ) चिरं ( चिरकालं ) धृतां ( गृहीतां ) नितान्तगुर्वीम् । " वोतो गुणवचनात् " इति ङीष् । प्रजानां धुरं पालनप्रयासं लघयिष्यता लघुं करिष्यता । " तत्करोति तदाचष्टे " इति

---

33. Then after the ceremony of cropping the hair ( गोदान ), his royal father celebrated his marriage ceremony ; and the pretty princesses obtaining him for their virtuous husband, looked as though they were the daughters of Daksha married to the moon (lit. the remover of darkness).

34. The youthful prince Raghu, possessed of arms long as a pole, with ample shoulders, with a chest broad as a board and of a large neck, excelled even his father in bodily height and strength ; though always looking rather lowly from the innate modesty of his nature.

35. Then the king desirous of lightening the very heavy yoke of governing his subjects, which he had borne so long, made Raghu the holder of the title of young king, seeing that he was eminently fitted for it by reason of his naturally good-breeding and education.

33. B. C. G. Chà. Din. Va. and Su., तमोपहं for तमोनुदम्.
34. D. and Su., वपुःप्रहर्षात् for वपुःप्रकर्षात्.

नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥ ३६ ॥
विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥
नियुज्य तं होमतुरंगरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।
अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥
ततः परं तेन मखाय यज्वना तुरंगमुत्सृष्टमनर्गलं पुनः ।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥ ३९ ॥

लघुशब्दाण्णिच् । ततो " लटः सद्वा " इति शतृप्रत्ययः । नृपेण दिलीपेनासौ रघुर्निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतो नम्र इति हेतोः । युवराज इति शब्द भजतीति तथोक्तम् । "भजो ण्विः" इति ण्विप्रत्ययः । चक्र कृतः । " द्विविधो विनयः स्वाभाविकः कृत्रिमश्च " इति कौटिल्यः । तदुभयसंपन्नत्वात्पुत्रं युवराजं चकारेत्यर्थः । ( यौवराज्ये स्थापितः ) । अत्र कामन्दकः– " विनयोपग्रहान्भूत्यै कुर्वीत नृपतिः सुतान् । अविनीतकुमार हि कुलमाशुविशीर्यते । विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् " इति ।

३६. गुणान्विनयादीन्सौरभ्यादींश्चाभिलषतीति गुणाभिलाषिणी श्री राज्यलक्ष्मीः पद्माश्रया च नरेन्द्रो दिलीप एव मूलायतन प्रधानस्थान तस्मात् । अपादानात् । अनन्तरं सनिहितम् । युवराज इति संज्ञास्य संजाता युवराजसंज्ञितम् । तारकादित्वादितच्प्रत्ययः । आत्मनः पद स्थानमास्पदम् । " आस्पद प्रतिष्ठायाम् " इति निपातः । स रघुरित्यास्पदं तदास्पदम् । कमलाच्चिरोत्पन्नान्नवावतारमचिरोत्पन्नमुत्पलमिव । अंशेन ( भागेन ) अगच्छत् । [ "प्रभावः सूचिता मैत्री त्यागः सत्यं क्षमार्जवं । कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः " इति कामन्दकः–चा० ] । स्त्रियो हि गुनि रज्यन्ते इति भावः ।

३७. सारथिना सहायभूतेन । एतद्विशेषणमुत्तरवाक्येष्वप्यनुषञ्जनीयम् । वायुना विभावसुर्वह्निरिव । "सूर्यवह्नी विभावसू " इत्यमरः । घनव्यपायेन ( घनानां मेघानां व्यपायो नाशो यत्र तेन ) शरत्समयेन सारथिना गभस्तिमान्सूर्य इव । कटो गण्डः । " गण्डः कटो मदो दानम् " इत्यमरः । तस्य प्रभेदः स्फुटनम् । मदोदय इत्यर्थः । तेन करीव । पार्थिवो दिलीपस्तेन रघुणातितरामत्यन्तं सुदुःसहः( सोढुमशक्यः अर्थात् ) सुष्ठुसह्यो बभूव ।

३८. शतक्रतुरिन्द्र उपमा यस्य स शतक्रतूपमः ( इन्द्रतुल्यः ) स दिलीपः । " शतवै तुल्या राजपुत्रा देवा आशापालाः " इत्यादिश्रुत्या । राजसुतैः ( सामान्यराजपुत्रैः ) अनुद्रुतमनुगत धनुर्धरं ( धानुष्क ) तं रघुं होमतुरंगाणां रक्षणे नियुज्य ( व्यापार्य ) । एकेन क्रतुनापूर्णमेकोनं क्रतूनामश्वमेधानां शतमपविघ्नम पगतविघ्नं यथा तथाप ।

३९.ततः परमेकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुनःपुनरपि मखाय मखं (या-

36. The goddess of Dilipa's kingly power, enamoured of virtues, as it were, partly got herself transferred to the receptacle known by the title of young king, from her original receptacle, the king, as Sri gets possession of a fresh-grown lotus from the declining beauty of an old one.

37. As fire by its associate the wind, as by dispersion of clouds the sun, so the king became mightily unconquerable by him (his son), like an elephant by the opening of his temples.

38. Having appointed him who was a great warrior (lit. a great bowman) to the protection of the sacrificial steed, followed by other princes, Dilipa who was second only to Him of one hundred intellects completed ninety-nine sacrifices without any hinderance.

39. After this Sakra with his person invisible carried away even in the presence of the ar-

37. A. C. G. Chà. Din. Val. and Su., सुदुःसहः, D. दुरासदः, B. दुरुत्सहः.

39. A. D. Chà. Din. Va. and Su., अतः for ततः; A. D. रक्षिणां, B. पश्यतां,

**विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ।**
**वशिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥ ४० ॥**
**तदङ्गनिस्पन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।**
**अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥**
**स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः ।**
**पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२ ॥**

गं ) कर्तुम् । " क्रियार्थोपपदस्य–" इत्यादिना चतुर्थी । उत्सृष्ट मुक्तमनर्गलमप्रतिबन्धम् । अव्याहतस्वैरगतिमित्यर्थः । " अपर्यावर्तयन्तोऽश्वमनुचरन्ति " इत्यापस्तम्बस्मरणात् । तुरंग धनुर्भृतां रक्षिणां रक्षकाणामग्रतः ( पुरस्तात् ) एव शक्रः ( इन्द्रः ) गूढविग्रहः ( गुप्तकायः ) सन् ( अन्तर्हितशरीरः सन् । अर्थादात्मानं निगुह्य )। जहार किल । किलेत्यैतिह्ये ।

४०. तत्कुमारस्य सैन्यं सेना ( रघुकटकं ) सपदि ( सद्यः) ।विषाद इष्टनाशकृतो मनोभङ्गः । तदुक्तम्– " विषादश्चेतसो भङ्ग उपायाभावनाशयोः " इति । तेन लुप्ता ( नष्टा ) प्रतिपत्तिः कर्तव्यज्ञानं यस्य तत्तथोक्तम् । विस्मितमश्वनाशस्याकस्मिकत्वादाश्चर्याविष्टं सत् । ( निश्चल ) स्थितं तस्थौ । अथ श्रुतप्रभावा । [श्रुतः प्रभावो रघूत्पत्तिवरप्रदानलक्षणो यस्याः सा आकर्णितमाहात्म्या–चा० ] । यदृच्छया स्वेच्छयागता । रघोः स्वप्रसादलब्धत्वादनुजिघृक्षयेति भावः । नन्दिनी नाम वशिष्ठधेनुश्च ददृशे । द्वौ चकारावविलम्बसूचकौ । [ द्वौ चकारौ तुल्यकालापेक्षां गमयत–चा० व० ] ।

४१. सतां ( भव्यजनानां मध्ये ) पुरस्कृतः पूजितो दिलीपनन्दनो रघुः पुण्येन ( पवित्रेण ) तस्या नन्दिन्या यदङ्गं तस्य निस्पन्दो द्रवः स एव जलम् । मूत्रमित्यर्थः । तेन [ स्वेदेनेति–चा० ]। लोचने (नेत्रे) प्रमृज्य शोधयित्वा । अतीन्द्रियेष्विन्द्रियाण्यतिक्रान्तेषु । " अत्यादयः क्रान्ताद्यर्थे द्वितीयया " इति समासः । द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु । परवल्लिङ्गताप्रतिषेधाद्विशेष्यनिघ्नत्वम् । भावेष्वपि वस्तुषूपपन्नदर्शनः संपन्नसाक्षात्कारशक्तिर्बभूव ।

४२. नरदेवसंभवः ( नरदेवाद्दिलीपात्संभवः उत्पत्तिर्यस्य ) स रघुः पुनः पुनः ( मुहुर्मुहुः ) सूतेन ( सारथिना ) निषिद्धचापलं निवारितौद्धत्य रथस्य रश्मिभिः प्रग्रहैः ।"किरणप्रग्रहौ रश्मी" इत्यमरः । संयतं बद्धमश्वं हरन्तं पर्वतपक्षाणां ( गिरिपक्षाणाम् ) शातनं छेदकं देवमिन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श ( अद्राक्षीत् )।

---

chers, his guards, the sacred steed which was let loose unrestrained again by him the sacrificer with a view to perform the last sacrifice.

40. Scarcely the prince's army remained astounded, being instantly deprived of all actions on account of the deep dejection consequent on the loss of the steed, when it beheld Vasishtha's cow—Nandini by name—of celebrated power, come accidentally (by the way).

41. The son of Dilipa, esteemed by the good, cleansed his eyes with the sacred water trickling down from her body (i.e her urine), and thus he became endued with the power of seeing objects that were beyond the reach of his senses (mortal eyes).

42. He, sprung from the lord of men, then beheld in the orient the great god, the destroyer of the wings of the mountains, carrying away the sacred steed which was tethered by the slender cords to his chariot, and whose shyness was ever and anon lashed by the divine charioteer.

C. G. Châ. Din. Va. and Su., रक्षताम्.; A. B. C. D. Châ. Din. Val. and Su. गूढविग्रहः, G. मूढविग्रहः.

42. G. has °पक्षशातिन for °पक्षशातनं.

शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥
मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥ ४४ ॥
त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥ ४५ ॥
तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरंगं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६ ॥

४३. रघुस्तमश्वहर्तारमनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णां ( नेत्राणां ) शतैर्हरिभिर्हरिद्वर्णैः ( नीलवर्णैः–सु० )। " हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः " इति विश्वः । वाजिभिरश्वैश्च हरिमिन्द्रं विदित्वा ( ज्ञात्वा )। " हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु" इति विश्वः । एनमिन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गभीरेण स्वरेण ध्वनिनैव निवर्तयन्निव ( व्यावर्तयन्निव ) । अवोचत् । [ गगनस्पृशा धीरेण च भीत्यभावोक्तिः–चा० ] ।

४४. हे देवेन्द्र ( सुरनायक ) मनीषिभिः ( विद्वद्भिः ) त्वमेव मखांशभाजां यज्ञभागभुजां प्रथमः [ आद्यः । " आदौ प्रधाने प्रथमे" इति शाश्वतः चा०]। सदा निगद्यसे कथ्यसे । तथाप्यजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य ( सावधानस्य ) मद्गुरोः ( मम पितुः) क्रियाविघाताय क्रतुविघाताय। क्रियां विहन्तुमित्यर्थः।"तुमर्थाच्च भाववचनात् " इति चतुर्थी । कथं प्रवर्तसे । ( ईदृशस्त्वं मम पितुर्मखनाशाय कथ प्रवृत्तः इति भावः ) ।

४५. त्रयाणां लोकानां ( समाहारस्त्रिलोकं तस्य ) नाथस्त्रिलोकनाथः । " तद्धितार्थ–" इत्यादिनोत्तरपदसमासः । तेन त्रैलोक्यनियामकेन दिव्यचक्षुषातीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः ( दैत्याः ) सदा नियम्या ननु शिक्ष्याः खलु । स त्वं धर्मचारिणां ( धर्मरतानां ) कर्मसु क्रतुषु स्वयमन्तरायो विघ्नो भवसि चेत् । विधिरनुष्ठानं च्युतः क्षतः । लोके सत्कर्मकथैवास्तमियादित्यर्थः ।

४६. हे मघवन् ( इन्द्र )। तत्तस्मात्कारणान्महाक्रतोरश्वमेधस्याग्र्यं श्रेष्ठमङ्गं साधनममुं तुरंगं प्रतिमोक्तुं प्रतिदातुमर्हसि ( योग्यो भवसि )। तथा हि । श्रुतेः पथो दर्शयितारः सन्मार्गप्रदर्शका ईश्वराः ( भवादृशाः) महान्तो मलीमसां मलिनां पद्धतिं ( मार्गं ) नाददते न स्वीकुर्वते । असन्मार्गं नावलम्बत इत्यर्थः । " मलीमसं तु मलिनं कच्चरं मलदूषितम् " इत्यमरः ।

43. Raghu could at once know the god to be no other than the great Indra, by his hundred eyes, that were in an untwinkling condition, and also by the green colour of his horses, and with a deep and sonorous voice that reached the sky, he addressed the following words to him :—suddenly arresting his progress as it were.

44. Ever art thou, O lord of the gods, called by the sages, the first of those that enjoy the sacrificial share ; how is it then that thou seemest to be bent upon obstructing the sacrificial work of my sire who is constantly engaged in such sacrificial vows ?

45. You, possessed of all-seeing eyes, the lord of the three worlds, ought indeed always to check the haters of the sacrifices , but instead of that if you yourself prove an obstacle to the deeds of the righteous, then all rites must necessarily perish !

46. Be pleased, therefore, O Indra, to set free this steed which is the most essential part

43. D. and Su., गगनस्पृहा for गगनस्पृशा.

44. B. C. G. Chà. Din. Va. Su., यत· for सदा.

45. A. सदा, B. D. Va. Din. and Chà., सता, C. G. and Su., सताम्; A. C. G. अन्तरायः, B. D. Din. Va. Chà. and Su. अन्तरायी.

46. B. C. G. Chà. Din. Va. and Su., गुरुः for श्रुतेः.

इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।
निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥
यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥
हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यंबक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥ ४९ ॥
अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः ॥ ५० ॥

४७. इति रघुणा समीरितं ( उद्घुष्टं ) प्रगल्भं ( प्रौढं ) वचो निशम्याकर्ण्य । दिवौकसः स्वर्गौकसः । " दिव स्वर्गेऽन्तरिक्षे च " इति विश्वः । तेषामधिपतिर्देवेन्द्रो रघुप्रभावात्सविस्मयः ( साश्चर्यः ) सन् । रथं निवर्तयामास । उत्तरं प्रतिवक्तुं प्रचक्रमे ( आरेभे ) च ।

४८. हे राजन्यकुमार क्षत्रियकुमार । " मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् " इत्यमरः । यद्वाक्यमात्थ ब्रवीषि । " ब्रुवः पञ्चानाम्- " इत्यादिनाहादेशः । तत्तथा सत्यम् । किं तु यशोधनैः ( यशः कीर्तिरेव धनं द्रव्यं येषां तैः ) अस्मादृशैः परतः शत्रुतो यशो रक्ष्यम् ( रक्षणीयं ) । ततः किमत आह— भवद्गुरुस्त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धमशेषं सर्वं मम तद्यशः ( सांप्रतं ) इज्यया यागेन लङ्घयितुं तिरस्कर्तुमुद्यत उद्युक्तः [ क्रमितुमुद्युक्तः । "व्रजयजोर्भावे क्यप्" इति इज्या—चा० ] । किं तद्यश इत्याह—

४९ पुरुषेषूत्तम इति सप्तमीसमासः । " न निर्धारणे " इति षष्ठीसमासनिषेधात् । कर्मधारये तु " सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः " इत्युत्तमपुरुष इति स्यात् । यथा हरिर्विष्णुरेक एव पुरुषोत्तमः स्मृतः ( कथितः ) । यथा च त्र्यम्बकः शिव एव महेश्वरः स्मृतः । नापरोऽपरः पुमान्न । तथा मां मुनयः शतक्रतुं विदुर्विदन्ति । " विदो लटो वा " इति झेर्जुसादेशः । नोऽस्माकम् । हरिहरयोर्मम चत्यर्थः । एष त्रितयोऽपि शब्दो द्वितीयगामी ( द्वितीयपुरुषगमनशीलः ) न हि । द्वितीयाप्रकरणे गमिगम्यादीनामुपसंख्यानात्समासः ।

५०. यतोऽहमेव शतक्रतुरतस्त्वदीयस्य पितुरय शततमोऽश्वः कपिलानुकारिणा कपिलमुनितुल्येन मयापहारितोऽपहृतः । अपहारित इति स्वार्थे णिच् । तवात्राश्वे प्रयत्नेनालम् ( कृतं मम समीपात् अश्वस्यापहरणप्रयत्नेन ) । प्रयत्नं माकार्षीरित्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया । सगरस्य राज्ञः संततेः संतान-

of the great sacrifice. Great ones like yourself who show us the paths of the Vedas do not themselves take to the dark ways

47. When the ruler of the gods heard these proud words thus delivered by Raghu, his wonder was great, and he turned back his car and began to make the following reply.

48. Whatever thou sayest, O thou son of a Kshatriya, is quite true, but those, who value highly their fame must needs strive to protect it from the enemy Consider how thy sire is bent upon robbing me of the whole of my world-wide renown by rivalling me with his last sacrifice.

49. As by the word "*Purushottama*" none other than the great Hari alone is meant ; and as by the word "*Mahesvara*" the great three-eyed god alone is implied, so the sages know me by the epithet of *Satakratu*, for these terms of ours cannot be shared by any other person.

50. Accordingly, following the example of Kapila, I have taken away this steed of thy

48. D. यथा for यत्.

50. A. C.G. कपिलानुसारिणा for कपिलानुकारिणा; A.D. मा निधाः. B. Din. and Chà. मा कृथाः, C. G. Va. and Su., मानुगाः; B. C. G. Chà. Din. Va. and Su., पदव्याः for पदव्यां.

ततः प्रहस्यापभयः पुरंदरं पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥ ५१ ॥
स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥
रघोरवष्टम्भमयेन पत्त्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।
नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥

स्य पदव्यां ( सगरचक्रवर्तिपुत्रमार्गे ) पदं मा मिधा न निधेहि । निपूर्वाद्धाधातोर्लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः । महदास्कन्दनं ते विनाशमूलं भवेदिति भावः । [ पुरा यज्ञाश्वमन्वेषयमाणास्तुरगाप-हार्ययमिति वदन्तः कपिलमुनिना व्यापादिताः तथा त्वमपि इति कपिलानुकृत्या सूचयति–चा० ] ।

५१. ततस्तुरगस्य रक्षिता ( रक्षकः ) रघुः प्रहस्य प्रहासं कृत्वा । अपभयो निर्भीकः सन् । पुनः पुरंदरं बभाषे । किमिति—हे देवेन्द्र यद्येषोऽश्वामोचनरूपस्ते तव सर्गः निश्चयः । [ सगरसुतपदवीं नेष्यामीत्येवं रूपः सर्गः–चा० ] । "सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इत्यमरः । तर्हि शस्त्रं गृहाण । भवान्रघुं मामनिर्जित्य । कृतमनेनेति कृती । कृतकृत्यो न खलु । "इष्टादिभ्यश्च" इतीनिप्रत्ययः । रघुमित्यनेना-त्मनो दुर्जयत्वं सूचितम् ।

५२. स रघुरुन्मुखः ( ऊर्ध्वाननः ) सन् । मघवन्तमिन्द्रमेवमुक्त्वा ( गदित्वा ) शरासनं ( शराः अस्य-न्ते क्षिप्यन्तेऽनेनेति ) चापं सशरं ( बाणयुक्तं ) करिष्यमाणः । आलीढेनालीढाख्येन स्थानकभेदेन । [ पुरा किल भगवान् त्रिपुरदिदृक्षया दिव्यं वर्षशतमालीढविशेषेण स्थानाधिक्येन ऊर्ध्वमुखोऽध्यतिष्ठदिति–व० । कु-मारसंभवे । सदक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादमिति । "नामिता पूर्वजवा च पश्चिमा प्रगुणा भवेत् असमो मध्यकायः स्यादालीढस्य तु लक्षणम्"–चा० ] । विशेषशोभिनातिशयशोभिना वपुःप्रकर्षेण दे-होन्नत्येन विडम्बितेश्वरोऽनुकृतपिनाकी ( विडम्बितोऽनुकृतस्त्रिपुरदाहोद्युक्तः शंभुर्येन स तादृशः ) सन् । अ-तिष्ठत् । आलीढलक्षणमाह यादवः—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति । अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्याली-ढविपर्ययः" इति ।

५३. रघोरवष्टम्भमयेन स्तम्भरूपेण [ स्थैर्यरूपेण काञ्चनमयेन वा–चा० ] । "अवष्टम्भः सुवर्णे च स्त-म्भप्रारम्भयोरपि" इति विश्वः । पत्त्रिणा बाणेन हृदि हृदये क्षतो विद्धः । अत एवामर्षणोऽसहनः । क्रुद्ध

---

father. Desist from all futher struggle in this attempt. Do not set your foot in the path of the sons of King Sagara.

51. Then the fearless protector of the sacred steed laughed at these words and again gave a reply to the town-destroying Indra —"If that be thy decision, then take up thy arms, thou must not consider thyself successful plunderer until thou hast really conquered Raghu.

52. Thus he said to Indra and as he stood, with his face turned upwards fitting his arrows to the bow-string, his manly frame with its full height was extremely beautiful as was seen in the attitude of आलीढ in the science of archery, by virtue of which he resembled the great god ईश्वर himself, in the act of drawing his bow-string

53. The arrow of Raghu struck like a massive pillar on the breast of the mountain-splitting Indra, who incensed at the attack put an arrow, that was sure of its mark, on the string of his bow, which appeared as a temporary signal on a volume of new clouds (i-e. the rain-bow).

---

51. A. D. आह पुनः for अपभयः; D. त्वयेनभीर्भूमिपुरन्दरात्मजः for पुनर्बभाषे तुरगस्य रक्षि-ता; B. C. Cha. Din. Va. and Su. गर्वः for सर्गः so also Chà. notices this.

53. B. C. Chà. Din. Va. and Su. मार्गण for सायक.

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥
हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्त्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥ ५५ ॥
जहार चान्येन मयूरपत्त्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥
तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्त्रिभिः ॥ ५७ ॥

इत्यर्थः । गोत्रभिदिन्द्रोऽपि । " सभावनीयबांधेऽपि गोत्रः क्षौणीधरे मतः " इति विश्वः । नवाम्बुदानां ( नूतनमेघानां ) अनीकस्य वृन्दस्य मुहूर्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि । दिव्ये धनुषीत्यर्थः । अमोघमवन्ध्य सायक बाणं समधत्त संहितवान् ( योजितवानित्यर्थः ) ।

५४. भीमानां भयंकराणामसुराणां ( रक्षसां ) शोणिते रुधिरे उचितः परिचितः स इन्द्रमुक्त आशुगः सायको दिलीपसूनो रघोर्बृहद्विशालं भुजान्तरं वक्षः प्रविश्य । अनास्वादितपूर्वं पूर्वमनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेनेव ( कौतुकेनेव ) पपौ ।

५५. कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः । " सप्तम्युपमानपूर्वस्य– " इत्यादिना समासः । कुमारोऽपि रघुरपि सुरद्विपस्यैरावतस्यास्फालनेन [ प्रोत्सहनेन ताडनेन वा–चा० ] कर्कशाः ( कठिनाः ) अङ्गुल्यो यस्य सः ।( तथाकुमारसंभवे । ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः । इत्येवंरूपः श्लोकांशः ) । तस्मिन् । शच्याः पत्त्रविशेषकैरङ्कितं शचीपत्त्रविशेषकाङ्कितं हरेरिन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान् । निष्कण्टकराज्यं तस्यायं महानभिभव इति भावः ।

५६. अन्येन मयूरपत्त्रिणा मयूरपत्त्रवता शरेण शक्रस्येन्द्रस्य महाशनिध्वजं महान्तमशनिरूपं ध्वजं ( दंभोलिरूपां पताकां ) जहार चिच्छेद च । स शक्रः । सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव । तस्मै रघवे भृशमत्यर्थं चुकोप । तं हन्तुमियेषेत्यर्थः । " क्रुधद्रुह— " इत्यादिना संप्रदानाच्चतुर्थी ।

५७. जयैषिणोरन्योन्यजयाकाङ्क्षिणोस्तयोरिन्द्ररघ्वोः । गरुत्मन्तः पक्षवन्तः । " गरुत्पक्षच्छदाः पत्त्रम् " इत्यमरः । आशीविषाः । आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः सर्पाः । पृषोदरादित्वात्साधुः । " स्त्री

54. That (swift-going) arrow, long used in drinking, (lit accustomed to ) the blood of terrible Rakshasas plunged deep into the broad bosom (space between the two arms) of Dilipa's son and drank with ardour as it were, the blood of man, which it had never tasted before.

55. The prince too who resembled the great कुमार in valour, planted an arrow, bearing his own name, on the arm of Indra, whose fingers were hardened by the constant goading of the celestial elephant ऐरावत and on which शची, his wife, had cast many leaf-like-figures, in paint, as a token of her love.

56. And with another arrow to which the feathers of peacock were set, he cut down the great thunderbolt-banner of Indra's chariot, whereupon Indra was greatly enraged at him *(Raghu)*, as if he had forcibly plucked the hair of the Goddess presiding over the fortunes of the celestial.

57. Then ensued a fierce combat between them *(two)* desirous of victory *(each anxious to overcome the other)*, in which the Siddhas and the princely army stood neuter (in which the

54. A. D. नरेन्द्रसूनोः for दिलीपसूनोः.
55. B. C. G. Va. Din. and Chá, शचीपत्त्रलताक्रियोचिते for शचीपत्त्रविशेषकाङ्किते.
56. B. C. G. Chà. Va. and Su., °पक्ष्मणा for °पत्त्रिणा.

अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८ ॥
ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्त्रिणा शरासनज्यामलुनाद्बिडौजसः ॥ ५९ ॥
स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥
रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिस्वनैः ॥ ६१ ॥

त्वाशीर्हिताशंसाहिदंष्ट्रयोः " इत्यमरः । त इव भीमदर्शनाः सपक्षाः सर्पा इव । द्रष्टॄणां भयावहा इत्यर्थः । तैरधोमुखैरूर्ध्वमुखैश्च । धन्विनोरुपर्यधोदेशावस्थितत्वादिति भावः । पत्त्रिभिर्बाणैरुपान्तस्थितास्तटस्थाः सिद्धा देवा इन्द्रस्य सैनिकाश्च रघोर्यस्मिस्तत्तथोक्तं तुमुलं संकुलं युद्धं बभूव ।

५८. वासवः ( इन्द्रः ) अतिप्रबन्धेनातिसातत्येन ( प्रवाहेण वा )। प्रहिताभिः प्रत्युक्ताभिरस्त्रवृष्टिभिर्दुष्प्रसहस्य दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य । दुःखेनाप्यसह्यस्येत्यर्थः । तेजसः प्रतापस्याश्रय ( आस्थानं ) तं रघुम् । अम्बुदोऽद्भिः ( पानीयैः ) स्वतश्च्युत निर्गत वह्निमिव । निर्वापयितु न शशाक । रघोरपि लोकपालात्मकस्येन्द्रांशसंभवत्वादिति भावः ।

५९. ततो रघुर्हरिचन्दनाङ्किते ( कुकुमांकिते ) प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णवः ( विलोड्यमानसमुद्रः ) इव धीरं गम्भीरं नदतीति तां तथोक्ताम् । वेवेष्टि व्याप्नोतीति विट् व्यापकं [ भेदक-चा० ] ओजो यस्य स तस्य बिडौजस इन्द्रस्य। पृषोदरादित्वात्साधुः । शरासनज्याम् धनुर्मौर्वीम् । शशाङ्कस्यार्धः खण्ड इव मुख फलं यस्य तेन पत्त्रिणा ( बाणेन ) अलुनादच्छिनत् । [ " गोशीर्षे कुंकुमे देववक्षःश्रीहरिचंदने " इत्यर्द्धनारीश्वरः-चा० ] ।

६०. विवृद्धमत्सरः ( विवृद्धः अत्यन्तभूतः मत्सरः वैरभावः यस्य सः तथोक्तः )। प्रवृद्धवैरः स इन्द्रश्चापमुत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय वधाय । मही धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । तेषां पक्षव्यपरोपणं पक्षच्छेदे उचितं स्फुरत्प्रभामण्डलमस्त्रं वज्रायुधमाददे जग्राह ।

६१. रघुस्तेन वज्रेण भृशमत्यर्थं वक्षसि ( हृदये ) ताडितो हतः सन् । सैनिकानामश्रुभिः ( बाष्पैः ) सह

---

Siddhas on one side and the royal army on the other stood as silent spectators), by means of arrows, with points flying upwards and downwards, like so many fierce-looking winged serpents.

58. Even with his ceaseless showers of missiles, Vasava could not extinguish the fiery youth, the receptacle of unbearable energy (spirit), just as the cloud fails to extinguish with its waters the fire of lightning, though emanating from itself.

59. At last Raghu, with a crescent-shaped arrow, cut through the bow-string of Indra, which was terribly roaring, at his wrist, bedecked with yellow sandle, as roared the ocean during the churning process.

60. Highly enraged, and resolved to destroy the powerful enemy, he (Indra) laid aside his bow and took up the famous thunder-arm, encircled with the tremulous orb of brightness, and long used in lopping off the wings of mountains

61. Greatly struck with that terrible weapon on his breast Raghu fell to the ground, along

---

59. A. C. D. G. Châ. Va. Din. and Su. धीर° B. घोर°.

60. A. G. °व्यपरोपणोचितं, B. C. Châ. Din. Va. and Su., °व्यपरोपणोद्धतं, D. °व्यपरोपणोद्धृतं.

61. B. D. Va. and Su. च व्यथां for तद्व्यथां.

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥
असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरंगमात्किमिच्छसीति स्फुटमाह वासवः ॥ ६३ ॥
ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदं प्रत्यवदत्सुरेश्वरम् ॥ ६४ ॥

भूमौ ( मह्यां ) पपात । तस्मिन्पतिते ते रुरुदुरित्यर्थः । निमेषमात्राद् ( क्षणमात्रात् ) तद्व्यथां दुःखमवधूय तिरस्कृत्य सैनिकानां हर्षेण ( आनन्देन ) ये निस्वनाः क्ष्वेडाः ( शब्दाः ) । तैः सहोत्थितश्च । तस्मिन्नुत्थिते हर्षात्सिंहनादांश्चक्रुरित्यर्थः ।

६२. तथापि वज्रपातेऽपि शस्त्राणामायुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतोऽस्य रघोर्वीर्यातिशयेन ( पौरुषाधिक्येन ) । वृत्रं हतवानिति वृत्रहा । " ब्रह्मभ्रूणवृत्रेषु क्विप् " । तुतोष । स्वयं वीर एव वीरं जानातीति भावः । कथं शत्रोः संतोषोऽत आह—गुणैः सर्वत्रशत्रुमित्रोदासीनेषुपदमङ्घ्रिर्निधीयते । गुणैः सर्वत्र संक्रम्यत इत्यर्थः । गुणाः शत्रूनप्यावर्जयन्तीति भावः ।

६३. सारवत्तया ( सारः स्थिरांशः तस्य भावः तया ) अद्रिष्वप्यसङ्गमप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन ( त्वत्तोऽपरेण ) न विसोढम् । अतो मां प्रीतं संतुष्टमवेहि । तुरगमादृते तुरगं ( वाजिनं ) वर्जयित्वा । " अन्यारादितरर्ते– " इति पञ्चमी । किमिच्छसीति स्फुटं वासव आह । तुरंगमादन्यद्देयं नास्तीति भावः ।

६४. ततो नरेन्द्रसूनू रघुः निषङ्गात्तूणीरादसमग्रं यथा तथोद्धृतं सुवर्णपुङ्खद्युतिभिः ( सुवर्णस्य पुंखः शरमूलं तस्य द्युतिभिः दीप्तिभिः ) रञ्जिता अङ्गुलयो येन तमिषुं ( बाण ) प्रतिसंहरन्निवर्तयन् । नाप्रहरन्तं प्रहरेदिति निषेधादिति भावः । प्रियं वदतीति प्रियंवदः ( मधुरवाक् ) । " प्रियवशे वदः खच् " इति खच्प्रत्ययः । " अरुर्द्विष– " इत्यादिना मुमागमः । तं सुरेश्वरं प्रत्यवदत् । न तु प्राहरदिति भावः ।

---

with the tears of the soldiers of his army , but in a moment, shaking off the pain as it were, he once more stood up, amidst the shouts of his men.

62. However Indra, the killer of Vritra, was exceedingly pleased with the superiority in heroism of him who was standing long in the state of hostility, terrible on account of the use of murderous weapons; for virtues placed their foot everywhere (true merit seldom fails to find its approciation).

63. The power of my mighty weapon, which did not receive a check even from high mountains, has never been withstood by a second being but thyself Know that I am pleased with thy valour. Apart from this steed, ask of me any other favour. So said Vasava openly to the prince.

64. Whereupon the son of the great king withdrawing the arrow which was not entirely drawn out from its case and with the reflections of whose golden feathers his fingers had been adorned, returned an answer to the sweet-speaking king of the gods.

---

62. D. विधीयते for निधीयते.

63. B. D. Din and Chà., असङ्ग, A. अभङ्गं, D. G. and Su., असह्यं, B. and Su. अवैहि for अवेहि; A. Din. किमिच्छसीति स्फुटमाह वासवः, B. किमिच्छसीति स्मितमाह वासवः, C. G.Chà. and Su. वरं वृणीष्वेति तमाह वासवः,D. वरं वृणीष्वेति तमादिदेश सः,D2. वरं वृणीष्वेति तमाह वृत्रहा.

64. B. C. G. Chà. and Su., असमग्रनिःसृतं for असमग्रमुद्धृतं; B. D. and Chà., दिलीपसूनुः for नरेन्द्रसूनुः; A. D. Su. and Din. प्रियंवदः for प्रियवदं.

अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥
यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव संदेशहराद्विशांपतिः शृणोति लोकेश तथा विधीयताम् ॥ ६६ ॥
तथेति कामं प्रतिशुश्रुवान्रघोर्यथागतं मातलिसारथिर्ययौ ।
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥
तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥

६५. हे प्रभो इन्द्र । अश्वममोच्यं मन्यसे यदि ततस्तर्ह्यजस्रदीक्षायां ( अनवरतयज्ञदीक्षायां ) प्रयतः निरतः समद्गुरुर्मम पिता विधिनैव ( वेदोक्तप्रकारेण कर्तव्यतयैव ) कर्मणि समाप्ते ( पूर्णे ) सति क्रतोः ( यज्ञस्य ) यत्फलं तेन फलेनाशेषेण कृत्स्नेन युज्यतां युक्तोऽस्तु । अश्वमेधफललाभे किमश्वेनेति भावः ।

६६. सदो गतः सदो गृहं गतस्त्रिलोचनस्येश्वरस्यैकांशतयाष्टानामन्यतममूर्तित्वात् । दुरासदोऽस्मादृशैर्दुष्प्राप्यः । [ दीक्षितत्वात्त्रिलोचनस्यैकांशत्वेन दुरधिगमः–चा०.] । [अष्टमूर्तित्वात्यजमानलक्षणांशभावात् दुरभिवः दुराकलनीयः–व० ] । विशांपतिः ( नरपतिः ) यथेमं वृत्तान्तं ( वार्त्ता ) तव संदेशहराद्वार्ताहरादेव शृणोति च हे लोकेशेन्द्र । तथा विधीयताम् ।

६७. मातलिसारथिरिन्द्रो रघोः संबन्धिनं कामं मनोरथं तथेति तथास्त्विति प्रतिशुश्रुवान् । " भाषायां सदवसश्रुवः " इति क्वसुप्रत्ययः । यथागतं । [ न तु रघुं विजित्येति भावः–चा० ] । ययौ । [ येन मार्गेणायातस्तेनैव गत इत्यर्थः–व० ] । सुदक्षिणासूनू रघुरपि नातिप्रमना विजयलाभेऽप्यश्वनाशान्नातीवतुष्टः सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नृपस्य सदोगृहं ( दीक्षामण्डप ) प्रति न्यवर्तत ।

६८. हरेरिन्द्रस्य शासनहारिणा ( आज्ञापालकेन ) पुरुषेण प्रथमं प्रबोधितो ज्ञापितः। वृत्तान्तमिति शेषः । प्रजेश्वरो दिलीपो हर्षजडेन हर्षशिशिरेण पाणिना कुलिशव्रणाङ्कितम् ( कुलिशस्य वज्रस्य व्रणैः प्रहारैः अङ्कितं चिह्नितं ) । तस्य रघोरिदं तदीयम् । अङ्गं शरीरं परामृशंस्त रघुमभ्यनन्दत् ।

---

65. If the restoration of the sacred steed be impossible according to your decision, please, my lord ! order it so, that after the completion of his present ceremony without the steed, my father, purified by constant sacrificial vows, may still be united with the full benefit of his sacrificial ceremony, as if it was completed in conformity with the prescribed rules.

66. Moreover, O lord of the world, arrange it so that the Lord of the people, my father, may hear of these incidents, when seated in his council, from one of your own messengers; for he is now inaccessible by reason of his having one portion of the three-eyed God ( Siva ).

67. "It shall be so,"——with these words Indra, whose charioteer was Matali, promised to grant Raghu's desire and went his way ; the son of सुदक्षिणा too, not quite happy in his mind for what had happened, returned towards the council room of the king.

68. The king of men had been previously informed of everything by the messenger of Hari, consequently when the young prince arrived he warmly received him, gently touching his body marked with the scars made by the weapons of Indra with his hands benumbed with excessive joy.

---

65. A. G. Châ. Din. and Su., स मद्गुरुः B. C. स मे गुरुः D. च मे गुरुः.

66. A. D. इदम् for इमम् ; A. D. लोकेश, B. G. Châ. Din. Va. and Su., देवेश, C. देवेन्द्र.

68. B. C. Châ. Din. Va. and Su., हर्षचलेन for हर्षजडेन.

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरंपरामिव ॥ ६९ ॥
अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

## चतुर्थः सर्गः

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

६९. महनीयशासनः पूजनीयाज्ञः क्षितीशः ( भूपतिः ) इत्यनेन प्रकारेण । "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु " इत्यमरः । महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिमेकोनशतमायुषः क्षये सति दिवं स्वर्गं समारुरुक्षुरारोढुमिच्छुः सोपानानां परंपरां पङ्क्तिमिव ततान ।

७०. अथ विषयेभ्यः ( रूपगन्धस्पर्शादिभ्यः ) व्यावृत्तात्मा निवृत्तचित्तः स दिलीपो यथाविधि यथाशास्त्रं यूने ( युवराजाय ) सूनवे ( पुत्राय ) नृपतिककुदं राजचिह्नम् । " ककुद्वत्ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि " इति विश्वः । सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोश्छायां शिश्रिये श्रितवान् । वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः । तथा हि । गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् । इदं वनगमनं कुलव्रतम् ( कुलाचारः ) । देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः । तथा च याज्ञवल्क्यः—" सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् " इति । हरिणीवृत्तमेतत् । तदुक्तम्—" रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा " इति ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये रघुराज्याभिषेको नाम तृतीयः सर्गः ।

१. स रघुर्गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म प्रजापरिपालनात्मकम् । पुरोहितादित्वाद्यक् । प्रतिपद्य प्राप्य । दिनान्ते सायंकाले सवित्रा सूर्येण निहितं ( निक्षिप्तं स्थापितं वा ) तेजः प्रतिपद्य हुताशनोऽग्निरिव । अधिकं ( अत्यंतं ) बभौ ( रेजे ) । " सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । अग्निं वा आदित्यः सायं प्रविशति " इत्यादिश्रुतिः प्रमाणम् ।

---

69. Thus the Lord of the earth whose orders were duly respected and who was wishing to ascend to heaven at the expiration of his life, performed ninety-nine great sacrificial ceremonies as if he constructed a series of steps (to ascend to heaven).

70. And now he with his mind disengaged from world and its attractions having entrusted to his youthful son the royal insignia consisting of the white umbrella, betookhimself in company with his queen to the shade of the trees of the forest suitable for a Muni; for such was the family custom of the Ikshvaku princes, in the closing days of their lives.

1. Having received the kingly office, delegated by his royal father, he shone more brilliantly than ever before; as shines the evening fire the devourer of offerings with lustre bequeathed to it by the setting sun.

---

69. D. इत्थं for इति.

1. Between 1st. 2nd B.Châ.Din.Va and Su., read " न्यस्तशस्त्रं दिलीपं च तं च शुश्रुषुणां प्रभुं । राज्ञामुद्धृत नाराचे हृदि शल्यमिवार्पितं "(प्रभुं-पतिं; उद्धृतनाराचे-उद्धृतनाराचे; अरितं-अर्पितं. )

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥
पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥
सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४ ॥
शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं संनिधिं क्रियात् ॥

२. दिलीपानन्तरं राज्ये प्रतिष्ठितमवस्थितं । ( कृतास्पदमिति यावत् ) । तं रघुं निशम्याकर्ण्य पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य संजातः प्रधूमितोऽग्निः संतापाग्निरुत्थित इव प्रज्वलित इव । पूर्वेभ्योऽधिकसंतापोऽभूदित्यर्थः । राजकर्तृकस्यापि निशमनस्याग्नावुपचारान्न समानकर्तृकत्वविरोधः ।

३. पुरुहूतध्वजः इन्द्रध्वजः । स किल राजभिर्वृष्ट्यर्थं पूज्यते इत्युक्तं भविष्योत्तरे– " एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर । पर्जन्यः कामवर्षी स्यात्तस्य राज्ये न संशयः " इति । " चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोके सुखावहम्" । पुरुहूतध्वजस्येव । [ इन्द्रमहोत्सवस्येव । तथा हि । "गजाकारं चतुःस्तम्भं पुरद्वारे प्रतिष्ठितं । पौराः कुर्वन्ति शरदि पुरुहूतमहोत्सवं"–व० ] । तस्य रघोर्नवमभ्युत्थानं [ गजारोहणादिकं । अभिषिक्तो हि राजा गजेन्द्रमारुह्य पुरं प्रदक्षिणीकुर्यादित्याचारः– चा० ] । अभ्युन्नतिमभ्युदयं च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः ( नूतनाभ्युदयदर्शिन्यः ) । उदूर्ध्वं प्रस्थिता उल्लसिताश्च नयनपङ्क्तयः ( नेत्रमालाः ) यासां ताः सप्रजाः ससंतानाः प्रजा जनाः । " प्रजा स्यात्संततौ जने " इत्युभयत्राप्यमरः । ननन्दुः ।

४. द्विरद इव द्विरदैश्च गच्छतीति द्विरदगामिना । [ हस्तिनमारुह्य पुरं प्रदक्षिणीकृतवता–व० ] । "कर्तर्युपमाने " इति " सुप्यजातौ–" इति च णिनिः । तेन रघुणा समं युगपदेव द्वयं समाक्रान्तमधिष्ठितम् । किं तद्द्वयम् । पितुरागतं पित्र्यम् ( जनकसंबंधि ) । " पितुर्यत् " इति यत्प्रत्ययः । सिंहासनम् । अखिलम् ( समस्तं ) अरीणाम् ( वैरिणाम् ) मण्डलं राष्ट्रं च । अथ सिंहासनारोहणानन्तरम् तस्य लक्ष्मीसंनिधानमाह–

---

2. Having heard him established on the throne after Dilipa, the fire of jealousy, that was long smoking in the bosoms of rival princes rose up as it were, in a flame.

3. His subjects with their children were pleased to see the new rise of the young monarch, as men longingly look with upturned eyes on the fresh manifestation of इन्द्रध्वज, literally the standard of Indra.

4. Raghu, whose movements were like those of an elephant (or who rode on an elephant), exercised his power over two things at the same time——first the throne bequeathed to him by his father; secondly, the whole territory of his enemies.

---

2. B. C. H. Châ. Din. Va. and Su., प्रधूमिते for प्रधूमितः. All of them refer it to हृदि.

3. D. G. H. Châ. Din. Va and Su., सुप्रजाः for सप्रजाः.

4. A. D. Châ. Din. Va. and Su., पैत्र्यं for पित्र्यं.

छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥
परिकल्पितसांनिध्या काले काले च बन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६ ॥
मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुंधरा ॥ ७ ॥
स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥

५. अत्र रघोस्तेजोविशेषेण स्वयं संनिहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्षते । पद्मा लक्ष्मीः । "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया" इत्यमरः । सा स्वयमदृश्या किल । किलेति संभावनायाम् । सती छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन । न तु स्वरूपतो दृश्येन । छायामण्डलमित्यनेनानातपज्ञानं लक्ष्यते । "छाया सूर्यप्रिया कान्तिःप्रतिबिम्बमनातपः" इत्युभयत्राप्यमरः । पद्मातपत्रेण पद्मेनेवातपत्रं (छत्रं)। तेन कारणभूतेन साम्राज्यदीक्षितं साम्राज्ये साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितमभिषिक्तं तं भेजे [ सिषेवे । लक्ष्मीर्हि पद्मातपत्रेण सम्राजं सेवते इत्यागमः—चा० ] । अन्यथा कथमेतादृशी कान्तिसंपत्तिरिति भावः । संप्रति सरस्वतीसांनिध्यमाह—

६. सरस्वती च काले काले सर्वेष्वपि योग्यकालेषु । "नित्यवीप्सयोः" इति वीप्सायां द्विर्वचनम् । बन्दिषु ( भट्टेषु वैतालिकेषु ) परिकल्पितसांनिध्या कृतसंनिधाना सती स्तुत्यं स्तोत्रार्हं तं रघुम् । अर्थ्याभिरर्थादनपेताभिः ( सत्याभिः ) । "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः । स्तुतिभिः स्तोत्रैरुपतस्थे ( भेजे ) । देवताबुद्ध्या पूजितवतीत्यर्थः । देवतात्वं च "ना विष्णुः पृथिवीपतिः" इति वा लोकपालात्मकत्वाद्वेत्यनुसंधेयम् । एवं च सति "उपाद्देवपूजासंगतिकरणमित्रकरणपथिषु" इति वक्तव्यादात्मनेपदं सिद्ध्यति ।

७. वसुंधरा (मेदिनी) मनुप्रभृतिभिर्मन्वादिभिर्मान्यैः पूज्यै राजभिर्भुक्ता यद्यपि । भुक्तैवेत्यर्थः । यद्यपीत्यवधारणे । "अप्यर्थे यदिवार्थे स्यात्" इति केशवः । तथापि तस्मिन्राज्ञि । अन्यः पूर्वो यस्याः सान्यपूर्वा । अन्यपूर्वा न भवतीत्यनन्यपूर्वा । अनन्योपभुक्तेवासीत् । तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः । अत्र कारणमाह—

८. हि यस्मात्कारणात्स रघुर्युक्तदण्डतया यथापराधदण्डतया सर्वस्य लोकस्य मनः आददे जहार । क इव । अतिशीतोऽत्युष्णो वा न भवतीति नातिशीतोष्णः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । दक्षिणो दक्षिणदिग्भवो नभस्वान्वायुरिव । मलयानिल इवेत्यर्थः । युक्तदण्डतयेत्यत्र कामन्दकः—"उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते" इति ।

---

5. Him, enthroned universal sovereign, served Lakshmi, as it seemed, herself invisible, by holding up a Lotus-umbrella whose presence was to be inferred from the halo of brightness that encircled him.

6. The goddess of learning too, by her presence, in all appropriate seasons, in the tougues of the musical panegyrists attached to the palace, served the praiseworthy prince by inspiring songs of deep meaning in his praise.

7. Though the sovereignty of the earth had been previously enjoyed by estimable princes, commencing from Manu, yet when it came to him, it seemed as if she had never known any other master.

8. On account of his wise and just punishments he won the hearts of all his peoples, just as the mild and equable southern breeze is liked by all.

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९
नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ १० ॥
पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११ ॥
यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १२ ॥

९. तेन रघुणा प्रजाः ( लोकाः ) गुरौ दिलीपविषये । सहकारोऽतिसौरभश्चूतः । " आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः " इत्यमरः । तस्य फलेन पुष्पोद्गमे पुष्पोदये इव । ततोऽपि गुणाधिकतया ( औदार्यस्थैर्यप्रभावादयोगुणास्तेषामाधिक्येन ) हेतुना मन्दोत्कण्ठा अल्पौत्सुक्याः कृताः । गुणोत्तरश्चोत्तरो विषयः पूर्वं विस्मारयतीति भावः । ( यथा लोका नवीनं चूतफलं प्राप्य प्रसूतपुष्पोद्गमं न स्मरन्ति तथा तं लब्ध्वा दिलीपो न स्मृतः ) ।

१०. नयविद्भिर्नीतिशास्त्रज्ञैर्नवे (नूतने ) तस्मिन् राज्ञि विषये। तमधिकृत्येत्यर्थः । सद्धर्मयुद्धादिकमसत्कूटयुद्धादिकं चोपदर्शितम् । तस्मिन्राज्ञि पूर्वः पक्षः ( पुण्यपक्षः ) एवाभवत् । संक्रान्त इत्यर्थः । उत्तरः पक्षः ( पापपक्षः ) नाभवत् । न संक्रान्त इत्यर्थः । तत्र सदसतोः ( न्यायान्याययोः ) मध्ये सदेवाभिमतं नासत् । तदुद्भावनं तु ज्ञानार्थमेवेत्यर्थः । पक्षः साधनयोग्यार्थः । " पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु " इति केशवः ।

११. पृथिव्यादीनां पञ्चानां भूतानामपि गुणाः । [ पृथ्वी पञ्चगुणा तोयं चतुर्गुणमथानलः । त्रिगुणो द्विगुणो वायुर्वियदेकगुणं भवेत्—व० ] । गन्धादय उत्कर्षमतिशयं पुपुषुः ( पुष्टिं प्रापुः ) । अथोत्प्रेक्षते—तस्मिन्रघौ नाम नवे महीपाले सति सर्वं वस्तुजातं नवमिवाभवत् । तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवदिति भावः ।

१२. यथा चन्दयतीत्याह्लादयतीति चन्द्र इन्दुः । चदिधातोरौणादिको रप्रत्ययः । प्रह्लादनादाह्लादकरणादन्वर्थोऽनुगतार्थनामकः अभूत् । [ अर्थमनुगतोऽन्वर्थ इति कैयटः—चा० ] । यथा च तपतीति तपनः सूर्यः । नन्द्यादित्वाल्ल्युप्रत्ययः । प्रतापात्संतापजननादन्वर्थः । तथैव स राजा प्रकृतिरञ्जनात् ( प्रजानुरागकरणात् ) अन्वर्थः सार्थकराजशब्दोऽभूत् । यद्यपि राजशब्दो राजतेर्दीप्त्यर्थात्कनिन्प्रत्ययान्तो न तु रञ्जेस्तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ।

---

9. He excelled even his father in point of many virtues, so that the people ceased feeling keenly the old king's loss, as men naturally forget the flowery days of the sweet mango tree, when the latter begins to bear fruits.

10. Men skilled in state politics instructed the young new king, in all the ways of government, both good and evil ; but it was only the former that had any effect on him, and not the latter.

11. When he became the ruler of the earth everything had a renewed life as it were,—even the properties of the five great elements, received an unusual development.

12. As the moon is called चन्द्र on account of its power to please, and as the sun is called तपन on account of its scorching rays, so in him the word राजा found its truest application ; in as much as he was truly the delight of his people.

---

10. G. H. have नयवद्भिः for नयविद्भिः

12. E. has प्रतपात् for प्रतापात्.

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥
लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥
निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥
वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६ ॥

१३. विशाले तस्य रघोर्लोचने कामं । [ "अकामानुमतौकामं"–चा० ] । कर्णान्तयोर्विश्रान्ते कर्णप्रान्तगते । ( चक्षुर्विद्यते यस्यासौ चक्षुष्मान् तस्य भावः ) चक्षुष्मत्ता तु ( नेत्रत्वं तु ) । चक्षुःफलं त्वित्यर्थः । सूक्ष्मान् ( दुर्विज्ञेयान् ) कार्यार्थान्कर्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मकार्यार्थदर्शिना शास्त्रेणैव । "शास्त्रं दृष्टिर्विवेकिनाम्" इति भावः ।

१४. अथ (अनंतरं) लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तमेनं रघुं पङ्कजलक्षणा पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् । शरत् । द्वितीया पार्थिवश्री राजलक्ष्मीरिव । समुपस्थिता प्राप्ता । "रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं लिङ्गिषु दानवृत्तिकरणं त्यागः समानेऽर्थे कार्याण्येव महीभुजां प्रशमनान्येतानि राज्ये नवे" ।

१५. निःशेषं वृष्टाः निर्वृष्टा । कर्तरि क्तः । अत एव लघवः । तैर्मेघैर्मुक्तवर्त्मा त्यक्तमार्गः । अत एव सुदुःसहः । तस्य रघोर्भानोश्च । प्रतापः पौरुषमातपश्च । "प्रतापौ पौरुषातपौ" इति यादवः । युगपत् ( समकालं ) दिशः ( आशाः ) व्यानशे व्याप ।

१६. इन्द्रः । वर्षासु भवं वार्षिकम् । वर्षानिमित्तमित्यर्थः । "वर्षाभ्यष्ठक्" इति ठक्प्रत्ययः । धनुः

13. Granted that his large eyes extended up to the extremities of his ears ( lit. rested at the borders of his ears ) ; but, his true eyesight lay in his penetrating intellect, rich with the knowledge of the Sastras, and attentive to the minutest details of his daily duties.

14. By the time he had fairly pacified his kingdom, autumn, like a second goddess of kingly power, made her appearance,—heralded by the blooming lotus flowers.

15. The conquering power of the king and the scorching heat of the sun, intolerable on account of its path having been cleared by the clouds which were light by reason of emptying themselves, simultaneously spread themselves in all directions.

16. Indra removed from the sky his great annual rain-bow but Raghu took up his victorious one, thus they both used their bows by turn for the good of the people.

---

13. B. D. and Chà., कामं कमलपत्राणां नेत्रे तस्यानुकारिणी for कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने; C. E. Châ. Din. Va. and Su., सूक्ष्मकार्यार्थदर्शिनः for सूक्ष्मकार्यार्थदर्शिना. And every one of them refer it to तस्य.

14. B. C. E. H. Châ. Din. Va. and Su., लब्धप्रशमनं स्वस्थं for लब्धप्रशमनस्वस्थं.

15. C. has सदुःसहः for सुदुःसहः; for 'निर्वृष्टलघुभिः' &c. D. and Châ. read "निर्विष्टलघुभिर्मेघैः सवितुस्तस्य चोभयोः । वर्धिष्णवो दिशां भागान्प्रतापा यत्र रेचिताः" ।

16. D. पर्यायोद्यमविभ्रमौ for पर्यायोद्यतकार्मुकौ. So also Malli:–"पर्यायोद्यमविभ्रमौ" इति पाठान्तरे पर्यायेणोद्यमौ विभ्रमश्च ययोस्तौ पर्यायोद्यमविभ्रमौ । द्वयोः पर्यायकरणादक्लेश इति भावः. Between 16-17 B. E. Va. and Su. read "अधिज्यमायुधं कर्तुं समयोऽयं रघोरिति । स्वं धनुः शङ्कितेनेव संजह्रे शतमन्युना" । ( संजह्रे–संहृतं ).

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७ ॥
प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥ १८ ॥
हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥
इक्षुच्छयनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २० ॥

संजहार । रघुर्जैत्रं जयशीलम् । जेतृशब्दात्तृन्नन्तात् " प्रज्ञादिभ्यश्च " इति स्वार्थेऽण्प्रत्ययः । धनुर्दधौ । हियस्मात्ताविन्द्ररघू प्रजानामर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधने विषये पर्यायेण ( क्रमेण ) उद्यते कार्मुके याभ्यां तौ पर्यायोद्यतकार्मुकौ ।

१७. पुण्डरीकं । [ " पुण्डरीकं सिताम्भोजमिति " हैमः । कोषः—चा० ] । सिताम्भोजमेवातपत्रं ( छत्रं ) यस्य स तथोक्तः । विकसन्ति काशानि काशाख्यतृणकुसुमान्येव चामराणि यस्य स तथोक्तः । ऋतुः शरदृतुः पुण्डरीकनिभातपत्रं काशनिभचामरं तं रघुं विडम्बयामासानुचकार । तस्य रघोः श्रियं पुनः शोभां तु न प्राप । ( रघोरतिरमणीयत्वात् ) । " शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते " इति शाश्वतः ।

१८. प्रसादेन सुमुखे ( मनोहरमुखे ) तस्मिन्रघौ विशदप्रभे निर्मलकान्तौ चन्द्रे च द्वयोर्विषये तदा चक्षुष्मतां प्रीतिरनुरागः समरसा समस्वादा । तुल्यभोगेति यावत् । " रसो गन्धरसे स्वादे " इति विश्वः । आसीत् ।

१९. हंसानां ( राजहंसानां ) श्रेणिषु पङ्क्तिषु । तारासु नक्षत्रेषु । कुमुदानि येषु सन्तीति कुमुद्वन्ति । " कुमुद्वान्कुमुदप्रायः " इत्यमरः । " कुमुदनडवेतसेभ्यो ड्मतुप् " । तेषु कुमुदप्रायेष्वित्यर्थः । वारिषु ( पानीयेषु ) च तदीयानां रघुसंबन्धिनां यशसां विभूतयः संपदः पर्यस्ता इव प्रसारिताः किम् । इत्युत्प्रेक्षा । अन्यथा कथमेषां धवलिमेति भावः ।

२०. इक्षूणां छायेक्षुच्छायम् । " छाया बाहुल्ये " इति नपुंसकत्वम् । तत्र निषण्णा इक्षुच्छायनिषादिन्यः । शालीन्गोपायन्ति रक्षन्तीति शालिगोप्यः शस्यपालिकाः स्त्रियः । " कर्मण्यण् " " टिड्ढाणञ्—" इत्यादिना ङीप् । गोप्तू रक्षकस्य तस्य रघोः । गुणेभ्यः [ सौन्दर्यादिभ्यः—चा० ] उदयः ( प्रकाशः ) यस्य तद्गुणोदयं गुणोत्पन्नमाकुमारं कुमारादारभ्य कथोद्घातः कथारम्भो यस्य तत् । कुमारैरपि स्तूयमानमित्यर्थः ।

17. The season of autumn with its umbrella of the lovely white lotus flowers, and with its *chámaras* (chowries) made of the blossoming *kásá* grass, only faintly imitated his greatness but could not approach it.

18. In him who had a loving and happy countenance and in the moon whose light was clear, the love of those who had eyes was of equal flavour ( i. e. all beholders entertained equal feelings of love toward them both, to the king for his sweet smiling face and to the moon for her bright lustre).

19. Might it be that the properties of his spotless fame were scattered in the rows of white swans in the bright stars, and also in waters covered with कुमुद flowers.

20. Women appointed to keep guard over growing शालि corn, sheltering themselves under

---

17. B. C. E. G. H. Châ. Din. and Va., विलसत्° for विकसत्°:
19. A. D. हंसश्रेणिषु for हंसश्रेणीषु.
20. B. C. E. H. Châ. Din. Va. Su., इक्षुच्छाया° for इक्षुच्छाय° So also Mal-

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥
मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥
प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

यशो जगुर्गायन्ति स्म । अथ वा कुमारस्य सतो रघोर्याः कथा इन्द्रविजयादयस्तत आरभ्याकुमारकथम् । त आप्यभिविधावव्ययीभावः । आकुमारकथमुद्घातो यस्मिन्कर्मणि । गानक्रियाविशेषणमेतत् । "स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः ।

२१. महौजसः कुम्भयोनेरगस्त्यस्य । "अगस्त्यः कुम्भसंभवः" इत्यमरः । उदयादम्भः प्रससाद प्रसन्नं बभूव । महौजसो रघोरुदयादभिभवाशङ्कि द्विषतां (शत्रूणां) मनश्चुक्षुभे कालुष्यं प्राप । "अगस्त्योदये जलानि प्रसीदन्ति" इत्यागमः ।

२२. मदोदग्रा मदोद्धताः । ककुदेषामस्तीति ककुद्मन्तः । महाककुद इत्यर्थः । यवादित्वान्मकारस्य वत्वाभावः । सरितां कूलान्युद्रुजन्तीति कूलमुद्रुजाः । "उदि कूले रुजिवहोः" इति खश्प्रत्ययः । "अरुर्द्विष—" इत्यादिना मुमागमः । महान्त उक्षाणो महोक्षाः (दर्पिष्ठा बलीवर्दाः)। "अचतुर—" इत्यादिना निपातनादकारान्तत्वम् । लीलाखेलं [लीलया निरायासेन खेलं विसृत्वरं—चा०]।विलाससुभग तस्य रघोरुत्साहवतो वपुष्मतः परभञ्जकस्य । विक्रमं शौर्यमनुप्रापुरनुचक्रुः । [ रघोर्विक्रममनुगताः । वृषपक्षे तु विक्रमं गतिविशेषः । रघुविक्रमोऽपि महोदयः ककुद्राजचिह्नं तद्युक्तो यात्रायां करितुरगादिखुराद्यविघातेन सरितां कूलभदको भवति—चा० ] ।

२३. मदस्येव गन्धो येषां तैर्मदगन्धिभिः । "उपमानाच्च" इतीकारः समासान्तः । सप्तपर्णानां वृक्षविशेषाणाम् । "सप्तपर्णो विशालत्वक्शारदो विषमच्छदः" इत्यमरः । प्रसवैः पुष्पैराहताः (ताडिताः) तस्य रघोर्नागा गजाः । "गजेऽपि नागमातङ्गौ" इत्यमरः । असूययेवाहतिनिमित्तया स्पर्धयेव सप्तधैव प्रसुस्रुवुर्मदं ववृषुः । [ शरदि मदकालः—व० ] । प्रतिगजगन्धाभिमानादिति भावः । "करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः" इति पालकाप्ये । [ "तालुवक्षःकपोलेभ्यः शंखकुम्भकरे तथा । रोमकुंभकटिभ्यश्च दानं प्रक्षरति द्विपः" सु० ] । करात्रासारन्ध्राभ्यामित्यर्थः ।

the deep shade of sugarcanes, sang sweet ballads recounting the protector's several virtues, beginning with the period describing the actions of his infancy.

21. At the rise of the Pitcher-born sage (a star known by the name Agastya) of great might, the water became pure and serene, but at the rise of Raghu the hearts of his enemies became clouded with the apprehensions of approaching defeat.

22. Bulls of ample humps, maddened with excess of strength, began to beat against the banks of rivers with their horns, as if in that they imitated the strange and playful doings of his valour.

23. Wounded in their vanity as it were, by the flowers of सप्तपर्ण tree, that resembled in thei smell the temporal juice, the elephants of Raghu, streamed out from seven different parts of the body their temporal juice.

li. 'इक्षुच्छाया°' इति स्त्रीलिङ्गपाठे इक्षोश्छायेति विग्रहः । अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात्; D. and Su. आकुमारकथोद्भूतं, G. आकुमारकथोद्भूतं, so also Malli. 'आकुमारकथोद्भूतं' इति पाठे कुमारस्य सतस्तस्य कथाभिश्चरितैरुद्भूतं यद्यशस्तद्यश आरभ्य यशो जगुरिति व्याख्येयं, for आकुमारकथोद्घातं. For 'इक्षुच्छाय &c.' B. Chà. Din. Va. and Su. read "तस्य गोप्तुर्द्विरेफाणां कर्णोत्पलनिपातिना । स्वरंसवादिभिः कण्ठैः शालिगोप्यो जगुर्गुणान् " ।

21. A. अभिभवाशङ्कि, B. C. E. G. H. Chà. Din. and Va., परिभवाशङ्कि, D. and Su., पराभवाशंकि.

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥
तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥
स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥

२४. सरितः ( नदीः ) गाधाः ( स्वल्पजलाः अतएव ) सुप्रतराः कुर्वती । पथो मार्गांश्चाश्यानकर्दमाञ्शुष्कपङ्कान्कुर्वती । " संयोगादेरातो धातोर्यण्वतः " इति श्यतेर्निष्ठातस्य नत्वम् । शरच्छरदृतुस्तं रघुं शक्तेरुत्साहशक्तेः प्रथमं प्राग्यात्रायै दण्डयात्रायै चोदयामास प्रेरयामास । प्रभावमन्त्रशक्तिसंपन्नस्य शरत्स्वयमुत्साहमुत्पादयामासेत्यर्थः ।

२५. वाजिनामश्वानां नीराजनाविधौ । [ उक्तंच । द्वादश्यामष्टम्यां कार्तिकशुक्लस्य पंचदश्यां वा अश्वभजस्य हि कुर्यान्नीराजमसंज्ञितां शांतिं—चा० ] । नीराजनाख्ये शान्तिकर्मणि सम्यग्विधिवद्धुतो होमसमिद्धो वह्निः ( अग्निः ) । प्रगता दक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । प्रदक्षिणं यार्चिर्ज्वाला तस्या व्याजेन ( प्रदक्षिणावर्तिज्वालामुखेन अतए[illegible]स्तेनेव तस्मै जयं ददौ । उक्तमाहवयात्रायाम्—" इद्धः प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररश[illegible]ं ) करोति " इति । वाजिग्रहणं गजादीनामप्युपलक्षण तेषामपि नीराजनाविधानात् । [ नारस्य शां[illegible]य अंजनं क्षेपः अत्र नीराजं आरात्रिकामित्यर्थः । गजाश्वमंगलाय राजानः प्रयाणसमये नीराजनां विधि कुर्वन्तीत्यागमः—सु० ] ।

२६. गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्ग च येन स गुप्तमूलप्रत्यन्तः । शुद्धपार्ष्णिरुद्धृतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा । अयान्वितः ( अयेन शुभावहविधिना अन्वितो युक्तः ) शुभदैवान्वितः । " अयः शुभावहो विधिः " इत्यमरः । स रघुः षड्विधं मौलभृत्यादिरूपं बलं सैन्यम् । " मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम् " इति कोशः । [ हस्त्यश्वरथपादातिनाविकाटविकाश्च ये इति कश्चित् (?) । तथाचोक्तं । देवानभ्यर्च्य विप्रांश्च गुरूंश्च शुभवासरे । षड्विधं तु बलं व्यूह्य द्विषतोभिमुखं व्रजेत्—चा० ] । आदाय ( गृहीत्वा ) दिशां जिगीषया जेतुमिच्छया प्रतस्थे चचाल ।

---

24. The rivers became fordable, and the roads became dry, thus at the very commencement of his rule (or prior to his own enterprising energy), the season of autumn incited him to start on a career of conquest.

25. On the occasion of the protective ceremony for horses called नीराजना the sacrificial fire in which oblations were offered according to the rule, granted him the laurel of victory as if by its own hand under the pretext of its flame being to the right side.

26. Thus followed by good fortune he, having his metropolis and the frontier fortresses guarded (by garrisons) and having taken with him an army consisting of six kinds of soldiers, with the rear cleared of his foes, marched on in his career of conquest of quarters.

24. A. चोदयामास. B. C. E. G. H. Châ. Din. Va. and Su. प्रेरयामास. D. has नोदयामास.

25. A. D. सम्यक्तस्य for तस्मै सम्यक्.; D. H. and Su. एव for इव.

26. B C. E. G. H. Châ.; Din. Va. and Su. °मूलपर्यन्तः for °मूलप्रत्यन्तः; G. has स प्रतस्थे जिगीषया for प्रतस्थे दिग्जिगीषया.

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः ।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥
स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥
रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥ २९ ॥
प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ ३० ॥

२७. वयोवृद्धाः ( जरठाः ) पौरयोषितस्तं रघु प्रयान्तं लाजैराचारलाजैः । मन्दरोद्धूतैः ( मन्दराचलभ्रमणोत्थितैः ) पृषतैर्बिन्दुभिः क्षीरोर्मयः क्षीरसमुद्रोर्मयः अच्युतं विष्णुमिव । अवाकिरन्पर्यक्षिपन् । [ इति यात्राकालस्याचारः–चा ] ।

( २८. ) प्राचीनबर्हिर्नाम कश्चिन्महाराज इति केचित् । प्राचीनबर्हिरिन्द्रः । "पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिःस्मृतः" इतीन्द्रपर्यायेषु हलायुधाभिधानात् । तेनतुल्यः ( समानः ) स रघुः । अनिलेनानुकूलवातेनोद्धूतैः ( कम्पितैः ) केतुभिर्ध्वजैरहितान्रिपूंस्तर्जयन्निव भर्त्सयन्निव । [ अन्योऽपि अङ्गुल्यादिना तर्जयति–चा० ] । तर्जिभर्त्स्योरनुदात्तेत्त्वेऽपि चक्षिङो [ विग्रः रघोदि ]नानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति वामनः । प्रथमं प्राचीं दिशं ( पूर्वां ) [याम्] ययौ । [ इतियुग्मं । द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकं । कलापकं चतुर्भिः स्यात् तदूर्ध्वं कुलकं स्मृत–चा० ] ।

२९. किं कुर्वन् । स्यन्दनोद्धूतैः ( रथोत्थापितैः ) रजोभिः ( धूलिभिः ) घनसंनिभैर्वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैर्गजैः ( हस्तिभिः ) च यथाक्रमं व्योमाकाशं भुवस्तलमिव भूतलं च व्योमेव कुर्वन् । ययाविति पूर्वेण संबन्धः ।

३०. अग्रे प्रतापस्तेजोविशेषः । [ शत्रूणां भयजननवार्ता प्रतापः–च० ] । " स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्" इत्यमरः । ततः शब्दः सेनाकलकलः । तदनन्तरं परागो धूलिः । "परागः पुष्परजसि धूलिस्नानीययोरपि" इति विश्वः । पश्चाद्रथादि रथाश्वादिकं चतुरङ्गबलम् । इतीत्थं चतुःस्कन्धेव चतुर्व्यूहे-

---

27. The elderly women of the city showered fried paddies (लाजा) on his head, as a mark of benediction, as the waves of the milky ocean did once sprinkle on the body of अच्युत with their soft particles tossed up in the churning process of the Mandara mountain

28 He, who resembled Indra in his valour, marched first towards the East, holding out a warning as it were to his enemies with his flags unfurled in the air.

29. Covering the sky with the dust thrown up by the chariots, and the earth with dark cloud-like elephants, Raghu changed the sky into the earth, and the earth into the sky.

30. That vast army moved in four squadrons (detachments) :—first the terror of his name, then the great noise, then clouds of dust, and lastly the chariots and other things.

---

28. E. प्रशमं for प्रथमं; E. G. कंपयन् for तर्जयन्.

29. B. C. E. G. Din. Va. and Châ., स्यन्दनोद्धूतैः, A. H. स्यन्दनोत्कीर्णैः, D. and Su., have तुरगोत्कीर्णैः–Between 29–30. B. E. Châ. Din. Va. and Su., read पुरोगैः कलुषास्तस्य सह प्रस्थायिभिः कृशाः । पश्चात्प्रयायिभिः पङ्काश्चक्रिरे मार्गनिम्नगाः " ।

30. B. C. E. H. Châ. Din. Va. and Su., पुरोगाः for परागः; B. C. E. H. Châ. Din. Va. and Su., रथानीकं for रथादीति. So also Malli :—who explains ' रथानीक ' इति पाठे इति शब्दाध्याहारेण योज्य.

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१ ॥
स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२ ॥
त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥
पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥

व । " स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हैमः । सा चमूः सैन्यं ) ययौ ( जगाम ) ।

३१. स रघुः शक्तिमत्त्वात्समर्थत्वात् । [ अतिखननव्यापारेण-चा० प्रभूतकटकसैन्यसामग्रीतः—सु० ] । मरुपृष्ठानि निर्जलस्थानानि । "समानौ मरुधन्वानौ" इत्यमरः । उदम्भांस्युद्भूतजलानि चकार । नाव्या नौभिस्तार्या नदीः । "नाव्यं त्रिलिङ्गं नौतार्ये" इत्यमरः । " नौवयोधर्मविषमूल-" इत्यादिना यत्प्रत्ययः । ( सेतुबन्धादिना ) । सुप्रतराः सुखेन तार्याश्चकार । ( चरणतार्याः कृताः इत्यर्थः ) । विपिनान्यरण्यानि । "अटव्यरण्यं विपिनम्" इत्यमरः । ( छेदादिना ) प्रकाशानि निर्वृक्षाणि चकार । शक्त्युत्कर्षात्तस्यागम्यं किमपि नासीदिति भावः ।

३२. महतीं ( संख्यातीतामर्थाद्विशालां ) सेनां ( चमूं ) पूर्वसागरगामिनीं ( पूर्वसमुद्रगमनशीलां ) कर्षन् ( धारयन् ) स रघुः । हरस्य ( रुद्रस्य ) जटाभ्यो भ्रष्टां ( अधःपतितां ) गङ्गां कर्षन् । सापि पूर्वसागरगामिनी । भगीरथ इव । बभौ । भगीरथो नाम कश्चित्कपिलदग्धानां सागराणां नप्ता तत्पावनाय हरकिरीटाद्गङ्गां प्रवर्तयिता राजा । यत्संबन्धाद्गङ्गा च भागीरथीति गीयते ।

३३. "फलं फले धने बीजे निष्पत्तौ भोगलाभयोः" इति केशवः। फलं लाभम् । वृक्षपक्षे प्रसवं च । त्याजितैः । त्यजेर्ण्यन्ताद्द्विकर्मकादप्रधाने कर्मणि क्तः । उत्खातैः स्वपदाच्च्यावितैः । अन्यत्रोत्पाटितैः । बहुधा भग्नै रणे जितैः । अन्यत्र छिन्नैः । नृपैः । पादपैर्दन्तिनो गजस्येव । तस्य रघोर्मार्ग उल्बणः प्रकाश आसीत् । "प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्" इति यादवः ।

३४. जयी जयनशीलः । "जिदृक्षिविश्री–" इत्यादिनेनिप्रत्ययः । स रघुरेवम् । पुरो भवान्पौरस्त्यान्प्राच्यान् । "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः । तांस्तान् । सर्वानित्यर्थः । वीप्सायां द्विरुक्तिः । जनपदान्देशानाक्रामन् ( आददानः ) तालीवनैः श्यामं ( कृष्णं हरितं वा ) महोदधेरुपकण्ठं अन्तिकं प्राप ।

---

31. He dug tanks in the midst of sandy deserts, made rivers, that were difficult of crossing easily fordable, and cleared up large forests, all this he made by the dint of his power.

32. He (Raghu), drawing (taking with him) his great army going toward the eastern sea, shone ( appeared ) like Bhagiratha who led the Ganga fallen from the matted hair of Hara.

33. As the condition of the trees on both the sides of a road best indicate that an elephant had passed by that way, plucking the fruits of some of the trees, some up-rooting, others breaking down in various ways, so the princes, some of whom were robbed of their wealth, others dethroned, others broken and destroyed, carried the marks of the progress of his army (and thus made his way free from obstacles).

34. Traversing all the Eastern countries in this manner, the conqueror at last reached the shores of the great ocean verdant with the forests of Tali-trees (palm-trees ).

---

31. E. has मरुपृष्ठाश्युदम्भांसि for मरुपृष्ठान्युदम्भांसि.

33. E. H. उल्वणो for उल्बणो.

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥
वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान्गङ्गास्रोतोन्तरेषु सः ॥ ३६ ॥
आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥
स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥

३५. अनम्राणाम् । कर्मणि षष्ठी । समुद्धर्तुरुन्मूलयितुस्तस्माद्रघोः सकाशात् । " भीत्रार्थानां भयहेतुः " इत्यपादानत्वात्पञ्चमी । सिन्धुरयान्नदीवेगादिव सुह्मैः । [ ब्रह्मदेशीयै राजभिः—व० सु० ] । सुह्मदेशीयैः । सुह्मादयः शब्दा जनपदवचनाः क्षत्रियमाचक्षते । वैतसीं वेतसः संबन्धिनीं ( नम्रतारूपां ) वृत्तिम् । प्रणतिमित्यर्थः । आश्रित्य ( अधिष्ठाय ) आत्मा संरक्षितः । अत्र कौटिल्यः—" बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत् " इति । [ यथा नदीवेगात् वेतसाः वृक्षाः नम्रवृत्तिं कृत्वात्मानं रक्षयन्ति तद्वत् सुह्मैरात्मा रक्षितः—सु० ] ।

३६. नेता नायकः स रघुर्नौभिः ( पोतैः ) साधनैरुद्यतान्संनद्धान्वङ्गान् ( वंगदेशीयान् ) राज्ञस्तरसा बलेन । " तरसी बलरंहसी " इति यादवः । उत्खायोन्मूल्य गङ्गायाः स्रोतसां प्रवाहाणामन्तरेषु द्वीपेषु जयस्तम्भान् ( जयसूचकान् स्तभान् ) निचखान । स्थापितवानित्यर्थः । [नगराणि जित्वा तत्र स्तंभाः क्रियन्ते इत्यागमः—सु० ] ।

३७. आपादपद्मम्ङ्घ्रिपद्मपर्यन्तं प्रणताः । अत एवोत्खाताः पूर्वमुद्धृता अपि प्रतिरोपिताः पश्चात्स्थापितास्ते वङ्गाः । कलमा इव शालिविशेषा इव । "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः । तेऽप्यापादपद्मं पादपद्ममूलपर्यन्तं प्रणताः । [ अन्यत्र मञ्जरीभारेण नम्राः कलमाः बहु फलन्ति—चा० ] । " पादो बुध्न तुरीयांशे शैलप्रत्यन्तपर्वते " इति विश्वमेदिन्यौ । उत्खातप्रतिरोपिताश्च । रघुं फलैर्धनैः । अन्यत्र सस्यैः । संवर्धयामासुः । " फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । सस्ये " इति केशवः । [ तदुक्तं भारविणा । ततोष पश्यन् कलमस्य सांधिकं सवारिजे वारिणि रामणीयकमिति—चा० ] ।

३८. स रघुर्बद्धा द्विरदा एव सेतवो यैस्तैः ( कारणभूतैः ) सैन्यैः कपिशां नाम नदीं तीर्त्वा । उत्कलै

35 From him, the extirpator of the proud, the Suhmas saved their lives by adopting the course of the cane plant, as if from the torrent of a river

36 That leader of the vast army vanquished with his power the princes of Vanga (Bengal), who had marshalled together a strong naval force, and as monuments of his victory got pillars to be erected within the stream of the Gangā

37 They, who lowly bowed down to his lotus-like feet and who (therefore) were reinstated after having first been dethroned, honoured Raghu by presenting him with their wealth like **Kalama plants** which are bent down to their roots and which present fruit (corn) when they are **replanted after** having been first uprooted.

38. He crossed the river कपिशा with his army on a bridge made of his elephants, and being

35. B. E. H. and Su., आस्थाय for आश्रित्य.

36. B. C. E. G H. Chá. Din. and Va. °साधनोद्धतान् for °साधनोद्यतान्.

37. B. C. E. and Va., °प्रवणाः for °प्रणताः.

38. D. H. करभा for कपिशां. So also Malli:. 'करभां' इति केचित्पठन्ति ; A. C. G. H. Chà. Din. Va. and Su., उत्कलादर्शित°, B. E. उत्कलादेशित°, D. has उत्कलैर्दर्शित°; D. and Su , read कलिङ्गाभिमुखं for कलिङ्गाभिमुखः.

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥
प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥
द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥
ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥

राजभिरादर्शितपथः संदर्शितमार्गः सन् । [ उत्कलदेशीयास्तु संग्रामदिने एव रघुवरणयोर्न्यपतन्नित्यर्थः-चा० ] । कलिङ्गाभिमुखो ययौ ( जगाम ) ।

३९. स रघुर्महेन्द्रस्य कुलपर्वतविशेषस्य । "महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः" इति विष्णुपुराणात् । मूर्ध्नि तीक्ष्णं दुःसहं प्रतापम् । यन्ता सारथिः गम्भीरवेदिनः [ शृणिमगणयतः । त्वग्भेदाद्रुधिरस्रावान्मांसस्यगलनादपि । संज्ञां न लभते यस्तु विद्याद्गम्भीरवेदिनमिति पालकाप्यः-चा० ] । द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितमङ्कुशमिव । न्यवेशयन्निक्षिप्तवान् । " त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता " इति राजपुत्रीये । " चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः " इति मृगचर्मीये ।

४०. गजसाधनः सन् ( गजाः साधनं सेनाङ्गं यस्य सोऽसंख्यहस्तिश्रेणीयुक्तः ) । कालिङ्गः कलिङ्गानां राजा । " द्व्यञ्मगधकलिङ्ग-" इत्यादिनाण्प्रत्ययः । अस्त्रैरायुधैस्तं रघुम् । पक्षाणां । छेदे ( खंडने ) उद्यतमुद्युक्तं शक्रं ( इन्द्रं ) शिलावर्षी ( पाषाणान्मुञ्चन् ) पर्वत इव । प्रतिजग्राह प्रत्यभियुक्तवान् ।

४१. काकुत्स्थो रघुस्तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां । [ लोहशराणां-चा० ] । दुर्दिनम् । लक्षणया वर्षमुच्यते । विषह्य सहित्वा सद्यथाशास्त्रं मङ्गलस्नात इव विजयमङ्गलार्थमभिषिक्त इव । जयश्रियं प्रतिपेदे प्राप । [ वैरिबाणवारवर्षणसहनानंतरं रघुररीन् व्यजेष्टेत्यर्थः-चा० ] । " यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम् " इति यादवः ।

४२. तत्र महेन्द्राद्रौ । युध्यन्त इति योधाः ( सुभटाः ) । पचाद्यच् । रचिताः कल्पिता आपानभूमयः

shown the way by the princes of Utkala (Orissa), bent his course towards Kalinga.

39. He encamped with all the unbearable influence of his military glory, on the peak of the Mahendra mountain, like unto the elephant driver, who plunges deep his goading rod, on the head of an elephant that does not mind the pain

40 The prince of Kalinga, who came to fight with a large number of elephants received him with a shower of missiles, as the mountain did once receive Indra with a shower of stones, when the latter made an attempt to cut down their wings.

41. There the descendant of Kakutstha, having endured the shower of darts from his foes, won the palm of victory over them, and shone in his glory, as if fresh from an ablution, preparatory to some holy ceremony according to the rule.

42. His war-like-soldiers made little drinking-grounds there in those hills, and drank the

41-42. Between these B. D. E. Chi. Din. Va. Su., and Dhar. read, " वायव्यास्त्रविनिर्धूतात्पक्षविद्धान्महोदधेः । गजानीकात्स कालिङ्गं तार्क्ष्यः सर्पमिवाददे " । (पक्षविध्दात-पक्षाविद्वात् ).

42. B. C. E. G. Chi. Din. Va. Su. and Dhar., नालिकेरासवं for नारिकेलासवं, H. has नालिकेलासवं. ।

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥
ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥
स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥

पानयोग्यप्रदेशा यैस्ते तथोक्ताः सन्तो नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः । तत्र विजहुरित्यर्थः । शात्रवं यशश्च पपुः । जहुरित्यर्थः ।

४३. धर्मविजयी धर्मार्थं विजयशीलः । [ धर्मविजयी लोभविजयी असुरविजयी चेति त्रिविधो राजा । यः शत्रुं निर्जित्य तदीयां नृपश्रियं नीत्वा शत्रुं तस्मिन्नेव स्थाने स्थापयति स धर्मविजयी । यः शत्रुं निर्जित्य तदीयां श्रियं मेदिनीं च गृहीत्वा प्राणैर्न विकुरुते स लोभविजयी । यः शत्रुं हत्वा तदीयां श्रियं मेदीनीं च गृह्णाति स असुरविजयीति–व० ] । स नृपो रघुः । गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः । तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं ( लक्ष्मीं ) जहार ( हृतवान् ) । धर्मार्थमिति भावः । मेदिनीं ( भुवं ) तु न जहार । शरणागतवात्सल्यादिति भावः ।

४४. ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुकश्रेणिमता । व्रीह्यादित्वादि-निप्रत्ययः । वेलायाः समुद्रकूलस्य तटेनोपान्तेनैवागस्त्येनाचरितां ( सेवितां ) आशां दक्षिणां दिशमनाशास्यजयः ( नान्यैः पुरुषैः आशास्यते प्राप्यते जयो विजयश्रीर्यस्य सः ) । अयत्नसिद्धत्वादप्रार्थनीयजयः सन् । ययौ ( जगाम ) । " अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः " इति ब्रह्मपुराणे ।

४५. स रघुः । गजानां दानेन मदेन सुगन्धिना सुरभिगन्धिना । " गन्धस्य–" इत्यादिनेकारादेशः समासान्तः । यद्यपि गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशः । तथापि निरङ्कुशाः कवयः । तथा माघकाव्ये– " ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः " ( ६।५० ) नैषधे च– " अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा " ( ३।९३ ) इति । न कर्मधारयान्मत्वर्थीय इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव । सेनायां समवेताः सैन्याः । " सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते " इत्यमरः । " सेनाया वा " इति ण्यप्रत्ययः । तेषां परिभोगेन । [ जलक्रीडादिना–चा० स्नानादिक्रियया–ध० ] । कावेरी नाम सरितं सरितां पत्युः समुद्रस्य शङ्कनीयां न विश्वसनीयां ( कुलटां ) इवाकरोत् । संभोगलिङ्गदर्शनाद्भर्तुरविश्वासो भवतीति भावः ।

---

cocoanut-wine from vessels made of the betel-leaves, the wine resembling the glory of their enemies.

43. The righteous conqueror took away the wealth and not the territory of the lord of Mahendra whom he had taken captive and then liberated.

44. Thence he moved towards south (lit. the direction indicated by the star अगस्त्य) along the sea shore covered with the rows of forests of fruit-bearing पूग trees, scarcely obstructed in his course of conquest.

45. His soldiers enjoyed a hearty bath in the waters of the river Kâveri, fragrant with the smell of elephant sweat, thus making that river an object of jealousy to her Lord the ocean.

---

43. D. has माहेन्द्रनाथस्य for महेन्द्रनाथस्य.

44. D. आगस्त्यचरितां for अगस्त्याचरितां.

45-46. Between these B. C. D. Chà. Din. Va. Su., and Dhar. read " भयोत्सृष्टविभूषाणां तेन केरलयोषितां । अलकेषु चमूरेणुश्चूर्णप्रतिनिधी कृतः " ।

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६ ॥
ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥
भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥ ४८ ॥
दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥

४६. विजिगीषोर्विजेतुमिच्छोर्गताध्वनः ( प्रोल्लंघितमार्गस्य ) तस्य रघोर्बलैः सैन्यैः । " बलं शक्तिर्बलं सैन्यम् " इति यादवः । मारीचेषु मरीचवनेषूद्भ्रान्ताः परिभ्रान्ता हारीताः पक्षिविशेषा यासु ताः । [ मारीचानां गन्धेन भक्षणेन वा उद्भ्रान्तास्त्वस्ताः इतस्ततश्चलिता हारीताः पक्षिविशेषाः अर्थात् शुकाः —ध० ]। यासु ताः।"तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः " इत्यमरः। मलयाद्रेः (मलयाचलस्य) उपत्यका आसन्नभूमयः। [ अधोभूमयः—सु० तटभुवः—ध० ]। " उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका " इत्यमरः। " उपाधिभ्यां त्यकन् " इत्यादिना त्यकन्प्रत्ययः। अध्युषिताः (अधिष्ठिताः)। उपत्यकासूषितमित्यर्थः। " उपान्वध्याङ्वसः " इति कर्मत्वम् ।

४७. अश्वैः क्षुण्णानाम् ( चूर्णानां ) एलानामेलालतानामुत्पतिष्णवः। उत्पतनशीलाः ( वायुवशादिति शेषः )। " अलंकृञ् " इत्यादिनेष्णुच्प्रत्ययः। फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु। सर्वधनीतिवदिन्नन्तो बहुव्रीहिः । मत्तेभानां ( मत्तगजानां ) सकटेषु ( कुम्भस्थलेषु ) ससञ्जुः सक्ताः। " गजगण्डे कटौकटौ " इति कोषः।

४८. चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनान्निम्नेषु समर्पित सञ्जितं त्रिपदीछेदिनां। [ त्रिपदीं छिन्दन्तीति त्रिपदीछेदिनः तेषां सुखावस्थात्यागिनामपि । सुखावस्थितस्य गजस्य पदत्रयावस्था त्रिपदीत्युच्यते—व० ]। पादशृङ्खलछेदकानामपि । " त्रिपदी पादबन्धनम् " इति यादवः । करिणाम् ( गजानां )। ग्रीवासु भवं ग्रैवं कण्ठबन्धनम्। " ग्रीवाभ्योऽण्च " इत्यण्प्रत्ययः। नास्रसन्न स्रस्तमभूत्। " द्युद्भ्यो लुङि " इति परस्मैपदे पुषादित्वादङ्। " अनिदिताम्—" इति नकारलोपः।

४९. दक्षिणस्यां दिशि रवेरपि ( सूर्यस्यापि ) तेजः ( प्रकाशः ) मन्दायते मन्द भवति । लोहितादि-

46. The army of him who was desirous of conquest and who had therefore travelled a long way, encamped in the valleys of the Malaya mountains covered with the pepper forests, where flocks of green pigeons were flying about at their ease.

47. Beaten by hoofs of horses, the dust of एला (cardamom) fruits rose up and clung to the sweating temples of the infuriated elephants, having a similar smell.

48. The neck-rope of the elephants, powerful enough to break down even the girth, tied round in the groves cut into the bark of the sandle trees by the constant coiling of the snakes, did not give way (did not become loose or break off).

49. In the southern quarter even the scorching rays of the sun become dim(are of no effect,

46. A. G. H. मारीचोद्भ्रान्तहारिताः, D. E. मरीचोद्भ्रान्तहारिताः, B. C. Cha. Din. Va. Dhar. and Vija., मरिचोद्भ्रान्तहारिताः, D2. and Su., हारितोत्सृष्टमारीचाः, So also noticed by Dharmameru.

46-47. Between these, B. D. E. Cha. Din. Va. Su., Dhar. and Vija., read " आजानेयखुरक्षुण्णपंकेलाक्षेत्रसंभवं । व्यानशे सपदि व्योम कीटकोशाविलं रजः" ।

49. E. has मंजयते for मंदायते., E. रघोःप्पांड्याःप्रतापं for रघोः पाण्ड्याः प्रतापं

तास्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव संचितम् ॥ ५० ॥
स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५१ ॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५२ ॥
तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ५३ ॥

स्वात्क्यषप्रत्ययः । " वा क्यषः " इत्यात्मनेपदम् । दक्षिणायनं तेजोमान्द्यादिति भावः । तस्यामेव दिशि । पाण्ड्याः पाण्डूनां जनपदानां राजानः पाण्ड्याः । पाण्ड्योर्ड्यण्वक्तव्यः । रघोः प्रतापं न विषेहिरे न सोढवन्तः । सूर्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ।

५०. ते पाण्ड्यास्ताम्रपर्ण्या नद्या समेतस्य संगतस्य महोदधेः संबन्धि संचितं मुक्तासारं मौक्तिकवरम् । " सारो बले स्थिरांशे च न्याय्यं क्लीब वरे त्रिषु " इत्यमरः । स्वं स्वकीयं संचितं यश इव । तस्मै रघवे निपत्य प्रणिपत्य ददुः । यशसः शुभ्रत्वादौपम्यम् । ताम्रपर्णीसंगमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ।

५१-५२. युग्ममेतत् । असह्यविक्रमः ( सोढुमशक्यः असह्यः विक्रमः पौरुषातिरेकः यस्य ) स रघुस्तटेषु सानुष्वालीनचन्दनौ व्याप्तचन्दनद्रुमौ । " गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् " इत्यमरः । स्तनपक्षे प्रान्तेषु व्याप्तचन्दनानुलेपौ । तस्या दक्षिणस्या दिशः स्तनाविव (कुचाविव) स्थितौ मलयदर्दुरौ नाम शैलौ यथाकामं यथेच्छं निर्विश्योपभुज्य । " निर्वेशो भृतिभोगयोः " इत्यमरः । उदकान्यस्य सन्तीत्युदन्वानुदधिः । " उदन्वानुदधौ च " इति निपातः । उदन्वता दूरान्मुक्तं दूरतस्त्यक्तम् । " स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन " इति समासः । " पञ्चम्याः स्तोकादिभ्यः " इत्यलुक् । स्रस्तांशुकं ( विगलितवसनं ) मेदिन्याः ( भूमेः ) नितम्बमिव ( श्रोणीतटमिव ) स्थितं सह्यं सह्याद्रिमलङ्घयत्प्राप्तोऽतिक्रान्तो वा । संप्रति प्रतीचीं दिशमभिययावित्याह ।

५३. अपरान्तानां [ कोङ्कणानां–च० ] पाश्चात्यानां जये उद्यतैरुद्युक्तैः । " अपरान्तास्तु पाश्चात्यास्ते च सूर्यरिकादयः " इति यादवः । विसर्पद्भिर्गच्छद्भिः । [ प्रसरणशालैः–चा० ] । तस्य रघोरनीकैः सैन्यैः ।

---

on the inhabitants), in that same quarter the Pandya princes could not bear the great prowess of Raghu.

50. Those princes bowing down to him offered him large presents of the best of pearls collected from that part of the great ocean, where the river Tamraparni falls into it (thus giving him), as it were, their (accumulated) glory.

51—52. Having enjoyed to his heart's content the two mountains Malaya and Dardura, both of which were girdled by sandle forests, on their summits, as if they were the two breasts of that quarter, with their surface besmeared with yellow sandle, he, of irresistible valour crossed the mountain Sahya, from which the sea retreating (far away from the ocean) as if it were the hip of the earth, the woven garments on which are fallen loose.

53. The sea, though pushed afar by the might of the missiles of Parasurama, appeared as if

---

51. A. D. H. आलीनचन्दनौ : C. G. आलीढचन्दनौ, B. E. Chà. Din. Va. Su, Dhar. and Vija, आधीनचन्दनौ ; A. B. Cha. Din. and Va.,° दर्दुरौ, D. E. G. H. Su. Dhar. and Vija., °दुर्दुरौ, C. °दुर्दरौ.

52. B. C. E. H. Cha. Din. Va. Su. Dhar. and Vija., दूरमुक्तं for दूरान्मुक्तं.

53. A. D. Chà. Din. Va. Su. Dhar. and Vija., प्रसर्पद्भिः for विसर्पद्भिः; B. D. Chà. Din. Va. and Su., रामपूत्सारितः for रामास्त्रोत्सारितः.

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४ ॥
मुरलामारुतोद्धूतमगमत्कैतकं रजः ।
तद्योधवारबाणानामयत्नपटवासताम् ॥ ५५ ॥
अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥
खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥ ५७ ॥

" अनीकोऽस्त्री रणे सैन्यं" इति विश्वः । अर्णवो रामस्य जामदग्न्यस्यास्त्रैरुत्सारितः परिसारितोऽपि सह्यलग्न इवासीत् । सैन्यं द्वितीयोऽर्णव इवादृश्यतेति भावः ।

५४. तेन रघुणा भयेनोत्सृष्टविभूषाणां परिहृतभूषणानां केरलयोषितां केरलाङ्गनानामलकेषु ( कुंतलेषु ) चमूरेणुः सेनारजश्चूर्णस्य कुङ्कुमादिरजसः । [ " वासयोगस्तु चूर्णं स्यादिति " हैमःकोषः–चा० ] । प्रतिनिधीकृतः ( स्थानीयः कृतः ) । एतेन योषितां पलायनं चमूनां च तदनुधावनं ध्वन्यते ।

५५. मुरला नाम केरलदेशेषु काचिन्नदी । तस्या मारुतेन ( वायुना ) उद्धूतमुत्थापितं । कैतकं केतकीसंबन्धि रजः ( परागः ) तद्योधवारबाणानां रघुभटकञ्चुकानाम् । " कञ्चुको वारबाणोऽस्त्री " इत्यमरः । अयत्नपटवासतामयत्नसिद्धवस्त्रवासनाद्रव्यत्वमगमत् । " पिष्टातः पटवासकः " इत्यमरः ।

५६. चरतां गच्छतां वाहानां वाजिनाम् । " वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः " इत्यमरः । गात्रशिञ्जितैर्गात्रेषु ( गमनवशाद् ग्रैवेयादिभूषणयोगेन ) शब्दायमानैः । कर्तरि क्तः । वर्मभिः कवचैः । पवनेनोद्धूतानां कम्पितानां राजतालीवनानां ध्वनिरभ्यभूयत तिरस्कृतः ।

५७. खर्जूरीणां तृणद्रुमविशेषाणाम् । "खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः" इत्यमरः । स्कन्धेषु प्रका-

touching the mountain Sahya on account of his extensive army ( or moving troops), prepared to conquer the kings of the western coast (the Kaunkanas).

54. By him, the clouds of dust raised by the army was made a substitute for the saffron powder in the clocks of the women of Kerala country who had, through fear, rejected their decorations.

55. The pollen of the Ketaki-flowers, wafted by the breezes of the river Murala settled down upon the armour of his soldiers, and served easily the purpose of dress perfuming powders, as it were.

56. The noises of the Rajatali trees beaten by the breeze were quite drowned by the jinglings of the armours, which were on the bodies of his horses in motion.

57. His elephants were tied to the trunks of खर्जूर trees, and as the animals stood there flights of bees fell, from the पुन्नाग flowers, upon their temples fragrant with the temporal juice.

55. A. Din. and Chà. मुरला,° So also noticed by Dhar., C. E. G. H. Va. and Su., मरुला° also noticed by Mail:, D. Dhar. and Vija., समंना°. D2. मुरवी°, So also Malli:. मुरवी°" इति केचित्पठन्ति. B. पुगेयन्°.

56. A. °शिञ्जितैः, B. C. E. °सिञ्जितैः, D. G. H. Chá. Va. Su. Dhar. and:, Vija., °सञ्जितैः, so also Malli. "गात्रमञ्जितैः" इति वा पाठ । सञ्जतर्ण्यन्तात्कर्मणि क्त । B. C. E. Chà. Din. Va. Su. Dhar. and Vija., मर्मरः for वर्मभिः. so also Malli., "मर्मर" इति पाठे वाहानां गात्रशिञ्जितैर्गात्रध्वनिभिरित्यर्थः । मर्मरो मर्मरायमाण इति ध्वनेर्विशेषणम् ।

57. D. G. Chà. Din. Va. Su. Dhar. and Vija., °बद्धानां for °नद्धानां.

अवकाशं किलोदन्वान्रामायाभ्यर्थितो ददौ ॥
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥
मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५९ ॥
पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६० ॥
यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ॥ ६१ ॥

ण्डेषु ।" अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः "इत्यमरः । नद्धानां बद्धानां करिणां ( गजानां ) मदोद्गारेण मदस्रावेण सुगन्धिषु । " गन्धस्य " इत्यादिनेकारः । कटेषु गण्डेषु पुन्नागेभ्यो नागकेशरेभ्यः । [ "पुन्नागः केशरोऽशोकः " इत्यभिधानचिन्तामणिः–चा० ] । पुन्नागपुष्पाणि विहाय । ल्यब्लोपे पञ्चमी । शिलीमुखा अलयः पेतुः । " अलिबाणौ शिलीमुखौ " इत्यमरः । ततोऽपि सौगन्ध्यातिशयादिति भावः ।

५८ उदन्वानुदधी रामाय जामदग्न्याय । अभ्यर्थितो याचितः सन् । अवकाशं स्थानं ददौ किल । किलेति प्रसिद्धौ । [ पुराणे श्रूयते इति–चा० ] । रघवे त्वपरान्तमहीपालव्याजेन ( पाश्चात्यानां भूपानां छद्मना ) करं बलिं ददौ । " बलिहस्तांशवः कराः " इत्यमरः । अपरान्तानां समुद्रमध्यदेशवर्तित्वात्तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानं च भीत्या । न तु याच्ञयेति रामाद्रघोरुत्कर्षः ।

५९. तत्र स रघुर्मत्तानामिभानां ( हस्तिनां ) रदनोत्कीर्णानि दन्तक्षतान्येव । भावे क्तः । व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिंस्तं तथोक्तं त्रिकूटमेवोच्चैर्जयस्तम्भं ( उच्छ्रितं जयसूचकं स्तम्भं ) चकार । गाढप्रकाशस्त्रिकूटोऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूदित्यर्थः ।

६०. ततः ( त्रिकूटपर्वतजयस्तम्भस्थापनानन्तरं ) स रघुः । संयमी योगी तत्त्वज्ञानेन ( परमतत्त्वावबोधेन ) इन्द्रियाख्यानिन्द्रियनामकान्रिपूनिव । पारसीकान्राज्ञः । [ सिन्धुतटवासिनो म्लेच्छराजान्–सु० ] । जेतुं ( वशीकर्तुं ) स्थलवर्त्मना ( स्थलमार्गेण ) प्रतस्थे । न तु निर्दिष्टेनापि जलपथेन । समुद्रयानस्य निषिद्धत्वादिति भावः ।

६१. स रघुर्यवनीनां यवनस्त्रीणाम् । [ यवनदेशीय क्षत्रियस्त्रीणामर्थात्तुरुष्किणीस्त्रीणाम्–च० ] । " जातेरस्त्रीविषयादयोपधात् " इति ङीप् । मुखानि पद्मानीव मुखपद्मानि । उपमितसमासः । तेषां मधुना मद्येन यो मदो मदरागः । कार्यकारणभावयोरभेदेन निर्देशः । त । (मदिरापानजनितां क्षीवतां)। न सेहे ( न चक्षमे)। कमिव। अकाले प्रावृड्व्यतिरिक्ते काले जलदोदयः प्रायेण प्रावृषि पद्मविकाशस्याप्रसक्तत्वादब्जानां संबन्धिनं बालातपम् इव । अब्जहितत्वादब्जसंबन्धित्वं सौरातपस्य । [ तासां यवनीनां पतयो बन्दिग्राहं गृहीताः उत प्राणैर्वियोजिताः येन तन्मुखपद्मरागो विनश्येतेति भावः–सु० ] ।

---

58. It is reported that the ocean gave a pass to Rāma, only when the latter had besought for it, but to Raghu it gave its tribute through the princes of the western coast.

59. In those parts of the country he made the mountain Trikuta, bearing many distinct marks of his valour, in the shape of deep scars made by the tusks of his infuriated elephants the best trophy of his conquest.

60. Thence he set out by an inland route to conquer the Persians, as proceeds an ascetic to conquer, by the knowledge of truth, the enemies called Senses.

61. He could not bear the flush caused by wine in the lotus-like faces of the Yavana-women (the females of the Ionians ), as an untimely gathering of clouds bears not beauty of lotus flower, lit up by the morning sun.

सङ्ग्रामस्तुमुलस्तस्य पाश्चात्त्यैरश्वसाधनैः ।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२ ॥
भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥
अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥
विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥

६२. तस्य रघोरश्वसाधनैर्वाजिसैन्यैः । " साधनं सिद्धिसैन्ययोः " इति हैमः । पश्चाद्भवैः पाश्चात्त्यैर्यवनैः सह । " दक्षिणापश्चात्पुरसस्त्यक् " सहार्थे तृतीया । शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि । तेषां कूजितैः ( टङ्कार- ) शब्दैः । " शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः । जये च शृङ्गविहिते चापेऽप्याह विशेषतः " इति केशवः । अथ वा शार्ङ्गैः शृङ्गसंबन्धिभिः कूजितैर्विज्ञेया अनुमेयाः प्रतियोधाः प्रतिभटाः यस्मिंस्तस्मिन्रजसि ( धूलौ ) तुमुलः सङ्ग्रामः संकुलं युद्धमभूत ( बभूव )। " तुमुलं रणसंकुले " इत्यमरः ।

६३ स रघुर्भल्लापवर्जितैः । [ अर्धचन्द्राकृतिभिः–चा० ] । बाणविशेषकृत्तैः । " स्नुहीदलफलो भल्लः " इति यादवः । श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः । " सिध्मादिभ्यश्च " इति लच्प्रत्ययः । तेषां पाश्चात्त्यानां शिरोभिः ( मस्तकैः ) सरघाभिर्मधुमक्षिकाभिर्व्याप्तैः ( वेष्टितैः ) । " सरघा मधुमक्षिका " इत्यमरः । क्षुद्राः सरघाः । " क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका " इत्यमरशाश्वतौ । क्षुद्राभिः कृतानि क्षौद्राणि मधूनि । "क्षौद्रं मधुनि पानीये " इति विश्वः । "क्षुद्राभ्रमरवटरपादपादञ् " इति संज्ञायामञ्प्रत्ययः । तेषां पटलैः संचयैरिव । " पटलं तिलके नेत्ररोगे च्छदिषि संचये । पिटके परिवारे च " इति हैमः । महीं तस्तारच्छादयामास । [ पाश्चात्याः श्मश्रूणि स्थापयित्वा केशान् वपन्तीति तद्देशाचारोक्तिः–चा० ] ।

६४. शेषा हतावशिष्टा अपनीतशिरस्त्राणा अपसारितशीर्षण्याः सन्तः । "शीर्षकम् । शीर्षण्यं च शिरस्त्रे" इत्यमरः । शरणागतलक्षणमेतत् । तं रघुं शरणं ययुः । तथा हि । महात्मनां ( महानुभावानां ) संरम्भः कोपः । " संरम्भः संभ्रमे कोपे " इति विश्वः । प्रणिपातः प्रणतिरेव प्रतीकारः यस्य स हि । महतां परकीयमैश्वर्यमेवासह्यं न तु जीवितमिति भावः ।

६५. तस्य रघोर्योधा भटा आस्तीर्णानि ( प्रसारितानि ) अजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां ( मधुरसावेष्टनानां ) भूमिषु [ मण्डपेषु–सु० ] । " मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च " इत्यमरः । मधुभिर्द्राक्षाफलप्रकृतिकैर्मद्यैर्विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः । " कर्तृस्थे चाशरीरे कर्मणि " इत्यात्मनेपदम् । " लट् स्मे " इति भूतार्थे लट् ।

62. Fierce was the battle that took place between him and the inhabitants of the western coast, with their cavalry for an army, so thick were the volumes of dust raised by the contending armies, that the twang of their bows alone indicated the opposing ranks.

63. Till he filled up the whole field, with their bearded heads, severed from their bodies, looking like so many collections of bee-hives covered with the black bees.

64. The remnants, putting off their helmets, sought his protection ( yielded to Raghu ) ; for submission is the only remedy to assuage the wrath of the magnanimous

65. Squatting upon their precious deer-skins in the grounds surrounded by the vine, his soldiers relieved the pains (lit. toils ) of victory by refreshing themselves by wine.

62. B. C. E. G. H. Va. Su. and Vija., °प्रतियोध: for °प्रतियोधे.

63. B. क्षौद्रैः पटलैः for क्षौद्रपटलैः.

65. D. °वल्कजभूमिषु for °वलयभूमिषु, So also noticed by Cha.

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ॥ ६६ ॥
विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धाल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥
तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥
काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥ ६९ ॥

६६. ततो रघुर्भास्वान्सूर्य इव शरैर्बाणैरुस्रैः किरणैरिव । "किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयः" इत्यमरः । उदीच्यानुदग्भवान्नृपान्रसानुदकानीवोद्धरिष्यन् ( उन्मूलयिष्यन् पक्षे संशोषयिष्यन् ) । कौबेरीं । कुबेरसंबन्धिनीं दिशमुदीचीं प्रतस्थे ( प्रयाणं चकार ) । अनेकेनेव शब्देनेयमुपमा । यथाह दण्डी— "एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा" इति ।

६७. सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः । "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः । सिन्धोस्तीरे विचेष्टनैरङ्गपरिवर्तनैर्विनीताध्वश्रमाः ( विनीताः स्फोटिताः अध्वनः मार्गस्य श्रमाः खेदाः यैस्ते ) तस्य रघोर्वाजिनोऽश्वा लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्का येषां तान् । यद्वा लग्नकुङ्कुमाः केसराः सटा येषां तान् । "अथ कुङ्कुमम् । काश्मीरजन्म" इत्यमरः । "केसरो नागकेसरे । तुरंगसिंहयोः स्कन्धकेशेषु बकुलद्रुमे । पुन्नागवृक्षे किञ्जल्के स्यात्" इति हैमः । स्कन्धान्कायान् । "स्कन्धः प्रकाण्डे कायेऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च" इति हैमः । दुधुवुः कम्पयन्ति स्म ।

६८. तत्रोदीच्यां दिशि भर्तृषु व्यक्तविक्रमम् । भर्तृवधेन स्फुटपराक्रममित्यर्थः । रघुचेष्टितं रघुव्यापारः । हूणा जनपदाख्याः क्षत्रियाः । [ तुरुष्कभेदाः—चा० ] । तेषामवरोधा अन्तःपुरस्त्रियः । तासां कपोलेषु पाटलस्य पाटलिम्नस्ताडनादिकृतारुण्यस्यादेश्युपदेशक बभूव । अथ वा पाटल आदेश्यादेष्टा यस्य तद्बभूव । [ हूणयोषितः कुचकपोलविदारणपूर्वं रुदन्तीति तद्देशाचारः—चा०—सु० ] । स्वयं लेख्याप्यत इत्यर्थः ।

६९. काम्बोजा राजानः समरे तस्य रघोर्वीर्यं प्रभावम् । "वीर्यं तेजःप्रभावयोः" इति हैमः । सोढुम-

66. Thence Raghu careered towards the northern direction to conquer the Northerners, with his arrows, as careers the sun also towards the north to draw the sap of the earth by his rays.

67. By turning from side to side, on the banks of the river Indus, his horses lessened their fatigues of the way, and shook off from their manes, the sweat-scented dust of कुंकुम.

68. The doings of Raghu in those regions had the effect of making the cheeks of the women in the seraglio of the *Hûna* princes pale, on account of the fate that their husbands met with at his hands (lit. the valour that was shown to their husbands).

69. The Kâmboja princes unable to withstand his valour in battle, bent down, along with

66. D. Dhar. and Vija., औदीच्यान् for उदीच्यान्.

66-67. Between these, D. E. Châ Din. Va. Su. Dhar. and Vija., read "जितानजय्यस्तानेव कृत्वा रथपुरःसरान् । महार्णवमिवौर्वाग्निः प्रविवेशोत्तरापथं" । (तानेव-काकुत्स्थः. °पथः—°पथ).

67. A. has सिन्धुतीरविचेष्टनैः B. C. E. G. H. Châ. Din. Va. Su. Dhar. and Vija., वङ्क्षुतीरविचेष्टनैः. D. मङ्क्षुतीरविचेष्टनैः; E. has वारिस्कन्धान् for वाजिनः स्कन्धान्.

68. A. D. हूना° for हूणा; C. D. E. H. Châ. Din. Va. Su. Dhar. and Vija., °पाटनादेशि for °पाटलादेशि.

69. A. G. अक्षोटैः. B. C. H. Châ. Din. Va. Su. Dhar, and Vija, अक्षोडैः. D. E. अङ्कोलैः so also Malli. who sayo :—अंकोलैर्वृक्षविशेषैः.

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वन्नोत्सेकाः कोशलेश्वरम् ॥ ७० ॥
ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥
शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥

नीश्वरा अशक्ताः सन्तः । गजानामालानं बन्धनम् । भावे ल्युटि " विभाषा लीयतेः " इत्यात्वम् । तेन परिक्लिष्टैः परिक्षतैरक्षोटैर्वृक्षविशेषैः सार्धमानताः [ नम्राजाताः । सहोक्तिरलंकारः–चा० ] ।

७०. तेषां काम्बोजानां सद्भिरश्वैर्भूयिष्ठा बहुलास्तुङ्गाः ( उच्चाः ) द्रविणानां हिरण्यानाम् । " हिरण्यं द्रविणं द्युम्नम् " इत्यमरः । राशय एवोपदा उपायनानि । " उपायनमुपग्राह्यमुपहारस्तथोपदा " इत्यमरः । कोशलेश्वरं कोशलदेशाधिपतिं तं रघुं शश्वदसकृद्विविशुः । "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः । तथाप्युत्सेका गर्वास्तु नविविशुः । सत्यपि गर्वकारणे न जगर्वेत्यर्थः ।

७१. ततोऽनन्तरमश्वसाधनः ( अश्वाः साधनं सेनांगं यस्य स तादृशः ) सन्गौर्या गुरुं पितरं शैलं हिमवन्तम् । उद्धूतैरश्वखुरोद्धूतैः ( उत्थापितैः ) धातूनां गैरिकादीनां रेणुभिः ( धूलिभिः ) तत्कूटांस्तस्य शृङ्गाणि । " कूटोऽस्त्री शिखरं शृङ्गम् " इत्यमरः । वर्धयन्निव । आरुरोह ( अरुक्षत ) उत्थितद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जायत इति भावः ।

७२ तुल्यसत्त्वानां सैन्यैः समानबलानाम् । गुहासु शेरत इति गुहाशयास्तेषाम् । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । "दरी तु कन्दरो वास्त्री देवखातबिले गुहा" इत्यमरः । सिंहानां हरीणाम् । "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इत्यमरः । संबन्धि परिवृत्य परावृत्यावलोकितं शयित्वैव ग्रीवाभङ्गेनावलोकनम् । कर्तृ । सैन्यघोषे सेनाकलकले संभ्रमकारणे सत्यप्यसंभ्रममन्तःक्षोभविरहित्वम् । नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते । शशंस कथयामास । सैन्येभ्य इत्यर्थाल्लभ्यते । बाह्यचेष्टितमेव मनोवृत्तेरनुमापकामिति भावः । असंभ्रान्तत्वे हेतुस्तुल्यसत्त्वानामिति । न हि समबलः समबलाद्बिभेतीति भावः ।

---

Akshota-trees, injured by the fastening chains of elephants with which they were tied.

70. Their presents mostly consisting of hoards of gold, augmented by the addition of excellent horses, constantly got to the lord of the Kosalas, yet pride never entered his soul.

71. Then he, with his army of horses, ascended the mountain (Himavat), the father of Gauri, increasing the height of its peaks, as it were, by the dust of minerals raised up ( by the hoofs of the horses ).

72. The lions, that were lying in the caves, simply turned their necks and looked without the least fear, on his noisy army, thus betokening the equal might that lay in them.

---

70. B. C. E. G. H. तुङ्गद्रविण for तुङ्गा द्रविण°; D. कोसले° for कोशले°; A. विविशुस्तं कोशलेशमुदन्वन्तमिवापगाः, C. उपदा विविशुः शश्वत्समुद्रमिव निम्नगाः, So also noticed by Châ., D. G. H. विविशुस्तं विशां नाथमुदन्वन्तमिवापगाः, D2. and Su , विविशुस्तं विशां नाथं महार्णमिवापगाः, E. उपदा विविशुस्तं च नोत्सेकाः कोशलेश्वरं, for the second Pâda. G. H. also notice the reading given in our text. So also Malli :—विविशुस्तं विशांनाथमुदन्वन्तमिवापगाः इति पाठान्तरं आपगा नद्य उदन्वन्तं समुद्रमिव विशांनाथं तं रघुं विविशुः.

71. D. and Din. उद्धतैः for उद्धूतैः.

72. A. D. °घोषेऽथ° for °घोषेऽप्य°; B. C. E. G. H. Va. Su. Dhar. and Vija. गुहाशयानां, A. गुहागतानां , D. and Châ., गुहाश्रयाणां; A. D. दृप्तानां for सिंहानां.

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥
विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥
सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥
तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥

७३. भूर्जेषु भूर्जपत्रेषु । "भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका मता" इति यादवः । मर्मरः शुष्कपर्णध्वनिः । "मर्मरः शुष्कपर्णानाम्" इति यादवः । अयं च शुक्लादिशब्दवद्गुणिन्यपि वर्तते प्रयोज्यते च । मर्मरैरगुरुधूपगन्धिभिरिति । अतो मर्मरीभूताः । मर्मरशब्दवन्तो भूता इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः । श्रोत्रसुखाश्चेति भावः । गङ्गाशीकरिणः ( गङ्गाम्बुकणवाहिनः )। शीतला इत्यर्थः । मरुतो वाता मार्गे ( पथि ) तं सिषेविरे ।

७४. सैनिकाः । सेनायां समवेताः । प्राग्वहतीयष्ठक्प्रत्ययः । नमेरूणां सुरपुन्नागानां छायासु निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिर्वासितोत्सङ्गाः सुरभिततला दृषदः शिला अध्यास्याधिष्ठाय । "अधिशीङ्स्थासां कर्म" इति कर्म । दृषत्स्वधिरुह्येत्यर्थः । विशश्रमुर्विश्रान्ताः ।

७५. सरलेषु देवदारुविशेषेष्वासक्तानि यानि मातङ्गानां गजानाम् । ग्रीवासु भवानि ग्रैवेयाणि कण्ठशृङ्खलानि । "ग्रीवाभ्योऽण्च" इति चकाराड्ढञ्प्रत्ययः । तेषु स्फुरितास्त्विषः प्रतिफलितभास ओषधयो ज्वलन्तो ज्योतिर्लताविशेषा नक्तं रात्रौ नेतुर्नायकस्य रघोरस्नेहदीपिकास्तैलनिरपेक्षाः प्रदीपा आसन् ।

७६. तस्य रघोरुत्सृष्टेषूज्झितेषु निवासेषु सेनानिवेशेषु कण्ठरज्जुभिर्गजग्रैवैः क्षता निष्पिष्टास्त्वचो येषां ते देवदारवः ( सरलवृक्षाः ) किरातेभ्यः वनचरेभ्यः । [ भिल्लेभ्यः—ध० ] । गजानां वर्ष्म प्रमाणम् । "वर्ष्म देहप्रमाणयोः" इत्यमरः । शशंसुः कथितवन्तः । देवदारुस्कन्धत्वक्क्षतैर्गजानामौन्नत्यमनुमीयत इत्यर्थः ।

---

73. The soft breezes of the river Ganga rustled on among the dry leaves of the birch trees, making the wild bamboo resound and charged with the particles of its waters, refreshed him on the way.

74. Seated on pieces of stone, whose surfaces were made fragrant by the musk in the navel of deer previously sitting in the shades of Nameru-trees, his soldiers took their rest.

75. The herbs that were near and the lustre of which was reflected on the neck-tie-chains of elephants tied to the Sarala-trees, served the purpose of lamps without oil at night to the leader of the army.

76. After he had left the place of encampment, by the scars on their barks made by the neck-tie-ropes of the elephants, the fir trees indicated to the foresters the height of those animals.

---

73. H. has मर्मरीभूतकीचकध्वनिहेतवः; G. °सीकरिणः for शीकरिणः.

75. E. H. औषधयः for ओषधयः.

76. A. D. E. गजवर्म for गजवर्ष्म.

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥
शरैरुत्सवसंकेतान्स कृत्वा विरतोत्सवान् ।
जयोदाहरणं बाह्वोर्गापयामास किंनरान् ॥ ७८
परस्परेण विज्ञातस्तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥
तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥

७७. तत्र हिमाद्रौ रघोः । पर्वते भवैः पर्वतीयैः । "पर्वताच्च" इति छप्रत्ययः । गणैरुत्सवसंकेताख्यैः सप्तभिः सह । "गणानुत्सवसंकेतानजयत्सप्त पाण्डवः" इति महाभारते । नाराचानां बाणविशेषाणां । [ लोः हबाणानां—चा० ] । क्षेपणीयानां भिन्दिपालानामश्मनां च निष्पेषेण ( परस्परं ) संघर्षेणोत्पतिताः ( उत्थिताः ) अनलाः ( अग्नयः ) यस्मिंस्तत्तथोक्तम् । " क्षेपणीयो भिन्दिपालः खड्गो वीर्यो महाफलः " इति यादवः । घोरं भीमं जन्यं युद्धमभूत् ( बभूव ) । " युद्धमायोधनं जन्यम् " इत्यमरः ।

७८. स रघुः शरैर्बाणैरुत्सवसंकेनानाम ( सप्त ) गणान्विरतोत्सवान् ( नष्टयुद्धोत्साहान् ) कृत्वा । जित्वेत्यर्थः । [ गणानुत्सवसंकेतानजयत्सप्त पाण्डवः इति महाभारते—चा० ] । किंनरान्बाह्वोः स्वभुजयोर्जयोदाहरणं जयख्यापकं प्रबन्धविशेष [ यशः । " यशोजयोदाहरणम् " इति हैमः—चा० ] । गापयामास । " गतिबुद्धि—" इत्यादिना किंनराणां कर्मत्वम् ।

७९. तेषु गणेषूपायनयुक्ताः ( ढौकानिकायुक्ताः ) पाणयः ( हस्ताः ) येषां तेषु सत्सु परस्परेणान्योन्यं राज्ञा हिमवतः सारो धनरूपो विज्ञातः । हिमाद्रिणापि राज्ञः सारो बलरूपो विज्ञातः । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ।

८०. स रघुस्तत्र हिमाद्रावक्षोभ्यमधृष्यं यशोराशिं ( कीर्तिसमूहं ) निवेश्य निधाय । पौलस्त्येन रावणेन तुलितस्य चालितस्याद्रेः कैलासस्य ह्रियमादधानो जनयन्निव । अवरुरोहावततार । कैलासमगत्वैव प्रतिनिवृत्त इत्यर्थः । न हि शूराः परेण पराजितमभियुञ्जन्त इति भावः ।

77. There a terrible battle ensued between Raghu and the mountain-tribes, in which fire flashed up by the concussion of Naracha darts, and the stones flung by means of slings.

78. After having made the tribe of the Utsava-sankatas cheerless by his arrows, he caused the Kinnaras to sing the song of his victory.

79. When they came with presents in their hands to the King, his prowess became known to the great mountain Himavat, and its wealth became known to the King mutually.

80. He descended from the mountains after having established his spotless fame (lit. after having planted there his imperturbable pile of glory), causing the rival mountain of Kailasa which had been once shaken by the son of पुलस्त्य to blush, as it were.

77. A. D. E. H. Chà. Din. Va. Su. Dhar. and Vija., जन्यं, B. संग्रामः, C. G. युद्धं.; B. D. E. G. H. Chà. Din. Va. Su. Dhar. and Vija., पार्वतीयैः for पर्वतीयैः; B. संग्रामः सह तैस्तत्र पार्वतीयैरभूद्रघोः for the first Pàda; D विमर्दः सह तैस्तत्र निष्पेषोत्पतितानलः for the second Pàda.

78. B. C. E. G. H. Chà. Din. Va. Su. Dhar. and Vija., उत्सव, ° A. उच्छिन्न°, D. उत्सव°..

79. B. C. E. Châ. Din. Va. Su. Dhar. and Vija., परस्परस्य for परस्परेण.

80. D. Chà. Din. Va. and Su., श्रियं for ह्रियं.

# पंचमः सर्गः ।

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥
स मृण्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥
तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।
विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

१. विश्वजिति विश्वजिन्नाम्न्यध्वरे यज्ञे । " यज्ञः सवोऽध्वरो यागः " इत्यमरः । निःशेषं विश्राणितं दत्तम् । श्रण दाने चुरादिः । कोषाणामर्थराशीनां जात। [ जातं शब्देन वस्त्राद्यपि दत्तं भवति–हे० ] । समूहो येन तं तथोक्तम् । " कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः " इत्यमरः । " जातं जनिसमूहयोः " इति शाश्वतः । एतेन कौत्सस्यानवसरप्राप्तिं सूचयति । तं क्षितीशं । रघुमुपात्तविद्यः ( उपात्ताः अधिगताः चतुर्दश विद्याः येन स तथोक्तः ) लब्धविद्यः । [ पुराणन्यायमीमांसाधर्मशास्त्राण्यंगमिश्रिताः वेदाः । " शिक्षाकल्पोव्याकरणं निरुक्तं छन्दोज्योतिषम् " इति षडंगानि । एवं चतुर्दश विद्याः–हे० ] । वरतन्तोः शिष्यः कौत्सः । " ऋष्यन्धक–"इत्यण् । इञोपवादः । गुरुदक्षिणार्थी ( गुरवे दक्षिणा चतुर्दश कोटिरूपा तस्याः अर्थः प्रयोजनं यस्य स तथोक्तः ) । " पुष्करादिभ्यो देशे " इत्यत्रार्थाच्चासंनिहिते तदन्ताच्चेति इनिः । अप्रत्याख्येय इति भावः । प्रपेदे प्राप अस्मिन्सर्गे वृत्तमुपजातिः । तल्लक्षणं तु– " स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः " इति ।

२. अनर्घशीलोऽमूल्यस्वभावः । असाधारणस्वभावः इत्यर्थः । " मूल्ये पूजाविधावर्घः " इति । " शीलं स्वभावे सद्वृत्ते " इति चामरशाश्वतौ । यशसा कीर्त्या । प्रकाशत इति प्रकाशः । पचाद्यच् । आतिथिषु साधुरातिथेयः । " पथ्यतिथिवसतिस्वपतेर्ढञ् " इति ढञ् । स रघुः । हिरण्यस्य ( सुवर्णस्य ) विकारो हिरण्मयम् । " दाण्डिनायन–" आदिसूत्रेण निपातः । वीतहिरण्मयत्वादपगतसुवर्णपात्रत्वात् । यज्ञस्य सर्वस्वदक्षिणाकत्वादिति भावः । मृण्मये मृद्विकारे पात्रे । अर्घार्थमिदमर्घ्यम् । " पादार्घाभ्यां च " इति यत् । पूजार्थं द्रव्यं निधाय (निक्षिप्य) श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धम् । यत इति श्रुतं वेदशास्त्रम् । "श्रुतं शास्त्रावधृतयोः " इत्यमरः । अतिथिमभ्यागतं कौत्सम् । " अतिथिर्ना गृहागते " इत्यमरः । प्रत्युज्जगाम अभिमुखं ययौ । ( आसनादुत्थाय कानिचित्पदानि गत्वा त तपोधनं स्वागतं व्याजहारेति भावः ) ।

३. विधिज्ञः शास्त्रज्ञः । अकरणे प्रत्यवायभीरुरित्यर्थः । ( एतदेवहेमाद्रिणा ) । मानधनानामग्रयाय्यग्रेसरः ।

---

1. Kautsa,-the disciple of Varatantu, who had by this time completed the course of study and who was now seeking means to reward his preceptor, got to the lord of the earth, who had already given away in charity the whole lot of his treasure during the Visvajit sacrifice.

2. Lacking gold-vessels he, the hospitable one, of unimpeachable character and of brilliant renown, having put into an earthen-pot the materials of worship, went forth to receive the guest possessed of the lustre of Vedic knowledge.

3. The lord of men versed in duty and the rules of decorum, foremost among those to whom

---

2. B. C. E. H. He. Chà. Din. Va. Su. Dhar. and Vija., अनर्घ्यशीलः. for अनर्घशीलः.

3. D. and Su., विशां पतिर्विष्टरभाजमाह कृतांजलिः कृत्यविदित्युवाच for the second Pàda.

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥
कायेन वाचा मनसापि शश्वद्यत्संभृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५ ॥
आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥

अपयशोभीरुरित्यर्थः । कृत्यवित्कार्यज्ञः । आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् । विशांपतिर्मनुजेश्वरः । "द्वौ विशौ वैश्यमनुजौ" इत्यमरः । विष्टरभाजमासनगतम् । उपविष्टमित्यर्थः । "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यमरः । "वृक्षासनयोर्विष्टरः" इति निपातः । तं तपोधनं विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । "तदर्हम्" इति वतिप्रत्ययः । अर्चयित्वारात्समीपे । "आराद्दूरसमीपयोः" इत्यमरः । कृताञ्जलिः (कृतः बद्ध अञ्जलिर्हस्तसंपुटं येन तादृशः) सन्निति वक्ष्यमाणप्रकारेणोवाच ।

४. हे कुशाग्रबुद्धे (कुशस्याग्रं तद्वत्तीक्ष्णा बुद्धिर्यस्य तत्संबुद्धिः) सूक्ष्मबुद्धे । "कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्" इति हलायुधः । मन्त्रकृतां मन्त्रस्रष्टॄणाम् । [वेदसंहिताकारिणां—चा०] । "सुकर्मपापमन्त्र—" इत्यादिना क्विप् । ऋषीणामग्रणीः श्रेष्ठस्ते तव गुरुः कुशल्यपि । क्षेमवान्किम् । अपि प्रश्ने । "गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि" इत्यमरः । यतो यस्माद्गुरोः सकाशात्त्वयाशेषं (समग्रं आत्मनिष्ठं) ज्ञानम् । लोकेनोष्णरश्मेः सूर्याच्चैतन्यं प्रबोध इव । आप्तं स्वीकृतम् ।

५. कायेनोपवासादिकृच्छ्रचान्द्रायणादिना वाचा वेदपाठेन मनसा गायत्रीजपादिना कायेन वाचा मनसापि । करणेन । वासवस्येन्द्रस्य धैर्यं लुम्पतीति वासवधैर्यलोपि । स्वपदापहारशङ्काजनकमित्यर्थः । यत्तपः शश्वदसकृत् । "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः । संभृतं संचितं महर्षेर्वरतन्तोस्त्रिविधं (तिस्रो विधा यस्य तत्) वाङ्मनःकायजं तत्तपोऽन्तरायैर्विघ्नैरिन्द्रप्रेरिताप्सरःशापैर्व्ययं नाशं नापाद्यते । [श्रापाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययं इत्यभोक्तत्वात्—हे० ] । कच्चित् । [ "कच्चिदिष्टप्रियप्रश्ने" इत्यभिधानचिंतामणिः—चा० कोमलामंत्रणे—सु० ] । न नीयते किम् । "कच्चित्कामप्रवेदने" इत्यमरः ।

आधारबन्धप्रमुखैः । [ "मुखं तु वदने मुख्ये आदौ द्वाराभिपालयोः" इति यादवः—चा० ] । आल-

self-respect is as precious as wealth, having given a proper reception to the comfortably-seated penance-great dis .ple, stood before him with hands folded and addressed him in the following words :—

4. Oh you of an acute intellect ! is it well with your preceptor who is the foremost of those sages who were the authors of hymns, and from whom you have obtained complete knowledge, as the world obtains consciousness (activity) from the hot-rayed one (sun).

5. I hope no temptations (lit. obstructions) are able to diminish the three-fold asceticism of the great sage, which has been accumulated by constant exercises of the body, speech and mind, and which disturbs the peace of Indra's mind.

6. I hope the storm and other calamities have not befallen the trees round your hermitage,

4. B. D. E. H. Chà. Din. Va. Su. Vija. and Dhar., अपि for अपि, So also noticed by He. ; A. H. लोकेन चैतन्यमिवोष्णरश्मेः also noticed by He., B. C. E. He. and Va., चैतन्यमुष्णादिव दीक्षितेन, D. Din. and Chà., आलोकमर्कादिव जीवलोकः, D2. and Su., चैतन्यमर्कादिव जीवलोकः, also noticed by He, A2. चैतन्यमुष्णादिव यायजूकं also noticed by He.

5. B. C. E. H. He. Chà. Din. Va. Dhar. & Vija, च for अपि; B. C. E. H. He. Chà. Din. Va. Su. Dhar. and Vija., वज्रिणो धैर्यविलोपि तप्तं for संभृतं वासवधैर्यलोपि., D. अन्तरायं for अन्तरायैः, also noticed by He.

6. D. and Su., °वृक्षकाणां for °पादपानां.

क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥
निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥
नीवारपाकादि कडङ्करीयैरामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

बालनिर्माणादिभिः प्रयत्नैरुपायैः । "आधार आधिकरणेऽप्यालवालाम्बुधारणे" इति विश्वः । सुतेभ्यो निर्गतो विशेषोऽतिशयो यस्मिन्कर्मणि तत्तथा ( पुत्रसदृशं ) । संवर्धितानां श्रमच्छिदां ( मार्गखेदापहारिणां ) वः ( युष्माकं ) आश्रमपादपानां ( आश्रमतरूणां ) वात्यादिः । आदिशब्दाद्दावानलादिः । उपप्लवो बाधकः न कश्चिदस्ति किम् ।

७. क्रियानिमित्तेष्वप्यनुष्ठानसाधनेष्वपि कुशेषु मुनिभिर्वत्सलत्वान्मृगस्नेहादभग्नकामाप्रतिहतेच्छा । तेषां मुनीनामङ्का एव शय्यास्तासु च्युतानि नाभिनालानि यस्याः सा तथोक्ता मृगीणां प्रसूतिः संततिरनघाव्यसना कच्चित् । अनपायिनी किमित्यर्थः । "दुःखैनोव्यसनेष्वघम्" इति यादवः । [ ते हि व्यालभयाद्दशरात्रमङ्क एव धारयन्ति इति शान्तिदयोक्तेः—हे० ] ।

८. यैस्तीर्थजलैर्नियमाभिषेको नित्यस्नानादिर्निर्वर्त्यते निष्पाद्यते । येभ्यो जलेभ्यः । उद्धृत्येति शेषः । पितॄणामग्निष्वात्तादीनां निवापाञ्जलयस्तर्पणाञ्जलयः । "पितृदानं निवापः स्यात्" इत्यमरः । निर्वर्त्यन्ते । उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठः षष्ठभागः । [ मुनयो हि नृपोद्देशेन षष्ठं भागं तीरे क्षिपन्ति । यदुक्तं । "यस्मादारण्यका अपि उञ्छषड्भाग निर्वापयन्ति" इति श्रुतेः । योस्मान्पालयतीति । "कुशूलकुंभी धान्यो वा त्र्यहिकः श्वस्तनोपि वा । जीवेद्वापि शिलोञ्छेन श्रेयानेषां परम्परा" इति याज्ञवल्क्यः—हे० ] । पालकत्वाद्राजग्राह्यैरङ्कितानि ( चिह्नितानि ) सैकतानि पुलिनानि येषां तानि तथोक्तानि वो युष्माकं तानि तीर्थजलानि शिवानि भद्राणि कच्चित् । अनुपप्लवानि किमित्यर्थः । "उञ्छो धान्यांशकादान कणिशाद्यर्जनं शिलम्" इति यादवः । "षष्ठाष्टमाभ्यां ञ च" इति षष्ठशब्दाद्भागार्थेऽन्प्रत्ययः । अतएवापूरणार्थत्वात् । "पूरणगुण—" इत्यादिना न षष्ठीसमासप्रतिषेधः । सिकता येषु सन्ति सैकतानि । "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः ।

९. कालेषु ( वैश्वदेवावसानेषु ) योग्यकालेषूपपन्नानामागतानामतिथीनां कल्प्या भागा यस्य तत्तथोक्तम् । वने भवं वन्यम् । शरीरस्थितेर्जीवितस्य साधनं [ उपायः । प्राणयात्रानिदानं—चा० सु० ] । वो युष्माकम् । पच्यत इति पाकः फलम् । धान्यमिति यावत् । नीवारपाकादि । आदिशब्दाच्छ्यामाकादिधान्यसंग्रहः ।

which beguile fatigue and which have been brought up by you with a care not exceeding that bestowed upon a son, by digging water-basins and performing other like operations.

7. I hope that it fares well with the fawns of female-deer whom the sages through extreme affection indulge in the desire of feeding even upon the Kusa-grass, required in their ceremonial rites, and who drop down the umbilical cords on their laps, which formed, as it were, their beds.

8. I hope it is all right with your holy waters, by means of which the daily ablutions enjoined by duty are performed and from which handfuls of watery offerings are given to the manes and whose sandy shores are marked by the sixth portion of the whole heap of gathered corn.

9. I hope your ripe Nivára corn, fruits, &c ,—the sylvan source of the sustenance of your bodies, out of which you give portions to guests coming in time, is never eaten up by country cattle that feed upon chaff.

9. D. कडंकरीयैः for कडंगरीयैः; D. E. अतिथिभागधेयं for अतिथिकल्प्यभागं., So also noticed by He.; H. and Vijay. have °कल्पभागं for कल्प्यभागं.

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥
तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि संभावयितुं वनान्माम् ॥ ११ ॥
इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥

जनपदेभ्य आगतैर्जानपदैः । " तत आगतः " इत्यण् । कडंगरीयैः । कडंगरं बुसमर्हन्तीति कडंगरीयाः । " कडंगरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् " इत्यमरः । " कडगरदक्षिणाच्छ च " इति छप्रत्ययः । नैर्गोमहिषादिभिर्नाभिमृश्यते कश्चित् । न भक्ष्यत किमित्यर्थः । [ पाकशब्दोऽल्पार्थः प्रशंसार्थश्च तथा श्च: पाकयज्ञाः इत्यत्राश्वलायनगृह्यनारायणीयवृत्तौ । पाकयज्ञाः अल्पयज्ञाः प्रशस्तयज्ञाश्च अल्पप्रशंसयोरुभयत्र पाकशब्दः योस्मात्पाकतर इत्यत्राल्पत्वे पाकशब्दः । तं पाकेन मनसापश्यम् । यो मापाकेन मनसेति अत्र प्रसंशायामिति—हे० ] ।

१०. किं च त्वं प्रसन्नेन ( संतुष्टेन ) सता महर्षिणा सम्यग्विनीय शिक्षयित्वा । विद्यामुपदिश्येत्यर्थः । गृहाय गृहस्थाश्रमं प्रवेष्टुम् । " क्रियार्थोपपद—" इत्यादिना चतुर्थी । अनुमतोऽप्यनुज्ञातः किम् । हि यस्मात्ते तव सर्वेषामाश्रमाणां ब्रम्हचर्यवानप्रस्थयतीनामुपकारे क्षमं शक्तम् । " क्षम शक्तं हिते त्रिषु " इत्यमरः । द्वितीयमाश्रमं गार्हस्थ्य संक्रमितु प्राप्तुमयं कालः । विद्याग्रहणानन्तर्यात्तस्येति भावः । " कालसमयवेलासु तुमुन् " इति तुमुन् । सर्वोपकारक्षममित्यत्र मनुः— " यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः " इति । कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह.—

११. अर्हतः पूज्यस्य प्रशंस्यस्य । " अर्हः प्रशंसायाम् " इति शतृप्रत्ययः । तवाभिगमनेनागमनमात्रेण मे मनो न तृप्तं न तुष्टम् । किं तु नियोगक्रिययाज्ञाकरणेनोत्सुकं सोत्कण्ठम् । " इष्टार्थोद्युक्त उत्सुकः " इत्यमरः । " प्रसितोत्सुकाभ्यां तृतीया च " इति सप्तम्यर्थे तृतीया । शासितुर्गुरोराज्ञयाप्यात्मना स्वतो वा । " प्रकृत्यादिभ्य उपसंख्यानम् " इति तृतीया । मां संभावयितुं ( सनाथं कर्तुं अनुगृहीतुं वा ) वनात् ( तपोवनात् ) प्राप्तोऽसि । गुर्वर्थं स्वार्थं वागमनमित्यर्थः । [ धातूनामनेकार्थत्वात्प्रयोजनमालंकारः । तथाकाव्यादर्शे । " प्रियः प्रियतराख्यात "–हे० ] ।

१२. अर्घ्यपात्रेण ( पूजाभाजनेन अर्थात् ) मृण्मयेनानुमितः ( ज्ञातः ) व्ययः सर्वस्वत्यागो यस्य तस्य र-

---

10. Has not the great sage, being pleased to see you properly instructed given you his permission to enter on the life of a householder ? For it is now time (proper) for you to enter on the second stage of life which of all the others gives one the amplest scope for the performance of charitable deeds

11. With the mere arrival of your meritorious self my heart is not content; it longs to execute your commands Is it by your preceptor's order or of your own accord that you have come to do me the honour of a visit from the forest ?

12. On hearing these words, though noble, of Raghu, whose earthen pot which contained the

---

10. B. C. E. H. He. Chà. Din. Va. Su. Dhar. Vija. and Vijay. अथि for अपि.

11. D. अनुग्रहेणाभिगमास्थितेन तवार्हतस्तुष्यति मे न चेतः for the first Pàda, so also He. notices this; B. E. H. He. Chà. Din. Va. Dhar. Su. Vijay. and Vija., अयि for अपि.

12. B. C. E. H. Chà. Din. and Su., तमित्यवोचत्,° A. He. Vijay. and Va., तं प्रत्यवोचत्, ° D. Dhar. and Vija., प्रत्याह कौत्सस्तमपेतकुत्सम्.

सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥
भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ १४ ॥
शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥

घोरित्युक्तप्रकारामुदारामौदार्ययुक्तामपि गां वाचम् । " मनो नियोगक्रिययोत्सुकं मे " इत्येवंरूपाम् । " स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः " इत्यमरः । निशम्य श्रुत्वा वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्यसिद्धिं प्रति दुर्बलाशः सन्मृण्मयपात्रदर्शनाच्छिथिलमनोरथः संतं रघुमिति वक्ष्यमाणप्रकारेणावोचत् ।

१३. हे राजंस्त्व सर्वत्र ।[ गुर्वाश्रमतरुप्रभृतिषु–चा० ] । नोऽस्माकं वार्तं स्वास्थ्यमवेहि जानीहि । "वार्त्त वल्गुन्यरोगे च " इत्यमरः । " वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम् " इति यादवः । न चैतदाश्चर्यमित्याह–नाथ इति । त्वयि नाथे ईश्वरे सति प्रजानामशुभं दुःखं कुतः । तथा हि । अर्थान्तरं न्यस्यति–सूर्य इत्यादिना । सूर्ये तपति प्रकाशमाने सति तमिस्रा तमस्ततिः । " तमिस्रं तिमिरं कोपे तमिस्रा च तमस्ततौ । कृष्णपक्षनिशायां च " इति विश्वः । लोकस्य जनस्य । " लोकस्तु भुवने जने " इत्यमरः । दृष्टेरावरणाय ( आच्छादनाय ) कथं कल्पेत । दृष्टिमावरितुं नालमित्यर्थः । कृपेरलमर्थत्वात्तद्योगे " नमः स्वस्ति–"इत्यादिना चतुर्थी । " अलमिति पर्याप्त्यर्थग्रहणम् "इति भगवान्भाष्यकारः । कल्पेत संपद्येतेत्यर्थः । क्लृपि संपद्यमाने चतुर्थीति वक्तव्यात् । [ यथा किराते । " उद्गतिशुचमिवाप्यतमिस्रामन्तिकं व्रजति तारकराजे दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री "–हे० ] । " तवार्हतः "–इत्यादिनोक्तं यत्तच्चित्रमित्याह–

१४. प्रतीक्ष्येषु पूज्येषु । " पूज्यः प्रतीक्ष्यः " इत्यमरः । भक्तिरनुरागविशेषस्ते तव कुलोचिता कुलाभ्यस्ता । "अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः । हे महाभाग सार्वभौम तया भक्त्या पूर्वान् ( पूर्वजान् ) अतिशेषेऽतिवर्तसे । किं तु सर्वत्र वार्त्तं चेत्तर्हि कथं खेदखिन्न इव दृश्यसेऽत आह–व्यतीतेति । अहं व्यतीतकालोऽतिक्रान्तकालः सन्नर्थिभावात् (याचकभावात्) त्वामभ्युपेतः (समागतः) इति मे मम विषादः (खेदः) ।

१५. हे नरेन्द्र तीर्थे । [ यज्ञे–सु० ] । सत्पात्रे प्रतिपादिता दत्तर्द्धिः ( संपत्तिः ) येन स तथोक्तः

---

materials of worship clearly showed that he had disposed of the whole of his wealth in charity, Vertantu's disciple despairing of gaining his object, addressed him in the following words :—

13. Know, Oh king, it is well with us, in every particular. How can evil happen to subjects who have you for their protector ? How can volumes of smoke obscure the sight of men in the face of the dazzling light of the sun ?

14. Reverence for the worthy is hereditary in your family and, Oh fortunate king, you excel your ancestors in that. It pains me however that I have come to you as a beggar when it is too late.

15. Oh lord of the people, you who have given your wealth to worthy recipients and have retained nothing but your body now appear like a Nivara-plant which has been stripped of its grains by foresters and has nothing left to it but its culm.

---

13. D. Châ. Din. and Su., तमिस्रं for तमिस्रा. So also noticed by He., as well as Malli :-the latter observes. ' तमिस्रं' इति पाठे तमिस्रं तिमिरं । " तमिस्रं तिमिरं तमः" इत्यमरः ।

14. C. E. and Vijay. महाभागतया for महाभाग तया., So also noticed by He. and Châ.; D. E. वितर्कः for विषादः.

स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥
तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥
एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥

" योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेषु च " इति हलायुधः । शरीरमात्रेण ( शरीरमेव शरीरमात्रं तेन केवलेन वपुषा ) तिष्ठन् (वर्तमानः) । आरण्यका अरण्ये भवा मनुष्या मुनिप्रमुखाः । " अरण्यान्मनुष्ये " इति वुञ्प्रत्ययः । तैरुपात्ता ( गृहीता ) फलमेव प्रसूतिर्यस्य स स्तम्बेन काण्डेनावशिष्टः । प्रकृत्यादित्वात्तृतीया । नीवार इव । आभासि शोभसे । [ उपमालंकारः–सु० ] ।

१६. भवानेकनराधिपः सार्वभौमः सन् । मखजं मखजन्यम् । न विद्यते किंचन यस्येत्यकिंचनः । मयूरव्यंसकादित्वात्तत्पुरुषः । तस्य भावस्तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति । ( तत् ) स्थाने युक्तम् । " युक्ते द्वे सांप्रतं स्थाने " इत्यमरः । तथा हि । सुरैर्देवैः पर्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयः ( कृशत्वं ) वृद्धेरुपचयाच्छ्लाघ्यतरो हि वरः खलु । [ प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः । विश्वेदेवास्तृतीयां तु चतुर्थीं सलिलाधिपः । पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या अष्टमीमज एकपात् । नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलां । दशमीं पिबते वायुः पिबत्येकादशीमुमा । द्वादशीं पितरः सर्वे समं प्राश्नंति भागशः । त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् । चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिरिति–हे० ] । " मणिः शाणालीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः " इति भावः । अत्र कामन्दकः—" धर्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव " इति । [ शुक्लप्रतिपदि सर्वे क्षीणमपि चन्द्रं नमस्कुर्वन्ति । यदुक्तं किराते । " प्रणमन्त्यनुपायमुत्थितम् । प्रतिपच्चन्द्रमिव प्रजा नृपम्"—सु० ] ।

१७. तत्तस्मात्तावदनन्यकार्यः ( नास्ति गुरुदक्षिणामन्तरेण अन्यत्कार्यं यस्य सः ) । " यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे " इति विश्वः । प्रयोजनान्तररहितोऽहमन्यतो वदान्यान्तराद्गुर्वर्थं गुरुधनमाहर्तुमर्जयितुं यतिष्ये उद्योक्ष्ये । ते तुभ्यं स्वस्ति शुभमस्तु । " नमःस्वस्ति–" इत्यादिना चतुर्थी । तथा हि । चातकोऽपि । [ अपि शब्दः चातकस्य जलदैकशरणत्वसूचनार्थः–हे० चा० ] । " धरणीपतितं तोयं चातकानां रुजाकरम् " इति हेतोरनन्यगतिकोऽपीत्यर्थः । निर्गलितोऽम्ब्वेव ( जलमेव ) गर्भो यस्य तं शरद्घनं नार्दति न याचते । [ किं पुनः विद्यमानोपायोऽहं त्वामित्यर्थः–हे० ] । " अर्द गतौ याचने च " इति धातुः । " याचनार्थे रणेऽर्दनम् " इति यादवः । [ अर्थान्तरन्यासालंकारः–सु० ] ।

१८. एतावद्वाक्यमुक्त्वा ( एतावन्मात्रं वाक्यमाख्याय ) प्रतियातुं कामो यस्य तं प्रतियातुकामं गन्तुका-

---

16. The poverty which you though a paramount emperor betray as essentially resulting from the performance of the विश्वजित् sacrifice, does you credit The wane of the digits of the moon drunk one after another by the gods makes her more revered than their waxing.

17. Therefore being determined not to do anything till I reward my preceptor I will try to procure, from some other source, the money which I want to pay him. Hail to you! even the Chataka bird does not implore the autumnal cloud that has lost all the water inside ( lit. the watery contents of whose interior have been flowed out).

18. But the king prevented the great sage's disciple, who after saying this was about to

---

17. B. C. E. H. He. Châ. Din Va. Su. Dhar. Vijay. and Vija., तत् for तत्.

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥
समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥२० ॥
निर्बन्धसंजातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥
सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

मम् । " तुम्काममनसोरपि " इति मकारलोपः । महर्षेर्वरतन्तोः शिष्यं कौत्सं नृपती रघुर्निषिध्य निवार्य हे विद्वन् ( पण्डित ) त्वया गुरवे प्रदेयं वस्तु किं ।[ किंजातीयं वा हे०–चा०]। किमात्मकं कियत्किंपरिमाणं वा । इत्येवं तं कौत्समन्वयुङ्क्तापृच्छत् । [अनूपसर्गेण सहितो युजिः पृच्छार्थः–हे० चा० ]। "प्रश्नोऽनुयोगः पृच्छा च " इत्यमरः ।

१९. ततः ( तदनतरं ) यथावद्यथार्हम् । अर्हार्थे वतिः । विहिताध्वराय विधिवदनुष्ठितयज्ञाय । सदाचारायेत्यर्थः । स्मयावेशविवर्जिताय ( स्मयस्य गर्वस्य संरंभस्य च आवेशः तेन विवर्जितः तस्मै ) गर्वाभिनिवेशशून्याय । अनुद्धतायेत्यर्थः । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादिनां च गुरवे । [ क्रियाग्रहणमपि कर्तव्यमिति चतुर्थी–हे० ] । नियामकाय । [ तद्धर्मप्रतिष्ठापकत्वात्–हे० चा० ] । " वर्णाः स्युर्ब्राह्मणादयः " इति । "ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री " इति चामरः । सर्वकार्यनिर्वाहकायेत्यर्थः । तस्मै रघवे विचक्षणः । [ कुशलः– हे० ] । विद्वान्वर्णी ब्रह्मचारी । " वर्णिनो ब्रह्मचारिणः " इत्यमरः । " वर्णाद्ब्रह्मचारिणि " इतीनिप्रत्ययः । सः कौत्सः प्रस्तुतं प्रकृतम् (गुरुदक्षिणारूपं ) आचचक्षे ।

२०. समाप्तविद्येन ( समाप्ता परिपूर्णा चतुर्दश विद्या येन तेन तथोक्तेन ) मया महर्षिर्गुरुदक्षिणायै गुरुदक्षिणास्वीकारार्थं विज्ञापितोऽभूत् । स च गुरुश्चिरायास्खलितोपचाराम् । [ पादप्रक्षालनादिरुपचारः परिचर्या यस्यां सा तां तथोक्ता–हे० चा० ] । तां दुष्करां मे भक्तिमेव पुरस्तात्प्रथममगणयत्संख्यातवान् । भक्त्यैव संतुष्टः किं दक्षिणयेत्युक्तवानित्यर्थः । अथ वा भक्तिमेव तां दक्षिणामगणयदिति योज्यम् ।

२१. निर्बन्धेन प्रार्थनातिशयेन संजातरुषा सजातक्रोधेन गुरुणा । अर्थकार्श्यं दारिद्र्यमचिन्तयित्वाविचार्याहम् । वित्तस्य धनस्य चतस्रो दश च कोटीश्चतुर्दशकोटीर्मे मह्यमाहरानयेति विद्यापरिसंख्यया विद्यापरिसंख्यानुसारेणैवोक्तः । अत्र मनुः–" अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराण धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश " इति ।

२२. सोऽहं सपर्याविधिभाजनेनार्घ्यपात्रेण भवन्तं प्रभुशब्द एव शेषो यस्य तं मत्वा । निःस्वं निश्चित्येत्य-

depart (lit. who had the desire to return), and said ' Learned Sir ! what thing do you mean to give to your preceptor and how much of it ?"

19. Whereupon the learned ascetic explained his object to the ruler of ( the several ) castes and states of life, who had performed the sacrifice as enjoined by the rite, and who was free from the influence of pride

20. When I completed my course of study I humbly asked the great sage as to the remuneration to be made to him. But he already considered my zealous and faithful service of long standing as the best possible recompense.

21. Enraged at my importunities the preceptor heedless to the scantiness of my means said, " get me fourteen crores of money in accordance with the number of several lores" ( bring me as many crores of money as there are kinds of learning ).

22. Concluding from the earthen pot containing the materials of worship that Your Highness

20. D. अवाप्तविद्येन for समाप्तविद्येन.
22. H. has प्रभुशक्तिशेषं for प्रभुशब्दशेषं; E. H. °निःक्रयस्य for °निष्क्रयस्य.

**इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।**
**एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥**
**गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।**
**गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥ २४ ॥**
**स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।**
**द्वित्राण्यहान्यर्हसि सोढुमर्हन्यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥**

। श्रुतनिष्क्रयस्य विद्यामूल्यस्याल्पेतरत्वादतिमहत्त्वात्संप्रति (अधुना) उपरोद्धुं निर्बन्धुं नाभ्युत्सहे ।

२३. द्विजराजकान्तिश्चन्द्रकान्तिः। "द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः" इत्यमरः। "तस्मात्सोमो राजा ब्राह्मणानाम्" इति श्रुतेः । द्विजराजकान्तित्वेनार्थावाप्तिवैराग्यं वारयति । एनसः पापान्निवृत्तेन्द्रियवृत्तिर्यस्य सः । [एतेन धार्मिकत्वं–हे० चा० ] । जगदेकनाथो रघुर्वेदविदां वरेण श्रेष्ठेन द्विजेन कौत्सेनेत्थमावेदितो निवेदितः सन् । एनं कौत्सं भूयः पुनर्जगाद [ ऊचे । अनुप्रासोऽलंकारः–हे० चा० ] ।

२४. श्रुतस्य (शास्त्रस्य) पारं दृष्टवाञ्छ्रुतपारदृश्वा। "दृशेः क्वनिप्" इति क्वनिप् । गुर्वर्थं गुरुदक्षिणा यथा तथार्थी याचकः । विशेषणद्वयेनाप्यस्याप्रत्याख्येयत्वमाह । रघोः सकाशात्कामं मनोरथमनवाप्याप्य वदान्यान्तरं। [अन्यो वदान्यो वदान्यान्तरं इति "मयूरव्यंसकादयश्च"। "वदान्यो दानशौण्डे स्यात् चारुवाग्नि वाग्मिवत्" इति मेदिनी–हे० ] । दात्रन्तरं गतः । "स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे" इत्यमरः । इत्येवंरूपोऽयं परीवादस्यापवादस्य नवो नूतनः प्रथमोऽवतारः । [ अवतारावतरयोर्दीर्घह्रस्वव्यत्यासो लिशानामिति वामनः–हे० ] । आविर्भावो मे मा भून्मास्तु । रघोरिति स्वनामग्रहणं संभावितत्वद्योतनार्थम् । तथा च—"संभावितस्य चाकीर्तिर्मरणादतिरिच्यते" इति भावः । [ निःस्वेभ्यो दानं विद्यानुरूपमिति अनूक्त्या अमत्याक्षेपप्रीतिनिन्दाप्रतिषेधाद्रघोरात्मस्तुतिनिर्दोषः । तदाह । "गुरोरर्थमर्थयते" इति-हे०] ।

२५. स त्वं महिते पूजिते प्रशस्ते प्रसिद्धे । [ मनोहरे–चा० ]। मदीयेऽग्न्यागारे त्रेताग्निशालायां चतुर्थोऽग्निरिव वसन्द्वित्राणि द्वे त्रीणि वाहानि दिनानि । "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच्प्रत्ययः समासान्तः । [ तथा च भाष्यकारः । पञ्चाधिष्ठानां (वाक्तत्र) वस्तुतोत्युक्तं बहुवचनमिति–हे० चा० ] । सोढुं अर्हसि । हे अर्हमान्य । [ "अर्हतौ जिनसन्मान्यौ" इति यादवः चा० ] । त्वदर्थं तव प्रयोजनं साधयितुं यावद्यते यतिष्ये । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ।

---

...had only the title of lord remaining to you I do not dare press my sire (any more) at this moment, on account of the heaviness of the price set on my learning

23. Thus informed by the Brahman, foremost among the adepts in the Vedas, the sole lord of the world, fair as the moon and the propensities of whose mind were averse to sin, again spoke to him.

24. Asking wealth for his preceptor, a certain mendicant who had seen the other ends of the Vedas (i. e. who had mastered the Vedas) went to another donor, not obtaining his object of wish from Raghu. Let there not be this new (first) rise of scandal (about me)!

25. Therefore, O revered Sir, it behoves you to sojourn like a fourth Agni in my well-known and honoured temple of fire and wait there for two or three days while I try to accomplish your purpose.

---

24. D. Châ. Din. Su. and Dhar., अनवाप्तकामः for अनवाप्य कामं.

25. B. H. Va. Vijay. and Su., महितः for महिते.

तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्संगरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥
वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ २७ ॥
अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥
प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

२६. अग्रजन्मा ब्राह्मणः ( कौत्सः ) प्रतीतः प्रीतः संस्तस्य रघोरवितथममोघं संगरं प्रतिज्ञाम् । " अथ प्रतिज्ञाजिसंविदापत्सु संगरः " इत्यमरः । तथेति प्रत्यग्रहीत् ( अंगीचक्रे ) । रघुरपि गां भूमिं ( दिग्विजयेन ) आत्तसारां गृहीतधनामवेक्ष्य ( ज्ञात्वा ) कुबेरात् ( धनदात् ) अर्थं निष्क्रष्टुमाहर्तुं चकमे इयेष ।

२७ वशिष्ठस्य यन्मन्त्रेणोक्षणमभिमन्त्र्य प्रोक्षणं तज्जात्प्रभावात्सामर्थ्याद्धेतोः । उदन्वदाकाशमहीधरेषूदन्वत्युदधावाकाशे महीधरेषु वा । मरुत्सखस्य । [ बलाहकेन गत्यर्थं वायोरपेक्षितत्वात् मरुत्सखा यस्येति अभिमतः समासः । एवं सति राजाहःसखिभ्यष्टजिति टच्प्रत्ययो न स्यात् तस्य तत्पुरुषेऽभिधानात् । अतश्चिन्त्यमेतदिति–हे० चा० ]। मरुतः सखेति तत्पुरुषो बहुव्रीहौ समासान्ताभावात् । ततो वायुसहायस्येति लभ्यते । वारीणां वाहको बलाहकः । पृषोदरादित्वात्साधुः । तस्येव मेघस्येव । तद्रथस्य गतिः सचारो न विजघ्ने न विहता हि । [ यथा मेघस्य गतिः क्वापि न हन्यते तथास्य रथस्यापि–सु० ]।

२८. अथ प्रदोषे रजनीमुखे । तत्काले यानाधिरोहणविधानात् । प्रयतो धीरो रघुः । समन्ताद्भवः सामन्तः । [ कतिपयग्रामपतिः–हे० ] । राजमात्रमिति संभावनयैव ( बुद्ध्यैव अनुमत्या वा ) कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् । कल्पितं सज्जितं शस्त्रं गर्भे ( मध्ये ) यस्य तं रथमधिशिश्ये ( अधिष्ठितः ) । रथं शयितवानित्यर्थः । " अधिशीङ्स्थासां कर्म " इति कर्मत्वम् ।

२९. प्रातः प्रयाणाभिमुखाय ( प्रस्थानसन्मुखाय ) तस्मै ( जिगमिषवे ) रघवे कोषगृहे ( भाण्डारागारे ) नियुक्ता अधिकृताः । ( स्थापिताः इत्यर्थः ) । भाण्डागारिकाः सविस्मयाः ( साश्चर्याः ) सन्तः कोषगृहस्य मध्ये नभस्तो नभसः । पञ्चम्यांस्तसिल्प्रत्ययः । पतितां हिरण्मयीं सुवर्णमयीम् । " दाण्डिनायन– " इत्यादिना निपातनात्साधुः । वृष्टिं ( वर्षणं ) शशंसुः कथयामासुः ।

---

26. With the words "so be it" the Brahman being greatly pleased with him accepted his unfailing promise, Raghu too finding the earth stripped of all its treasure determined to extort money from Kubera

27. By virtue of the influence produced by Vasistha's holy sprinkling accompained by the Mantras ( of course at the time of coronation ), the course of his chariot like that of a cloud assisted by the wind was unimpeded whether in the sea or in the sky or over the mountain.

28. And towards nightfall the valiant and devout Raghu who longed to subdue by his valour the Lord of Kailasa regarding him as no more than a mere feudatory of his, laid himself down in his chariot in the interior of which weapons were properly arranged

29. In the morning when he was about to start, his treasury officers struck with wonder

---

26. A. अवितथं प्रतीतः. B. C. E. H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., आवितथां प्रतीतः. D. अवितथप्रयत्नः; B. C. D. E. H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija , तां गिरं for सगरं. So also Malli. observes this 'तां गिरं' इति केचित्पठन्ति. H. has आत्मजन्मा for अग्रजन्मा; E. H. निःक्रष्टुं for निष्क्रष्टुं.

27. E. has बलारुकस्य for बलाहकस्य.

29. B. D. E. He. Chà. Din. Va. Su. Dhar. Vija. and Vijay. कोशगृहे for कोषगृहे; H. ha[illegible] कोषगृहे.

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥
जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥
अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥

३०. भूपती रघुः । अभियास्यमानादभिगमिष्यमाणात्कुबेराल्लब्धम् । वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम् । " पादाः प्रत्यन्तपर्वताः " इत्यमरः । तं भासुरं भास्वरम् । ( देदीप्यमानं इति यावत् ) । " भञ्जभासमिदो घुरच् " इति घुरच् । हेमराशिं ( सुवर्णसमूहं ) समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ । न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ।

३१. तावर्थिदातारौ द्वावपि साकेतनिवासिनोऽयोध्यावासिनः । " साकेतः स्यादयोध्यायां कोशला नन्दिनी च सा " इति यादवः । जनस्याभिनन्द्यसत्त्वौ स्तुत्यव्यवसायावभूताम् । " द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु " इत्यमरः । कौ द्वौ । गुरुप्रदेयादधिकेऽतिरिक्तद्रव्ये निःस्पृहोऽर्थी । अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तथोक्तः । " प्रेदाज्ञः " इति कप्रत्ययः । नृपश्च ।

३२. अथ प्रीतमना महर्षिः कौत्सः संप्रस्थितः प्रस्थास्यमानः सन् । " आशंसायां भूतवच्च " इति भविष्यदर्थे क्तः । उष्ट्राणां क्रमेलकानां वामीनां वडवानां च शतैर्वाहितार्थं प्रापितधनमानतपूर्वकायम् । विनयनम्रमित्यर्थः । प्रजेश्वरं रघुं करेण स्पृशन्वाचमुवाच । [ विशेषणं विना वाकशब्दप्रयोगश्चिन्त्यः । यद्वामनः । विशेषणस्य च विशेष्यप्रतिपत्त्यर्थमुक्तार्थस्य प्रयोगः । यद्वा । काव्येषु सक्षेपानादरः । तथा काव्यादर्शे । " अलंकृतमसंक्षिप्तं काव्यम् " इति वक्ष्यमाणेन संबंधः । काशिकावृत्तौ च । समुच्चयं सामान्यवचनस्येत्यत्र लौकिकशब्दव्यवहारे लाघवं नाद्रियते इति । " येनांगविकारः " इत्यत्र पाणिनीयमतदर्पणे च । " अक्षादिशब्देन विनापि देहः स्यादेव करणादिगुणप्रतीतिः तथापि लोके गुरुलाघव प्रत्यनादराच्छब्दमपि प्रयुंक्ते " इति—हे० । " शुचिस्मितां वाचमवोचदच्युतः " इत्यादौ यथा शुचिस्मितामिति विशेषणं तथात्रवाचो विशेषणायोगाद्वाचमुवाचेति चिन्त्यम्—चा० ] ।

---

reported to him the shower of gold that had fallen from heaven down into the interior of his treasury-house.

30. The heaps of burnished gold, which resembled a skirt-hill of the Sumeru struck down by Indra's thunderbolt, obtained from Kubera who was about to be marched against, the king gave Kautsa one and all

31. Among the people living in Saketa the conduct of both of them produced great admiration; of the mendicant because he was unwilling to take more than was due to his preceptor; of the king because he gave more than the mendicant asked for.

32 Now at his departure the great sage Kautsa, being delighted in mind, took by the hand the king who had bent the forepart of his body and who had made hundreds of camels and mares convey the treasure and said the following words.

---

30. D. कौत्सस्य for कौत्साय.; A. पादं. also observed by He.; B. C. E. H. He. Chà. Vijay. Va. Din. Su. Dhar. and Vija., शृङ्गं, also Malli. " शृङ्गम् " इति क्वचित्पाठः; D. शैलं., So also observed by He.

32. B. C. D. E. H. Chà. Din. Va. Su. Dhar. Vijay. and Vija. मनीषी for महर्षिः ; D. E. H. and Vijay. वाक्यं for वाचं.

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥
आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥
इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ॥ ३५ ॥

३३. वृत्ते स्थितस्य । " न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा । सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् " इति कामन्दकः ।[ यद्वा । " गुरोः पूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः । प्रवर्त्तनं हितानां च तत्सर्वं वृत्तमुच्यते " इति–हे० ] । तस्मिन्वृत्ते स्थितस्य प्रजानामधिपतेर्नृपस्य भूः कामान्सूत इति कामसूर्यदि । " सत्सूद्विषद्रुह–" इत्यादिना क्विप् । अत्र कामप्रसवने किं चित्रम् । न चित्रमित्यर्थः । किंतु तव प्रभावो महिमा । [ " प्रभावो बाहुलकात्" इति क्षीरतरंगिण्यां–हे० ] । त्वचिन्तनीयः । येन त्वया द्यौरपि ( स्वर्गोऽपि ) मनीषितमभिलषितं दुग्धा । दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः । " प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः " इति स्मरणात् ।

३४. सर्वाणि श्रेयांसि शुभान्यधिजग्मुषः प्राप्तवतस्ते तवान्यत्पुत्रातिरिक्तमाशास्यमाशीःसाध्यमाशंसनीयं वा पुनरुक्तभूतम् । [ पुनरुक्तमिव । इवार्थे भूतशब्दः मातृभूतः पितृभूतः इत्यत्र भूतशब्दस्येवापमानार्थत्वमिति कैयटकारेण प्रत्यपादि–चा० ]। सर्वं सिद्धमित्यर्थः । किंत्वीड्यं स्तुत्यं भवन्तं भवतः पितेवात्मगुणानुरूपम् । [ आत्मशब्देन राजा विवक्षितः अन्तरात्मा वा । " श्रुतशौर्योदयोद्यात्मगुणाः " इति । अनुरूपमिति । "अव्ययं विभक्ति" इत्यादिना अव्ययीभावे क्लीबता स्यात् । अथ–"कुगतिप्रादयः" इति।अनुगतःरूपमित्यनुरूपः इति तत्पुरुषे कृतेऽपि परवल्लिंगं "द्वन्द्वतत्पुरुषयोः" इति स एव दोषः इति चेन्न। " द्विगुश्च" "प्राप्तापन्नेचाद्वितीयया "इत्यल "पूर्वगतिसमासेषु निषेधो वक्तव्यः " इति परवल्लिंगता निषेधात् निष्कौशाम्बिरिव पुंल्लिंगता भवति । तथा हि कुमारसंभवे । " आत्मानुरूपा विधिनोपयंम " । अथ वा । " मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं" । "रूपं स्वभावे सौन्दर्ये " इति विश्वः–हे० ]। त्वया तुल्यगुणमित्यर्थः । पुत्रं लभस्व प्राप्नुहि ।

३५. अग्रजन्मा ( अग्रे मुखे जन्म यस्य सः ) ब्राह्मणः । "अग्रजन्मा द्विजे ज्येष्ठभ्रातरि ब्रह्मणि स्मृतः" इति विश्वः । इत्थं ( अमुना प्रकारेण ) राज्ञ आशिषं प्रयुज्य दत्वा गुरोः सकाशं समीपं प्रतीयाय प्राप । राजापि । जीवलोको जीवसमूहः । " जीवः प्राणिनि गीष्पतौ " इति विश्वः । अर्कादालोकं प्रकाशमिव । तस्मादृषेः ।[ आशिषः प्रयोगात् । न तु मुनेः ग्राम्योक्तिप्रसंगात्–हे० केचन तस्माद्द्विजादिति व्याचक्षते तन्न ग्राम्यत्वात्–चा० ]। आशु सुतं लेभे प्राप ।

---

33. It is no wonder if the earth yields all things desired by a king who abides by his duty towards his subjects. Your prowess is on the other hand inconceivable, for it has made even the heavens yield objects of desire !

34. Other blessings than that of issue would be to superfluous to you who enjoy every one of them. May you therefore obtain a son befitting your excellences as your sire obtained in you an adorable son !

35. Having thus pronounced a blessing on the king, the Brahmana ( lit. the first born ) returned to his preceptor. The king too soon after obtained a son from him ( through the potency of his blessing ) as the world of the living receives light from the sun.

---

34. B. C. E. He. Va. Su. Dhar. Vijay. and Vija, इज्यः for ईड्यं.

35. D. and Vija., चैतन्यं for आलोकं., So also Malli. observes this. 'चैतन्यं,' इति पाठे ज्ञानमिति. Vijay. has प्रकामं for आलोकं.

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६ ॥
रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ३७ ॥
उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८ ॥

३६. तस्य रघोर्देवी महिषी । [पट्टराज्ञी प्रभावती–हे०] । ब्राह्मे । "तेस्यदम्" इत्यण् । ब्रह्मदेवताकेऽभिजिन्नामके मुहूर्ते किलेषदसमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम् । "ईषदसमाप्ती–" इत्यादिना कल्पप्प्रत्ययः । कुमारं पुत्रं सुषुवे । "कुमारो बालके स्कंदे" इति विश्वः । अतो ब्राह्ममुहूर्तोत्पन्नत्वात्पिता रघुर्ब्रह्मणो विधेरेव नाम्ना तमात्मजन्मानं पुत्रमजमजनामकं चकार । "अजो हरौ हरे कामे विधौ छागे रघोः सुते" इति विश्वः । [अष्टमो मुहूर्तो ब्राह्मः । ननु । "ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितं" इति । रात्रेः पश्चिमयामे रूढिः । "पूर्वरात्रे महारात्रस्ततश्चापररात्रकः । ब्राह्मोप्येते क्रमाद्यामाः" इति यादवप्रकाशः । तत्र हि ब्रह्मणोदेवस्याध्ययनप्रवृत्तिं निमित्तीकृत्य ब्रह्मशब्दः प्रयुक्तः । नाडिकाद्वयवाचिनो हि मुहूर्तस्य यामवाचकत्वे दोषः । स च मुहूर्तो ब्रह्माधिदेवतावाचकश्च न भवतीति तन्न । ते च मुहूर्ताः ज्योतिषरत्नमालायां । "रुद्राहिमित्रपितरोव सुवारिविश्वे । वेधा विधिः शतमखः पुरुहूतवह्नी । नक्तंचरश्च वरुणार्यमयोनयश्च । प्रोक्तादिने दश च पञ्च तथा मुहूर्ताः" । "निशामुहूर्ता गिरिशाजपादाहिर्बुध्न्यपूषाश्वियमाग्नयश्च । विधातृचन्द्रादितिजीवविष्णुस्तिग्मद्युतित्वाष्ट्रसमीरणाश्च" इति दैवज्ञवल्लभापि । "ब्राह्मो मुहूर्ताभिजिदष्टमी यस्तस्मिन्नपाचं ककुभं विहाय । प्रशस्यते यानमशेषदिक्षु सर्वाणि कार्याणि च यांति सिद्धिं" । यद्यपि दिवा निशि च ब्राह्ममुहूर्तसद्भावः तथाप्यत्र दिवैव प्रासोऽष्टेति मंतव्यं । "नक्तबुधोभौमशशांकमंदागुर्वर्कशुक्रादिनशक्तयः स्युः" इति श्रीपतिपद्धत्युक्तेः । प्रकाशकग्रहसूर्यस्य शुभग्रहगुरुशुक्रयोश्च दिवा बलीयस्त्वात् । बलिषु श्रेष्ठग्रहेषु महाभाग्यता स्यात् । नारदीयसंहितायां च । "मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः । नाशयत्यखिलान् दोषान् पिनाकी त्रिपुर यथा"–हं० उत्तरघटिकाचतुष्टये–चा० पश्चिमरात्रघटिकाद्वये–सु०] ।

३७. ओजस्वि तेजस्वि बलिष्ठं वा । "ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः । ओजो बले च दीप्तौ च" इति विश्वः । रूपं वपुः । "रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादौ आकारश्लोकयोरपि" इति विश्वः । तदेव पैतृकमेव । वीर्यं । शौर्यं (दीपार्थे दाहकशक्तित्वं) । तदेव । नैसर्गिकम् । ["सर्गस्तु सर्जनाध्यायस्वभावोत्साहनिश्चयाः" इति वैजयन्ती हे०] । स्वाभाविकमुन्नतत्वं । (उच्चैस्तरत्व । दीपपक्षे तु गुणैरधिकत्वं) । तदेव । तादृशमेवेत्यर्थः । कुमारो बालकः । प्रवर्तित उत्पादितो दीपः प्रदीपात्स्वोत्पादकदीपादिव । स्वात्स्वकीयात् । "पूर्वादिभ्यो नवभ्यो वा" इति स्माद्भावो वैकल्पिकः । कारणाज्जनकात्र बिभिदे भिन्नो नाभूत् । सर्वात्मना तादृश एवाभूदित्यर्थः ।

३८. गुरुभ्यः । [इति बहूक्त्या नानाविद्यावाप्तिः–हं०] । विधिवद्यथाशास्त्रमुपात्तविद्यं लब्धविद्यम् । यौ-

36. At a time presided over by Brahmâ, his queen (Prabhâvati by name) gave birth to a son who very nearly resembled Kartikeya Hence the father named that son Aja, which is a name of Brahma.

37. The majestic form was the same, the valour was the same, the nobleness of nature was also the same; the son did not differ from his generating cause (his father) as the light does not differ from the lamp from which it springs.

38. Royalty though deeply in love with the prince who had received education in a due course

36. E. has सुखुवे for सुषुवे; B. C. E. He. Chà. Din. Su. Vijay. Dhar. Va. and Vija., अग्रजन्मानं for आत्मजन्मानं.

37. H. and Vijay. have तथैव नैस॰ for तदेव नैस.

38. H. has विशेषरम्यं for विशेषकांतं; A. B. साभिलाषा. C. E H. He. Va. Su. Vijay. Dhar. and Vija., गन्तुकामा, D. Din. and Chá., कामयाना. So also observed by He.

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥
तं श्लाघ्यसंबन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥
तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।
मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥

वनस्य ( तारुण्यस्य ) उद्भेदादाविर्भावाद्धेतोर्विशेषेण कान्तं सौम्यं । ( मनोज्ञं इति यावत् )। तमजं प्रति साभिलाषापि श्रीः । धीरा स्थिरोन्नतचित्ता । " स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति संज्ञितम् " इति भूपालः । कन्या पितुरिव । गुरोरनुज्ञामाचकाङ्क्षेष । यौवराज्यार्होऽभूदित्यर्थः । अनुज्ञाशब्दात्पितृपारतन्त्र्यमुपमासामर्थ्यात्पाणिग्रहणयोग्यता च ध्वन्यते ।

३९. अथ स्वसुर्भगिन्या इन्दुमत्याः स्वयंवरार्थं कुमारस्य । [ शीलवान् गुणसंपन्नो राजपुत्रः कुमारकः–हे० ]। अजस्यानयन उत्सुकेन ( उत्कण्ठितेन ) क्रथकैशिकानां विदर्भदेशानामीश्वरेण स्वामिना भोजेन राज्ञाप्तो हितः । [ स्वकीयः–हे० ]। दूतो रघवे विसृष्टः प्रेषितः । क्रियामात्रयोगेऽपि चतुर्थी ।

४०. असौ रघुस्तं भोजं ( शुद्धवंशोत्पन्नत्वेन ) श्लाघ्यसंबन्धमनूचानत्वादिगुणयोगात्स्पृहणीयसंबन्धं विचिन्त्य विचार्य पुत्रं च दारक्रियायोग्यदशं ( दारक्रियायाः विवाहक्रियायाः योग्या उचिता दशा यस्य तं तथोक्तं)। विवाहयोग्यवयसं विचिन्त्य ससैन्यं ( चमूसहितं ) एनं पुत्रमृद्धां समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रति प्रस्थापयामास । धीयतेऽस्यामिति धानी । " करणाधिकरणयोश्च " इत्यधिकरणे ल्युट्प्रत्ययः । राज्ञां धानीति विग्रहः ।

४१. उपकार्यासु राजयोग्येषु पटभवनादिषु । " सौधोऽस्त्रीराजसदनमुपकार्योपकारिका " इत्यमरवचनव्याख्याने क्षीरस्वामी । उपक्रियत उपकरोति वा पटमण्डपादि राजसदनमिति । रचिता उपचाराः शयनादयः । [ स्रकचंदनादिसामग्री–हे० ] । येषु ते तथोक्ताः । जानपदानां जनपदेभ्य आगतानामुपदाभिरुपायनैः । वन्या वने भवा इतरे येषां ते वन्येतराः । अवन्या इत्यर्थः । " न बहुव्रीहौ " इति सर्वनामसंज्ञानिषेधः । तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव । तस्य मनुजेन्द्रसूनोरजस्य मार्गे निवासा वासनिका उद्यानान्याक्रीडाः । " पुमानाक्रीड उद्यानम् " इत्यमरः । तान्येव विहारा विहारस्थानानि तत्कल्पाः । तत्सदृशा इत्यर्थः । " ईषदसमाप्तौ–" इति कल्पप्प्रत्ययः । बभूवुः ।

from his tutors, and who ( now ) appeared more handsome by reason of his budding youth, did but wait for ( lit. wished for ) her master's consent like a discreet daughter waiting for that of her father.

39. Soon after this Bhoja, the king of the country of the Krathakaisikas, being anxiously desirous of fetching the prince Aja, for the ceremony of self--electing-marriage of his sister Indumati, sent a faithful messenger to Raghu

40. Thinking him to be one with whom an alliance was desirable and considering his son in a proper state of marrying a wife, he sent him with an escort to the flourishing metropolis of the king of the country of the Vidarbhas

41. The prince s halts on the way, during which comforts of all kinds were provided in tents of Royal state and which by the help of the presents made by the villagers appeared the reverse of sylvan, resembled rambles in a pleasure garden.

---

39. D. क्रथकौशिकानां, E. कथकौशिकानां for क्रथकैशिकानां. Vijay. has क्रथकैशकानां.

41. B. C. E. H. Din. He. Vijay. and Chà., वन्येतरा, A. Va. and Su., कीर्णान्तरा, D. Dhar. and Vija. वन्ध्येतरा. So also noticed by He.

स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥
अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥
निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्ध्वरेखाशबलेन शंसन्दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥

४२. विलङ्घिताध्वातिक्रान्तमार्गः सोऽजः सीकरार्द्रैः ( जलकणमिश्रैः ) । शीतलैरित्यर्थः । मरुद्भिर्वातैरानर्तिताः कम्पिता नक्तमालाश्चिरबिल्वाख्यवृक्षभेदाः । " चिरबिल्वो नक्तमालः करजश्च करञ्जके " इत्यमरः । यस्मिंस्तस्मिन् । निवेशार्ह इत्यर्थः । नर्मदाया रोधसि रेवायास्तीरे क्लान्त श्रान्तं । [ इति निवेशहेतुः—ह० ] । रजोभिर्धूसराः केतवो ध्वजा यस्य तत्सैन्यं निवेशयामास [ स्थापयामास । रजोधूसरकेतुना सैन्यबाहुल्यं सूचितं—ह० ] ।

४३. अथोपरिष्टादूर्ध्वम् । " उपर्युपरिष्टात् " इति निपातः । भ्रमद्भिः ( भ्रमणशीलैः ) । मदलोभादिति भावः । भ्रमरैः ( द्विरेफैः ) प्रागुन्मज्जनात्पूर्वं सूचितो ज्ञापितोऽन्तःसलिले प्रवेशो यस्य स तथोक्तः । [ एतेन मदजलाधिक्यमुक्तं—चा० सु० ] । निर्धौतदाने क्षालितमदे अत एवामले गण्डभित्ती यस्य स तथोक्तः । " दानं गजमदे त्यागे " इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । " प्रशंसावचनैश्च " इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ— " मतल्लिकोद्घामिश्राः स्युः प्रकाण्डस्थलभित्तयः " इति । भित्तिः प्रदेशो वा । " भित्तिः कुड्ये प्रदेशे च " इति हैमः । निर्धौतदानेनामला गण्डभित्तिर्यस्येति वा । वन्यो गजः सरित्तो नर्मदायाः सकाशात् । पञ्चम्यास्तसिल्प्रत्ययः । उन्ममज्जोत्थितः ।

४४. कथंभूतो गजः । निःशेषविक्षालितधातुनापि धौतगैरिकादिनापि । नीलाभिरूर्ध्वाभी रेखाभिस्तटाभिघातजनिताभिः शबलेन कर्बुरेण । " चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे " इत्यमरः । अश्मभिः पाषाणैर्विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन । ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः । तस्य तटेषु वप्रक्रियां वप्रक्रीडाम् । उत्खातकेलिमित्यर्थः । " उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते " इति शब्दार्णवः । शंसन्कथयन् । सूचयन्नित्यर्थः । युग्मम् ।

---

42 After having travelled some way he encamped his army which was fatigued and which had its banners soiled with dust, on the banks of the Narmada where the Naktamala trees were made to dance (shaken) by the breezes moist with drops of water

43. Just then emerged from that river a wild elephant whose plunging in ( lit. entrance into) the water had been indicated before by the bees that were hovering over the watery surface and whose ample temples were rendered clean on account of the ichor having been washed off.

44. Indicating his playful butting against the sides of the Rikshavat mountain by means of his two tusks which though completely cleansed of all mineral dust still appeared marked with blue lines on them and which appeared to be worsted by stone

42. E. has °नक्तमालैः for नक्तमाले; D. Su. and Dhar., सैन्यं श्रमोत्फेनवनायुजाश्वं for the last Pâda.

43. B. H. निर्धौतदानामलगण्डभित्तिः, A. Châ. Din. Vijay. & Vija., निर्धूतदानामलगण्डभित्तिः, C. E. He. and Va. निर्धूतदानामलगल्लभित्तिः, D. Su. and Dhar., निर्धूतदानामलगण्डलेखः.

44. D. and Dhar., ऋष्यवतः for ऋक्षवतः E. has °रेषा° for °रेखा°.; E. °विकुंचितेन for °विकुंठितेन.

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
बभौ स भिन्दन्बृंहतस्तरंगान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥
शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥
तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥
सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

४५. संहारविक्षेपयोः संकोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण । " लघु क्षिप्रतरं द्रुतम् " इत्यमरः । हस्तेन शुण्डादण्डेन । " हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि " इति विश्वः । सशब्दं सघोषं बृहतस्तरंगान् ( जलकल्लोलान् ) भिन्दन्विदारयंस्तीराभिमुखः ( तटसन्मुखः ) स गजः । वारी गजबन्धनस्थानम् । " वारी तु गजबन्धनी " इति यादवः । वार्या अर्गलाया विष्कम्भस्य भङ्गे भञ्जने प्रवृत्त इव । [ वारीगजबन्धनस्थानं तस्यां बहिर्गमनरोधार्थं दत्ता अर्गला विष्कम्भः तस्याः भगे त्रोटने प्रवृत्तः इव । यद्वा । वार्येव जलमेवार्गला—हे० ] । बभौ ( रेजे ) ।

४६. शैलोपमः ( गिरितुल्यः ) स गजः शैवलमञ्जरीणां ( जललीनवल्लीनां ) जालानि वृन्दान्युरसा कर्षन्पश्चात्तटमुत्ससर्प । पूर्वं तेन गजेनोत्पीडितो नुन्नो वारिराशिः ( जलसमूहः ) यस्य स सरित्प्रवाहः ( नदीवेगः ) तटमुत्ससर्प ( आजगाम ) ।

४७. तस्यैकनागस्यैकाकिनो गजस्य । [ एकशब्दः संख्यार्थो मुख्यार्थो वा । " एके मुख्यान्यकेवलाः " इति—हे० चा० ] । कपोलभित्त्योर्जलावगाहेन ( नीरमज्जनेन ) क्षणमात्रं ( मुहूर्तं ) शान्ता निवृत्ता मददुर्दि-

45. And splitting with ( loud ) noise the large billow by means of his trunk, expert in drawing-in and protrusion, the elephant that now faced the riverside appeared as though trying to break through some chains that tied him ( Malli. as if breaking the bolts of his stable ).

46. That mountain-like elephant drawing with him by his bosom the clusters of mass reached the bank afterwards, but the current of the river, whose volume of waters was repelled backwards by him, reached the bank first.

47. The splendour of the stream of ichor-juice flowing from the lonely elephant's spacious

---

45. A. B. C. H. He. Va. and Vija., बृहतः, E. and Vijay. वृहतः, D. Chà Din. Su. and Dhar., सहसा. Between 45-46. B. Chà. Din. and Dhar., read स भोगिभोगादिकपीवरेण संवेष्टितार्धप्रसृतेन दीर्घान् । प्रतिक्षिपंस्तीरमुखः सशब्दं हस्तेन वारीपरिघानिर्वीर्मीन् । So also observed by He.

{ संवेष्टितार्धप्रसृतेन / सवेष्टितोर्धप्रहरेण } { प्रतिक्षिपंस्तीरमुखः / चिक्षेप तीराभिमुखः } { ऊर्वीन् / ऊर्मीन् }

46. B. C. E. H. Chà. Din. Vá. Su. Vijay. and Dhar., तरसा for उरसा. Between 46-47. D. H. He. Chà. Va. Su. and Vija., read " कारण्डवोत्सृष्टमृदुप्रवालाः पुलिन्दयोषाम्बुविहारकाञ्चीः । कर्षन्स सेवाललता नदीष्णः प्रौढावलग्नास्तटमुत्ससर्प. " ।

{ °प्रवालाः / °प्रतान्ताः / °प्रतानाः } { सेवाल° / शैवाल° } { प्रौढाव° / मोढाव° / प्रवाह° } { °उत्सृष्ट° / °उपात्त° } { नदीष्णः / नदीष्ठः }

47. B. C. E. He. Va. Chà. Din. Su. Dhar. and Vija., ह्रदाव° for जलाव°.

स छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ ४९ ॥
तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः ।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥
स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।
स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

मभीमंदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे ववृधे । [ दुर्दिनशब्देन दानवर्षणमुच्यते–हे० ] ।

४८. सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारी यस्य तम् । “कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः” इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः ( चमूहस्तिवराः ) । विलङ्घितस्तिरस्कृतः । ( अगणितः इति यावत् ) । आधोरणानां हस्तिपकानां तीव्रो महान्यत्नः ( अङ्कुशताडनरूपः ) यैस्ते तथोक्ताः सन्तः । “ आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ” इत्यमरः विमुखाः पराङ्मुखा बभूवुः ।

४९. स गजः ( हस्ती ) । छिन्नाः बन्धाः ( रज्ज्वादयः ) यैस्ते छिन्नबन्धा द्रुताः पलायिताः । युगं वहन्तीति युग्या वाहाः ( अश्वोऽवृषभा. ) यस्मिन्सः । स चासौ शून्यश्च तम् । भग्ना अक्षा रथावयवविशेषाः ( युगकीलकाः ) । “ अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम् ” इति शाश्वतः । येषां ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तम् । रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः । “विहस्तव्याकुलौसमौ” इत्यमरः । योधाः ( वीराः ) यस्मिंस्त सेनानिवेशं शिबिरं क्षणेन तुमुलं सकुलं चकार ।

५०. नृपतेः ( लक्ष्मीकामस्य ) राज्ञो वन्यः करयवध्यः ( अमारणीयः ) इति श्रुतवाञ्छास्त्राज्ज्ञातवान्कुमारः आपतन्तमभिधावन्तं त गजं निवर्तयिष्यन्न तु प्रहरिष्यन् । अत एव नात्यायतमनतिदीर्घं यथा स्यात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । कृष्टशार्ङ्ग ईषदाकृष्टचापः सन्विशिखेन बाणेन कुम्भे ( गण्डस्थले ) जघान । अत्र चाक्षुषः–“ लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इय हि श्रीर्ये करिणः ” इति । अत एव “ युद्धादन्यत्र ” इति द्योतनार्थमेव वन्यग्रहणं कृतम् ।

५१. स गजो विद्धमात्रः । [ विद्ध एव विद्धमात्रः । सुप्सुपेति समासः–हे० ] । ताडितमात्रः किल ।

temples, that was stopped for a while by his plunging into the water, again began to flow profusely at the sight of other than sylvan elephants.

48 On smelling his unbearable ichor whose flow was as ill-smelling as the milk of the Sapachchhada tree, the large elephants in the army defying the strenuous efforts of their drivers turned away their faces.

49 The animal in a moment threw the whole camp into confusion which became empty of the chariot-horses which broke through their reins and took to flight, in which the chariots were overturned with their navels broken and in which the warriors were unable to protect their wives.

50. The prince who knew ( from the Sastras ) that a king should not kill a sylvan elephant, drawing his bow not very forcibly, shot an arrow at his frontal globe while trying to turn back the animal that was about to make a furious rush.

51 It is reported that the moment the animal had been wounded by the shot of an arrow it gave

---

48. B. C. E. H. He. Châ. Din. Va. Su. Dhar. Vijay. and Vija., विमुखी° for विमुखा°.

49. B. C. E. H. Châ. Din. Su. and Vija., तुमुलं. A. and Dhar., चपलं. D. He. and Va., शिथिलं. E. and Vijay. तुमलं.

50. B. C. E. He. Vijay. and Va., कृष्टचापः for कृष्टशार्ङ्गः.

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ५२ ॥
मतङ्गशापादवलेपमूलादवाप्तवानास्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥
स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥
इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥ ५५ ॥

[ इत्यागमे-हे० ] । न तु प्रहृतस्तथापि नागरूपं गजशरीरमुत्सृज्य ( परित्यज्य ) । तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन् । स्फुरतः ( प्रोल्लसतः ) प्रभामण्डलस्य ( दीप्तिसमूहस्य ) मध्यवर्ति कान्तं मनोहरं व्योमचरं ( नभोविहारि ) वपुः प्रपेदे प्राप ।

५२. अथ प्रभावेनोपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्पन्नैः पुष्पैः कुमारमजमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकान्तिभिः संवर्धिता उरःस्थलं (वक्षस्तटं) ये तारहाराः । ["तारस्तु मुक्ताद्यौतमुक्तेऽतिदीप्तौ तारः" इति विक्रमादित्योक्तिः–चा० ] । स्थूलमुक्ताहारास्ते येन स तथोक्तः । वाचोऽस्य सन्तीति वाग्मी वक्ता । " वाचोग्मिनिः " इति ग्मिनिप्रत्ययः । स पुरुष उवाच ( जगाद ) ।

५३. अवलेपमूलाद्गर्वहेतुकात् । " अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च " इति विश्वः । मतङ्गस्य मुनेः शापान्मतङ्गजत्वम् ( करिभावं ) अवाप्तवानस्मि । मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेर्गन्धर्वराजस्य तनूजं पुत्रम् । " स्त्रियां मूर्तिस्तनुस्तनूः " इत्यमरः । तन्वादेर्वैत्यूर्ङिति केचित् । प्रियंवदं प्रियंवदाख्यमवेहि जानीहि । प्रियं वदतीति प्रियवदः । " प्रियवशे वदः खच् " इति खच्प्रत्ययः । [ पुरा किलेश्वरसंवागमनं खर्वगर्वसंतापितेन जातमन्युना गजो भवेति शप्तः इति वार्ता–चा० सु० ] ।

५४. स महर्षिश्च प्रणतेन ( नम्रीभूतेन ) मयानुनीतः ( स्तुतः ) सन्पश्चान्मृदुतां शान्तिमगच्छत् । तथा हि । जलस्योष्णत्वमग्नेरातपस्य वा सप्रयोगात्संपर्कात् । न तु प्रकृत्योष्णत्वम् । यच्छैत्य सा प्रकृतिः स्वभावः । विधेयप्राधान्यात्सेति स्त्रीलिङ्गनिर्देशः । महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः ।

५५. इक्ष्वाकुवंशः प्रभवः ( उत्पत्तिः ) यस्य सोऽजो यदा ते कुम्भमयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा स्वेन वपुषो महिम्ना (गांधर्वेण प्रभावेण) पुनः संयोक्ष्यसे सगंस्यसे इति स तपोनिधिर्मामवोचत् ( अवादीत् ) ।

---

up the form of an elephant, and assumed a lovely and divine form standing in the midst of flashing circle of light, being looked at by the soldiers who wondered at the curious incident.

52 Then having showered on the prince the flowers of ( lit produced from ) Kalpa-drum ( celestial trees ) which were brought to him by his supernatural power, the eloquent one whose garland of pearls pendant on his bosom was brightened by the light of his teeth, addressed the following words to the prince.

53. " Through the curse of the sage Matanga incurred by my own insolence I was reduced to this state of an elephant. Know me therefore to be Priyamavada, son of Priya-darsana the king of the demi-gods."

54. " But the great sage, being supplicated by me prostrate, gradually got to leniency ( took compassion on me ); because the heat of water is owing to the application of fire or heat what is coolness is but the nature of water."

55. Then that repository of asceticism spoke thus to me, " when Aja sprung from the fami

---

52. E. has वाङ्मी for वाग्मी.; A. D. and Dhar., ° चारुहारः for ° तारहारः.

संमोचितः सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥ ५६ ॥
संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥
अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

५६. चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वयाहं शापात्संमोचितो मोक्षं प्रापितः । भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेन्मे स्वपदोपलब्धिः स्वस्थानप्राप्तिः । " पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमरः । वृथा स्याद्धि । तदुक्तम्– " प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् " इति ।

५७. हे सखे । सखिशब्देन समप्राणतोक्ता । यथोक्तम्–"अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः " इति । प्रयोगसंहारयोर्विभक्तमन्त्र (प्रयोगे प्रेरणे संहारे सक्षेपे च विभक्तौ भिन्नौ मन्त्रौ यस्य तत् तथोक्तं ) गान्धर्वं गंधर्वदेवताकम् । संमोह्यतेऽनेनेति संमोहन [प्रस्वापनं वा–चा०]। नाम ( प्रसिद्धं ) ममास्त्रमादत्स्व गृहाण । [ अस्त्रान्तरेभ्यो गुणमाह–हे० चा० ] । यतोऽस्मात्प्रयोक्तुरस्त्रप्रयोगिणोऽरिहिंसा ( शत्रुमारणं ) न च । [ " न हिंस्यात्सर्वभूतानि " इति श्रुतिदर्शनात्–हे० ] । विजयश्च हस्ते । [इति लोकोक्तिः । यथा किराते । " जटाधरः सन् जुहुधीह पावकं " । मेघदूते च । " शेषान्मासान्गमय चतुरो लोचनं मीलयित्वा "–हे० ] । हस्तगतो विजयो भवतीत्यर्थः । वधलज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत्तत्राह—

५८. किं च । मां प्रति ह्रिया प्रहारनिमित्तयालम् । [ वारणार्थाच्चालं योगे तृतीया एव–हे० सु० ] । कुतः । यद्यतो हेतोस्त्वं मां प्रहरन्नपि ( विध्यन्नपि ) मुहूर्तं ( क्षणमात्रं ) दयापरः कृपालुरभूः । तस्मादुपच्छन्दयति प्रार्थयमाने मयि त्वया । प्रतिषेधः परिहारः । [ गन्धर्वास्त्रं न गृह्णामीति–हे० ] । स एव रौक्ष्यं पारुष्यम् । तन्न प्रयोज्यं न कर्तव्यम् ।

---

of Ikshvaku shall pierce your frontal globe by his iron-pointed arrow, then you shall unite your body with that of your splendour "

56. " I have been relieved from my curse by you of great might, whose sight had long been prayed for by me If I do not confer on you any good in return, the restoration to my present position is all to no purpose".

57 "Therefore my friend, accept this missile of mine by name *Sammohana* which may be discharged and drawn back by different incantations and whose presiding god is a certain Gandharva and by virtue of which victory is within the reach of the shooter without destroying his enemy."

58. "Do not be ashamed, for though striking me for a moment, you have proved very kind to me. Therefore do not use the harshness of a refusal towards me who am beseeching you. "

---

56. D. and Vijay. have यत् for चेत्.

57. D. आधत्स्व, B. प्रतीच्छ for आदत्स्व; D. प्रहर्तुः for प्रयोक्तुः. So also noticed by He.; B. C. and Su. स्वहस्ते for च हस्ते. H. read गान्धर्वमस्त्रं तदितः प्रतीच्छ प्रयोगसंहारविभक्तमंत्रं । प्रस्वापनं नाम यतः प्रहर्तुर्न चारिहिंसा विजयः स्वहस्ते ॥

58. C. D. and Vijay. °रूक्षम् for रौक्ष्यम्.

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥ ५९ ॥
एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥
तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥
प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

५९. ना सोमश्चन्द्र इव नृसोमः । [ आनन्दकारित्वात्–चा० ] । उपमितसमासः । " सोम ओषधिचन्द्रयोः " इति शाश्वतः । पुरुषश्रेष्ठः इत्यर्थः । अस्त्रविदस्त्रज्ञः सोऽजस्तथेति ( अङ्गीकृत्य ) सोम उद्भवो यस्याः सा तस्याः सोमोद्भवायाः सरितो नर्मदायाः । [ नर्मदाशब्देन सुखदातृत्वं व्यज्यते–हे० ] । " रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका " इत्यमरः । पवित्रं पयः ( जलं ) उपस्पृश्य पीत्वा । आचम्येत्यर्थः । उदङ्मुखः [ उत्तरास्यः । " उदङ्मुखस्तु गृह्णीयात् " इति स्मृतेः यद्वा । उदङ्मुखः उपस्पृश्य । " अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजोनित्यमुपस्पृशेत् " इति याज्ञवल्क्यः–हे० ] । सन्निगृहीतशापान्निवर्तितशापात् । उपकृतादित्यर्थः । तस्मात्प्रियंवदादस्त्रमन्त्र जग्राह ।

६०. एवमध्वनि मार्गे दैवयोगाद्दैववशादचिन्त्यहेत्वनिर्धार्यहेतुक सख्यं सखित्वम् । " सख्युर्यः " इति यप्रत्ययः । आसेदुषोः प्राप्तवतोस्तयोर्मध्य एको गन्धर्वश्चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान् । " अस्योद्यानं चैत्ररथम् " इत्यमरः । अपरोऽजः सौराज्येन राजन्वत्तया रम्यान्विदर्भान्विदर्भदेशान्ययौ ।

६१. नगरस्योपकण्ठे समीपे तस्थिवांसं स्थितं तमजं तस्याजस्यागमेनागमनेनारूढ उत्पन्नो गुरुः प्रहर्षः यस्य स क्रथकैशिकेन्द्रो विदर्भराजः । ( इन्दूदयं ) प्रवृद्धोर्मिः ऊर्मिमाली समुद्रश्चन्द्रमिव । प्रत्युज्जगाम । [ " रत्नाकरो जलनिधिरूर्मिमाली महाशयः " इति विन्ध्यवासी–हे० चा० ] ।

६२. एनमजमग्रयायी । सेवाधर्मेण पुरो गच्छन्नित्यर्थः । नीचैर्नम्रः पुरं ( नगरं ) प्रवेश्य प्रवेशं कारयित्वा प्रोत्यार्पितश्रीः ( अर्पिता दत्ता अजाय श्रीः छत्रचामरादिशोभा येन स तथोक्तः ) तथा तेन प्रकारेणोपाच

---

59. 'So be it,' with these words, the moon-like hero who was expert in the use of weapons, sipped the hallowing water of the river sprung from the moon, with his face turned to the north and then accepted the Mantra of the missile from him who was relieved from the curse.

60. Thus of them two contracting accidentally on the way a friendship (originating) from an unknown cause, one went to the regions of Chitraratha and the other to the kingdom of Vidarbha, happy by reason of good government

61. The lord of the Krathakaisikas, transported with great joy at his arrival, went forth to receive him who had encamped in the proximity of the city, like unto the ocean rising with swelling waves to (meet) the moon.

62. And having made him enter the city, he who led the way and by whom the royal insignia was offered to Aja, paid him homage so humbly that the people assembled there thought the king of the Vidarbhas to be the guest and Aja the real lord of the palace.

---

59. B. D. H. Chá. Din. and Dhar., अस्त्रविदः for अस्त्रविद्. Also noticed by He.; D. विगृहीतशासी for निगृहीतशापात्. So also observed by He. Din. and Chá.

60. Vijay. has अचिन्त्यहेतुं for अचिन्त्यहेतु, H. अचिन्त्यहेतुः.

61. Vijay. has क्रथकैशकेन्द्रः for क्रथकैशिकेन्द्रः.

62. B. C. E. H. He. Vijay. and Va., समेतः, A. Dhar. and Vija., समस्त D. Chà. Din. and Su., समग्रः.

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां बाल्यात्परामिव दशां मदनोऽध्युवास ॥६३॥
तत्र स्वयंवरसमाहृतराजलोकं कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥
तं कर्णभूषणनिपीडितपीवरांसं शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः सवयसः प्रथितप्रबोधं प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥

दुपचरितवान् । यथा येन प्रकारेण तत्र पुरे [ स्वयंवरे–हे० ] समेतौ मिलितौ जनौ वैदर्भं भोजमागन्तुं प्राघूर्णिकं ( अतिथिं ) मेने । अजं गृहेशं गृहपतिं मेने । [ " स्युरावेशिक आगन्तुरतिथिर्ना गृहागते " इत्यमरः–हे० चा० ] ।

६३. रघुप्रतिनिधिः रघुकल्पः । रघुतुल्यः इत्यर्थः । उक्तं च दण्डिना सादृश्यवाचकप्रस्तावे— " कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि " इति । सोऽजः प्रणतैर्नमस्कृतवद्भिः । कर्तरि क्तः । तस्य भोजस्याधिकारो नियोगस्तस्य पुरुषैः । अधिकृतैरित्यर्थः । प्रदिष्टां निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः प्रतिष्ठापितः पूर्णकुम्भो यस्यास्ताम् । स्थापितमङ्गलकलशामित्यर्थः । रम्यां रमणीयां नवोपकार्यां नूतनं राजभवनम् । [ पटकुटीं–चा० सु० ] । " उपकार्या राजसद्मन्युपकारोचितेऽन्यवत् " इति विश्वः । मदनः ( स्मरः ) बाल्यात्परां शैशवादनन्तरां दशामिव । यौवनमित्यर्थः । अध्युवासाधिष्ठितवान् तत्रोषितवानित्यर्थः । " उपान्वध्याङ्वसः " इति कर्मत्वम् । [ इतो दशश्लोकाः वसन्ततिलकाछन्दसा । तल्लक्षणञ्च । " उक्ता वसन्ततिलका तभजा जगौ गः "–चा० ] ।

६४. तत्रोपकार्यायाम् । स्वयंवरनिमित्तं समाहृतः संमेलितो राजलोकः ( भूपसमूहः ) येन तत्कमनीयं स्पृहणीयं कन्याललाम कन्यासु श्रेष्ठम् ( कन्यारत्नं ) । " ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे श्रेष्ठभूषाशुण्डशृङ्गपुच्छचिह्नाश्वलिङ्गिषु " इति यादवः । लिप्सोर्लब्धुमिच्छोः । लभेः सन्नन्तादुप्रत्ययः । अजस्य भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषाममर्था दयितेव । [ अन्यत्रानुसक्तोऽयमिति अभिप्रायवेदनेन कलुषा अप्रसन्ना दयितेव–हे० चा० ] । रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव [ नेत्रसन्मुख्यभूत् । बहुषु स्थितेषु मां वृणीत न वेत्याकुलत्वाच्चिरेण निद्रामगमदित्यर्थः हे० ] । " राजानं कामिनं चौरं प्रविशन्ति प्रजागराः " इति भावः । [ केचित्तु निद्राकथनं शृंगारपोषकं न भवतीत्याहुः–चा० ] । अभिमुखीशब्दो डीषन्तश्छयन्तो वा ।

६५. कर्णभूषणाभ्यां ( कुण्डलाभ्यां ) निपीडितौ पीवरौ पीनावंसौ यस्य तम् । शय्याया उत्तरच्छदस्यो-

63. He, the representative of Raghu, occupied the beautiful new palace in the porch of the front door of which were placed pitchers full of water and into which he was shown by the officers ( of Bhoja ) who were attentive to give proper salutes, as Madana occupies the state next to boy-hood.

64. There in palace like a loved-companion unble to know the feelings ( of her husband ) sleep came late at night before the eyes of Aja, who ardently longed for the loveliest of charming maidens, whose self-electing marriage had invited there an assemblage of princes.

65. At dawn the sons of bards of agreeable speech and of age egual with him (Aja) awok

63. B. C. E.·H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., अधिकारि ° for अधिकार °; B. C. E. H. He. Chà. Din. Va. Su. Dhar. Vijay and Vija., ° हेमकुंभां for °पूर्णकुंभां.

65. B. C. E. H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija वैतालिकाः for सूतात्मजाः. So also observed by Malli :—' वैतालिकाः ' इति वा पाठः " वैतालिका बोधकराः " इत्यमरः ; D. प्रतिबोधहेतोः for प्रथितप्रबोधं also noticed by He D. वैतालिकाः स्फुटपदप्रकटार्थबन्धं, E. H. and Vijay. वैतालिका ललितबन्धमनोहराभिः fo सूतात्मजाः सवयसः प्रथितप्रबोधं. So also observed by He.

**रात्रिर्गता मतिमतां वर मुञ्च शय्यां धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।**
**तामेकतस्तव बिभर्ति गुरुर्विनिद्रस्तस्या भवानपरधुर्यपदावलम्बी ॥ ६६ ॥**
**निद्रावशेन भवताप्यनवेक्षमाणा पर्युत्सुकत्वमबला निशि खण्डितेव ।**
**लक्ष्मीर्विनोदयति येन दिगन्तलम्बी सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥**

पर्यास्तरणवस्त्रस्य विमर्देन घर्षणेन कृशो विमलोऽङ्गरागो यस्य तम् । नत्वङ्गनासङ्गादिति भावः । [ अनेनास्य ब्रह्मचर्यं द्योत्यते–हे० चा० ] । प्रथितप्रबोधं प्रकृष्टज्ञानं तमेनमज सवयसः समानवयस्का उदारवाचः प्रगल्भगिरः सूतात्मजा बन्दिपुत्रा वाग्भिः ( ललितबन्धैः ) स्तुतिपाठैरुषसि प्राबोधयन्प्रबोधयामासुः । [ मधुरगानेन हि प्रभूणां बोधः क्रियते । तथाहि भोजः । "मृदुभिर्मर्दनैः पादे शीतैर्व्यजनकैस्तथा । श्रुतौ वा मधुरैर्गानैर्निद्रातो बोधयेत्प्रभुं "–हे० ] ।

६६ हे मतिमतां वर ( विदुषां अग्रणीः ) । निर्धारणे षष्ठी । रात्रिर्गता ( निशातिक्रान्ता ) । शय्यां ( पर्यंकं ) मुञ्च ( जहिहि ) । विनिद्रो भवेत्यर्थः । विनिद्रत्वे फलमाह—धात्रेति । धात्रा ब्रह्मणा जगतो धूर्भारः । " धूः स्याद्यानमुखे भारे " इति यादवः । द्विधैव । द्वयोरेवेत्यर्थः । एवकारस्तृतीयनिषेधार्थः । विभक्ता ननु विभज्य स्थापिता खलु । तत्किमत आह–तां धुरमेकत एककोटौ तव गुरुः पिता विनिद्रः ( वितन्द्रः अर्थान्निरालस्यः ) सन्बिभर्ति । तस्या धुरः [ युवराजत्वात्–हे० ] भवान् । धुरं वहतीति धुर्यो भारवाही । तस्य पदं वहनस्थानम् । अपरं यद्धुर्यपदं तदवलम्बी । ततो विनिद्रो भवेत्यर्थः । नह्युभयवाह्यमेको वहतीति भावः ।

६७. चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते । निद्रावशेन निद्राधीनेन । अयन्तरासङ्गोऽत्र ध्वन्यते । भवता पर्युत्सुकत्वमपि । त्वय्यनुरक्तत्वमपीत्यर्थः । " प्रसितोत्सुकाभ्यां

him, who was of celebrated talents whose ample shoulders were pressed against his ear-rings and the scented unguent on whose body was almost removed on account of his rolling on the surface-sheets of his bed.

66. The night has passed away, O you the best of the talented, leave your couch, the burden of the world has been divided only in two parts by the creator which on the one hand your royal father, being ever wide awake, bears patiently, and you on the other hand are in the place of its other bearer.

67. The moon, too, verging at the extremity of the western quarter is giving up the splendour of your face, with whom Lakshmi, though regardless as she is towards you who are overtaken by fast sleep, beguiles her anxiety at night like as a female displeased ( with her husband ).

66. B. C. E. H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., यां for तां ; D. Din. and Chà. वितन्द्रः for विनिद्रः.

67. A. अप्यनपेक्षमाणा. D. अप्यनवेक्षमाणा. D2. He. Chà. Din. Va. and Vija., अप्यनवेक्ष्यमाणा. A2. and Dhar., ह्यनपेक्ष्यमाणा. E. and Vijay. ह्यनवेक्षमाणा, B. C. H. and Su, ह्यनवेक्ष्यमाणा., So also noticed by He. and commented on by Malli., who explains. "ह्यनवेक्ष्यमाणा " इति पाठे निद्रावशेन भवता ह्यनवेक्ष्यमाणा निरीक्ष्यमाणा । कर्मणि शानच् । लक्ष्मीः । प्रयोजककर्त्री । येन । प्रयोज्येन । चन्द्रेण पर्युत्सुकत्वं त्वद्विरहवेदनां । " कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत् " इत्यलंकारे । विनोदयति निरासयतीति योजना । शेषं पूर्ववत् । नाथस्त्वयोपपत्तिमपश्यन्निमं पक्षमुपैक्षिष्ट । Between 67-68. D. and Su. read " निद्रावशं त्वयि गते शशिना कथंचिदात्मानमाननरुचा भवतो वियुज्य । लक्ष्मीर्विभातसमयेऽपि हि दर्शनेन पर्युत्सुका प्रणयिनी निशि खण्डितेव " ।

{ °रुचा / °रुचिः } { वियुज्य / विनोद्य } { °पिहि° / °प्रिय° } { प्रणयिनि / प्रणयिनी }

वल्गुना युगपदुन्मिषितेन तावत्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥
वृन्ताच्छ्लथं हरति पुष्पमनोकहानां संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

...तीया च " इति सप्तम्यर्थे तृतीया । अपिशब्दस्तद्विषयानुरागस्यानपेक्ष्यत्वद्योतनार्थः । [ अपिशब्दः लक्ष्मी...ख्यं सूचयति–हे०] । निशि खण्डिता भर्तुरन्यासङ्गज्ञानकलुषिताबलेव नायिकेव । "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्या कषायिता " इति दशरूपके । [ अन्यच्च । " निद्राकषायमुकुलीकृतताम्रनेत्रा नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः "–हे० "प्रयोगादुचिते यस्या वासकं नागतः प्रियः । तदनागमनार्त्ता तु खण्डितेत्यभिसंज्ञिता "–चा० ] । अनवेक्षमाणाविचारयन्ती सती । उपेक्षमाणेत्यर्थः । लक्ष्मीर्येन चन्द्रेण सह । त्वदाननसदृशत्वादिति भावः । विनोदयति विनोदं करोति । विनोदशब्दात् " तत्करोति तदाचष्टे " इति णिच्प्रत्ययः । सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानीति भावः । स चन्द्रोऽपि दिगन्तलम्बी पश्चिमाशां गतः सन् । अस्तं गच्छन्नित्यर्थः । अत एव त्वदाननरुचिं विजहाति । त्वन्मुखसादृश्यं त्यजतीत्यर्थः । अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणा परिगृहाणेति भावः ।

६८. तत्तस्माल्लक्ष्मीपरिग्रहणाद्वल्गुना मनोज्ञेन । " वल्गुश्छागे मनोज्ञेऽपि वल्गु भाषितमन्यवत् " इति विश्वः । युगपत्तावत् । [" यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे "इत्यमरः–हे०] । उन्मिषितेन युगपदेवोन्मीलितेन ( समकालमेव विकसितेन ) सद्यो द्वे अपि परस्परतुलामन्योन्यसादृश्यमधिरोहतां प्राप्नुताम् । प्रार्थनायां लोट् । के द्वे । अन्तः ( मध्ये ) प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्यतत्तथोक्तं । "तारकाक्ष्णः कनीनिका" इत्यमरः । तव चक्षुः ( नेत्रं ) । अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च । युगपदुन्मेषे सति संपूर्णसादृश्यलाभ इति भावः ।

६९. विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यम् । तादृक्सौगन्ध्यमित्यर्थः । परगुणेनान्यदीयगुणेन । साक्रामिकगन्धेनेत्यर्थः । ईप्सुराप्तुमिच्छुरिव । " आप्ज्ञप्यृधामीत् " इतीकारादेशः । अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात्प्रसवबन्धनात् । " वृन्तं प्रसवबन्धनम् " इत्यमरः । हरत्यादत्ते । अरुणांशुभिन्नैस्तरणिकिरणोद्घाटितैः । ( विकसितैः इति यावत् ) । सरसि जातैः सरसिजैः कमलैः सह । "तत्पुरुषे कृति बहुलम् " इति सप्तम्या अलुक् । संसृज्यते सङ्गच्छते । सृजं दैवादिकात्कर्तरि लट् ।

---

68 Let therefore the two obtain at once mutual similitude by their sweet simultaneous opening —the two, namely, your eye with the lovely pupil rolling within, and the lotus with a black bee moving inside

69 The morning breeze wishing to secure as it were, through another's property the sweet smell that is natural to the breath of your mouth, takes away from the foot-stalk the loose flowers of the trees, and unites itself with the lotuses full blown by the rays of Aruna.

---

69. B. C. E. H. He. Va. Vijay. and Su. वृन्तश्लथं for वृन्ताच्छ्लथं.; D. E. Su Vijay. and Vija., अनोकुहानां for अनोकहानां; D. Din. and Chā. संयुज्यते for संसृज्यते E. अरुणांकभिन्नैः for अरुणांशुभिन्नैः. E. शुभातवायुः for विभातवायुः. Between 69-70 D and Su. read "मन्दं निवाति हिम सभृतशीतभावः । संसृज्यते सरसिजैररुणांशुभिन्नैः । सौरभ्यमीप्सुरिव ते मुखमारुतस्य । यन्नो गुणान्प्रति निशापरिणामवायुः " ।

ताम्रोदरेषु पतितं तरुपल्लवेषु निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥
यावत्प्रतापनिधिराक्रमते न भानुरह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥
शय्यां जहत्युभयपक्षविनीतनिद्राः स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगाद्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

७०. ( भोः कुमार ) । ताम्रोदरेष्वरुणाभ्यन्तरेषु । ( रक्तगर्भेषु इति यावत् ) । तरुपल्लवेषु ( द्रुमकिसलयेषु ) पतितं निर्धौता ( स्वच्छा ) या हारगुलिका मुक्तामणयस्तद्वद्विशदं ( निर्मलं ) हिमाम्भः ( तुषारोदकं । कर्तृ ) लब्धपरभागतया लब्धोत्कर्षतया । " परभागो गुणोत्कर्षे " इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितं ( क्रीडाहास्यं ) इवाभाति शोभते ।

७१. प्रतापनिधिस्तेजोनिधिर्भानुः ( अर्कः ) यावन्नाक्रमते नोद्गच्छति । " आ ङ उद्गमने " इत्यात्मनेपदम् । तावत् । भानावनुदित एवेत्यर्थः । अह्नाय झटिति । " द्राग्झटित्यञ्जसाह्नाय " इत्यमरः । अरुणेनानूरुणा । " सूर्यसूतोऽरुणोऽनूरुः " इत्यमरः । तमो निरस्तम् । तथा हि । हे वीर त्वय्यायोधनेषु युद्धेषु । " युद्धमायोधनं जन्यम् " इत्यमरः । अग्रसरतां पुरःसरतां याते सति । [ त्वयि संग्रामाग्रणीत्वं प्राप्ते सति–हे० ]। तव गुरुः पिता रिपून्स्वयमुच्छिनत्ति किं वा। नोच्छिनत्त्येवेत्यर्थः । न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेद इति भावः । [ " पुरोऽग्रतोऽग्रेषु सर्तेः " इति सूत्रे न्यासकृत् । अग्रेसरः इत्येतद्रूपं सप्तम्या अलुकापि सिध्यत्येव । अग्रं सरतीत्यत्र सप्तम्यन्तं उपपदं अग्रसर इत्येतद्रूपं यथा स्यादित्येवमर्थं । अग्रशब्दस्य एकारान्तत्वनिपातनमिति विज्ञेयं । अतः अग्रसरता इति प्रयोगश्चित्यः । तथा पुरोऽग्रेऽग्रेसरः पृष्ठाग्रतः । पुरःपुरःसरः।यथात्रैव षष्ठे सर्गे "अग्रेसरैर्वाजिभिरुद्धृतानि"। भर्तृहरिश्च। किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी " इति । अथवा अग्रेसरन्तः गच्छन्तः अग्रसरन्तः । तेषां सुभटानां मध्ये वीर इति वा । तदा त्वयि रिपून् याते इति । सरतीति सरः। " पचाद्यच् " इति विशेषणसमासे साधुत्वमिति वा । " यङोचि च " इति सूत्रे सर्वधातवः पचाद्यन्ताः पातिनः इति न्यासकृत् । तथात्रैव नवमे सर्गे " सवरुणावरुणाग्रसरं रुचा " । " हरिहयाग्रसरेण धनुर्भृता " " यूथं तदग्रसरगर्वितकृष्णसारं " इति–हे० चा० ] ।

७२. उभाभ्यां पक्षाभ्यां ( वामदक्षिणाभ्यां ) पार्श्वाभ्यां विनीतापगता निद्रा येषां ते उभयपक्ष विनीत-

70. The dew-drops that are fallen on the sprouts of trees, whose interior is red, white as the polished pearls of a garland, look like your playful smile, brightened by the splendour of your teeth, ( shines ) brightened in its beauty on account of its falling on your lower lip.

71. Scarcely had the sun, the receptacle of intense heat, not yet risen when Aruna at once dispelled all darkness. When you yourself have assumed, O hero, the title of being the leader in battles will your sire *himself* now extirpate the enemies?

72. Your elephants that have overcome sleep by turning from side to side and are now dragging their clanging chains, are leaving their beds,—the elephants whose budlike tusks look as if they had broken asunder the red mineral-sides of a mountain, on account of their having come in contact with the red-coloured light of the young sun.

70. B. C. H. He. Cha. Din. Va. Su. Dhar. Vijay. and Vija., द्रुम° for तरु° E. has नवपल्लवेषु. D. Vijay. and Su., निर्धूतहारगुटिका° for निर्धौतहारगुलिका. Vijay. has निर्धूतहारगुलिका. E. has त्वदीयः for त्वदीयं.

71. Vijay. has आयोधिना° for आयोधना°.

72. D. and Su., सेनागजाः for स्तम्बेरमाः; D. and Dhar., तरुणारुणकान्तियोगात् for तरुणारुणरागयोगात्.

दीर्घेष्वमी नियमिताः पटमण्डपेषु निद्रां विहाय वनजाक्ष वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥७३॥
भवति विरलभक्तिर्म्लानपुष्पोपहारः स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्तामनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥७४॥

...ाः । अत्र समासविषय उभशब्दस्थान उभयशब्दप्रयोग एव साधुरित्यनुसधेयं । यथाह कैयटः—" उभादुदात्तो नित्यं" इति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषय उभशब्दस्य प्रयोगो मा भूत् । उभयशब्दस्यैव यथा स्यात् । उभयपुत्र इत्यादि भवति " इति । [ कैयटविवरणे च । " उभादुदात्तो नित्यमित्यत्रा-...रितत्वाद्वित्येतन्नानुवर्तते । न तन्निवृत्त्यर्थं नित्यग्रहणं " इति भावः—हे ]। मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्ते तव स्तम्बे रमन्त इति स्तम्बेरमा हस्तिनः । " स्तम्बकर्णयो रमिजपोः " इत्यच्प्रत्ययः । " हस्तिसूचकयोः " इति वक्तव्यात् । " इभः स्तम्बेरमः पद्मी " इत्यमरः । " तत्पुरुषे कृति बहुलम् " इति सप्तम्या अलुक् । शय्यां जहति त्यजन्ति । येषां स्तम्बेरमाणाम् । दन्ताः कोशा इव दन्तकोशाः । ( " कोशस्तु कुड्मलं पात्रं दिव्ये खड्गपिधानके " इति विश्वः )। दन्तकुड्मलास्तरुणारुणरागयोगाद्बालार्कारुणसंपर्काद्धेतोर्भिन्नाद्गैरिकतटा इव विभान्ति । धातुरक्ता इव भान्तीत्यर्थः ।

७३. हे वनजाक्ष नीरजाक्ष । " वनं नीरं वनं सत्त्वम " इति शाश्वतः । दीर्घेषु पटमण्डपेषु ( वस्त्रगृहेषु ) नियमिता बद्धा वनायुदेश्या वनायुदेशे भवाः । " पारसीका वनायुजाः " इतिहलायुधः । [ " वनायुजाः पारसीकाः काम्बोजा बाह्लिकादयः " इति विश्वः —हे० ] । अमी वाहा अश्वा निद्रां विहाय पुरोगतानि ( अग्रे क्षिप्तानि ) लेह्यान्यास्वाद्यानि सैन्धवशिलाशकलानि [ खंडानि । श्लेष्मनिवारणार्थं आस्वाद्यानि—व० ] । " सैन्धवो ऽस्त्री सितशिवं माणिमन्थं च सिन्धुजे " इत्यमरः । वक्त्रोष्मणा ( मुखबाष्पेण ) मलिनयन्ति मलिनानि कुर्वन्ति । उक्तं च [ शालिहोत्रेण—हे० ] सिद्धयोगसंग्रहे —" पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम् " इत्यादि ।

७४. ( मुखबाष्पेण ) म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिर्विरलरचनो भवति । ( " भक्तिर्भागे निषेवणे " इति वैजयन्ती )। प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्य ( " परिवेषस्तु परिधिरुपसूर्यकमण्डले " इत्यमरः )। उद्भेदेन स्फुरणेन शून्या भवन्ति । निस्तेजस्का भवन्तीत्यर्थः । अपि चायं मञ्जुवाङ्मधुरवचनः पञ्जरस्थस्ते तव शुकस्त्वत्प्रबोधनिमित्ते प्रयुक्तामुच्चारितां नोऽस्माकं गिरं वाणीमनुवदति । अनुकृत्य वदतीत्यर्थः । इत्य प्रभातलिङ्गानि वर्तन्ते । अतः प्रबोद्धव्यमिति भावः ।

---

73. These chariot-horses of the country of the Vanayus which are tied in the stables made of the extensive tents, have given up their sleep, and are soiling, O lotus-eyed one, by the warmth of their mouths ( by their warm breath ) the pieces of rock-salt, put before them to lick.

74. This present of flowers has faded away and consequently has become loose in its texture; the lamps have become dim on account of the throbbing of the circle of their flame, and this your parrot too, charming in voice and confined in its cage, imitates our speech that is employed to awake you.

---

73. B. C. E. He. Chà. Din. Va. Vijay. and Vija. वनजाक्ष वनायुदेश्याः. A. Su. वनजाक्ष वनायुजास्ते also observed by Vija, D. H. and Dhar., वनजाक्ष बाह्लिदेश्याः.

74. H. has °पुष्पोपहारैः for °पुष्पोपहारः, E. has सकिरण° for स्वकिरण°.

इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः सपदि विगतनिद्रस्तल्पमुज्झांचकार ।
मदपटुनिनदद्भिर्बोधितो राजहंसैः सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥
अथ विधिमवसाय्य शास्त्रदृष्टं दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेषः क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

## षष्ठः सर्गः

स तत्र मञ्चेषु मनोज्ञवेषान्सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥ १ ॥

७५. इतीत्थं विरचितवाग्भिर्बन्दिपुत्रैर्वैतालिकैः । पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् । सपदि (शीघ्रं) विगतनिद्रः कुमारः । तल्पं शय्याम् । "तल्पं शय्याट्टदारेषु" इत्यमरः । उज्झांचकार विससर्ज । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । कथमिव । मदेन पटु मधुरं निनदद्भी राजहंसैर्बोधितः (जागरितः) सुप्रतीकाख्यः । सुरगज ईशानदिग्गजः । गङ्गाया इदं गाङ्गम् । सैकतं पुलिनमिव । "तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्" इत्यमरः । "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्राशयः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसंभवादित्यनुसंधेयम् ।

७६. अथोत्थानानन्तरमञ्चितानि । [ अनेन सुलक्षणत्वोक्तिः । उक्तंच । " मुखमर्धं शरीरस्य सर्वं वा मुखमुच्यते । तत्रापि नासिका श्रेष्ठा नासिकायाश्च लोचने " –चा० ] । चारूण्यक्षिपक्ष्माणि । ( " पक्ष्म सूत्रादिसूक्ष्मांशे किंजल्के नेत्रलोमनि " इति विश्वः ) । यस्य सोऽजः शास्त्रे दृष्टमवगतं दिवसमुखोचितं प्रातःकालोचितं विधिमनुष्ठानमवसाय्य समाप्य । स्यतेर्ण्यन्ताल्ल्यप् । कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः सन्स्वयंवरस्थं क्षितिपसमाजं राजसमूहमगादगमत् । " इणो गा लुङि " इति गादेशः । पुष्पिताग्रावृत्तमेतत् । तल्लक्षणम्– "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा "इति ।

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकवि श्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ।

१. सोऽजस्तत्र स्थाने । [ समाजे –हे०चा० ] । उपचारवत्सु । [ वितानादिषु–हे० ] । राजोपकरणवत्सु । [ चित्रादिरुपचारो विद्यते येषु तेषु तथोक्तेषु–सु० ] । मञ्चेषु पर्यङ्केषु । [ सिंहासनस्योपरि सिंहासनं मञ्चकं क-

75. The prince, whose effects of drowsiness were thus removed by the songs of bards who spoke in well-measured language, instantly left the couch, as Supratika, the elephant of the gods, leaves the sandy banks of the Gangâ ( when ) awakened by the swans warbling sweetly with delight.

76. Then finishing the rites, as stated in sacred works and proper at day-break, Aja with his beautiful eye-lashes, put on an agreeable attire with the help of his skilful attendants, and went to the assembly of the princes, seated in the hall of the self-electing marriage.

1. The prince Aja saw there the rulers of the human world of agreeable attire, seated on

---

75. C. H. Su. Vijay. and Vija., विगतनिद्रः. A. E. He. & Va., विहितनिद्रः, B. and Dhar., गलितनिद्रः. D. Din. and Châ. विहृतनिद्रः, D2. विहतनिद्रः Between 75-76 D2. Din. and Châ., read " इति स विगतनिद्रस्तल्पमल्पेतरांशः सुरगज इव गङ्गासैकतं सुप्रतीकः । परिजनवनितानां पादयोर्व्यापृतानां वलयमणिविदिष्टं प्रच्छदान्तं मुमोच.

76. B. C. E. H. Vijay. and Dhar., ° अनुरूपवेषः for ° अनुकूलवेषः ; D. अञ्जित° for अञ्चित°. So also observed by He.

1. E. मनोज्ञवेशान् for मनोज्ञवेषान्.

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥
वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥
परार्घ्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कंचिद्देवं भजामहे ॥

कल्पते–सु० ] । सिंहासनस्थान् मनोज्ञवेषाम्मनोहरनेपथ्यान्वैमानिकानां विमानैश्चरताम् । "चरति" इति ठक्प्रत्ययः । मरुताममराणाम् । "मरुतौ पवनामरौ" इत्यमरः । आकृष्टलीलाम्गृहीतसौभाग्यान् । आकृष्टमरुल्लीलानित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । नरलोकं पालयन्तीति नरलोकपालाः । कर्मण्यण्प्रत्ययः । तान्भूपालानपश्यत् । सर्गेऽस्मिन्नुपजातिश्छन्दः ।

२. "रतिः स्मरप्रियायां च रागे च रमणेरतिः" इति विश्वः । रतेः कामप्रियाया गृहीतानुनयेन स्वीकृतप्रार्थनेन । गृहीतरत्यनुनयेनेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । ईश्वरेण हरेण । [ ईश्वरपदेन दानसामर्थ्यं सूचितं –हे० ] । प्रत्यर्पितस्वाङ्गं (प्रत्यर्पितं पुनर्दत्तं स्वाङ्गं मन्मथशरीरं यस्मै स तं तथोक्तं) काममिव स्थितं काकुत्स्थमजमालोकयतां (पश्यतां) नृपाणां (राज्ञां) मनः (चित्तं) इन्दुमतीनिराशं वैदर्भीनिःस्पृहं बभूव । इन्दुमती सत्पतिमेन विहाय नास्मान्वरिष्यतीति निश्चिक्युरित्यर्थः । सर्वातिशयसौन्दर्यमस्येति भावः ।

३. असौ कुमारो वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्यङ्कं क्लृप्तेन सुविहितेन सोपानपथेन । मृगराजशावः सिंहपोतः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । [ कुमार इत्युक्त्वात् शावः इति पदं –हे० ] । शिलानां विभङ्गैः भङ्गीभिस्तुङ्गमुन्नतं नगोत्सङ्गं शैलाग्रमिव (अद्रिक्रोडमिव) । आरुरोह

४. परार्घ्याः श्रेष्ठा वर्णा नीलपीतादयो यस्य तेनास्तरणेन कम्बलादिनोपपन्नं सङ्गतं रत्नवद्रत्नखचितमासनं सिंहासनमासेदिवानधिष्ठितवान्सोऽजः । मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह । "सेनानीरग्नि-

---

thrones over decorated dais, and exhibited the charms of the gods who wandered about in balloons.

2. The minds of the princes looking at Kâkutstha who resembled the god of love himself, his body restored to him by Siva, who had, as it were, accepted the importunities of Rati, became hopeless of ( obtaining ) the princess Indumati.

3. That youthful prince mounted by means of a well-constructed stair to the dais pointed out to him by the King of the Vidarbhas ; as a young cub of the lord of beasts ( lion ) mounts upon a lofty peak of a mountain by passing through the fractures of the rock.

4. Seated on the throne of jewels furnished with costly carpets of excellent colours, he looked mostly comparable in beauty with Guha riding on the peacock's back.

---

Between 1-2. D. Châ. Su. have the following :—" स तत्रमञ्चेषु विमानकल्पेष्वाकल्पसंमूर्च्छितरूपशोभान् । सिंहासनस्थान्नृपतीनपश्यत् यूपान् प्रशस्तानिव हैमवेदी" । for स तत्र &c. H. besides स तत्र &c. has the above.

(अपश्यत्—ददर्श; हैमवेदी—हैमवेदीन् )

3. B. C. E. H. Châ. Din. Va. Dhar. and Vija., अथो for असौ

तासु श्रिया राजपरंपरासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥
तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥
नेत्रव्रजाः पौरजनस्य तस्मिन्विहाय सर्वान्नृपतीन्निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥

भर्तृहः" इत्यमरः । भूयिष्ठमत्यर्थमुपमेयकान्तिः ( उपमातुं योग्या कान्तिः वपुषः शोभा यस्य स तादृशः ) आसीत् । मयूरस्य विचित्ररूपत्वात्तत्साम्यं रत्नासनस्य । तद्वारा च तदारूढयोरपीति भावः ।

५. तासु राजपरंपरासु ( नृपश्रेणिषु ) श्रिया लक्ष्म्या । कर्त्र्या । पयोमुचां मेघानां पङ्क्तिषु विद्युतेव सहस्रधा ( सहस्रेण प्रकारेण ) विभक्तः । [ "वाताय कपिला विद्युदातपायातिलोहिनी । पीता शस्याय विज्ञेया दुर्भिक्षाय सिता भवेत्" –हे० ] । तरंगेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः । प्रभाविशेषस्य । [ प्रतापोद्गमस्य विद्युत्पक्षे वर्णभेदस्य–हे० ] । उदयेनाविर्भावेन दुर्निरीक्ष्यो दुर्दर्शन आत्मा श्रियः स्वरूपं । [ विद्युत्पक्षे विद्युत्स्वरूपं–चा० ] । व्यरुचद्व्यद्योतिष्ट । "द्युद्भ्यो लुङि" इति परस्मैपदम् । द्युतादित्वादङ्प्रत्ययः । तस्मिन्समये प्रत्येकं संक्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः । [ मेघोपमा राज्ञां मालिन्यार्थ–हे० ] ।

६. महार्हासनसंस्थितानां ( महानर्हो मौल्यं येषां तेषु सिंहासनेषु संस्थितानां ) श्रेष्ठसिंहासनस्थानाम् । उदारनेपथ्यभृतां ( उदाराणि च तानि नेपथ्यानि वेषविशेषाणि तानि बिभ्रतीति उदारनेपथ्यभृतस्तेषां तथोक्तानां ) उज्ज्वलवेषधारिणां तेषां । राज्ञां मध्ये । कल्पद्रुमाणां । [ कल्पयति मनोरथमिति कल्पः स चासौ द्रुमश्च । पञ्चानां मध्ये एकस्य कल्पद्रुमस्य शब्दवाच्यत्वं यद्यपि प्रतीयते तथापि प्रवृत्तिनिमित्तस्य सकलार्थस्य पूरणेन पञ्चानामपि साधारण्यात् कल्पद्रुमाणामिति बहुवचनं । यथा माघकाव्ये । "कल्पद्रुमैः सह विचित्रफलैर्विरेजुः" –हे० ] । मध्ये पारिजात इव सुरद्रुमविशेष इव । "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः । स रघुसूनुरेव धाम्ना तेजसा रराज । अत्र कल्पद्रुमशब्दः पञ्चान्यतमविशेषवचनः । उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुमसामान्योपलक्षकतया प्रयुक्त इत्यनुसंधेयम् । कल्पा इति द्रुमाः कल्पद्रुमा इति विग्रहः । [ उपमालंकारः –सु० ] ।

७. पौरजनस्य नेत्रव्रजाः ( लोचनसमूहाः ) सर्वान्नृपतीन्विहाय ( त्यक्त्वा ) तस्मिन्नजे निपेतुः । स एव सर्वोत्कर्षेण ददृश इत्यर्थः । कथमिव । मदोत्कटे मदेनोद्भिन्नगण्डे निर्भरमदे वा वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे । [ "यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहं"-

5. In those rows of princes, there appeared Lakshmi's own self hard to be looked at because of the appearance of peculiar effulgence as the self of lightning appears to be divided by itself in thousand parts in the rows of clouds.

6. Among them seated on the most excellent thrones and dressed in the most noble attires the son of Raghu alone shone by his majestic glory like unto Pārijata among the heavenly trees.

7. Leaving all (other) princes, the rows of the eyes of citizens fell (directly) on him; as the bees clearing the flowery trees of themselves fall upon a wild scented elephant infuriated under the influence of ichor.

5. D. with Chā. Din. Va. Dhar. and Vija., सहस्रधामा, A. B. C. E. G. H. He. Su. and Vijay. सहस्रधात्मा.

6. D. 'संश्रितानां for 'संस्थितानां ; A. D. भूम्ना for धाम्ना. So also He. and Malli. notice this, the latter who says, 'भूम्ना' इति पाठे अतिशयेनेत्यर्थः.

अथ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।
संचारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८ ॥
पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्छति मङ्गलार्थे ॥ ९ ॥
मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा ॥ १० ॥

इति पाल्काव्ये-हे० चा० ]। रेचिता रिक्तीकृताः पुष्पाणां वृक्षा यैस्ते । त्यक्तपुष्पवृक्षा इत्यर्थः । द्विरेफा भृङ्गा इव । द्विपस्य वन्यविशेषण द्विरेफाणां पुष्पवृक्षत्यागसंभावनार्थं कृतम् । त्रिभिर्विशेषकमाह ।

८ अथान्वयज्ञै राजवंशाभिज्ञैर्बन्दिभिः स्तुतिपाठकैः । "वन्दिनः स्तुतिपाठकाः" इत्यमरः । सोमार्कवंश्ये सोमसूर्यवंशभवे नरदेवलोके राजसमूहे स्तुते सति । विवेशेत्युत्तरेण सम्बन्धः । एवमुत्तरत्रापि योज्यम् । संचारिते समंतात्प्रसारिते । अगुरुसारः ( कृष्णागुरुनिर्यासः ) योनिः कारणं यस्य तस्मिन्धूपे च वैजयन्तीः पताकाः समुत्सर्पति सति । अतिक्रम्य गच्छति सति । [ लहलहकायमाने सति-सु० ] ।

९. किं च । पुरस्योपकण्ठं समीप उपवनान्याश्रयो येषां तेषां कलापिनां बर्हिणामुद्धतनृत्यहेतौ । मेघध्वनिसादृश्यात्ताण्डवकारणे । प्रध्माताः पूरिताः शंखाः [ कबवः । शमयन्त्यमंगलमिति शंखाः । "पायात्स वःकुमुदकन्दमृणालगौरः शंखो हरेः करतलाम्बरपूर्णचन्द्रः । नादेन यस्य सुरशत्रुविलासिनीनां नीव्यो भवन्ति शिथिला जघनस्थलीषु" -हे० ] । यत्र तस्मिन् । मङ्गलार्थे मङ्गलप्रयोजनके । तूर्यस्वने वाद्यघोषे परितः सर्वतो दिगन्तान्मूर्छति व्याप्नुवति सति ।

१०. पतिं वृणोतीति पतिंवरा स्वयंवरा । अथ स्वयंवरा । "पतिंवरा च वर्या च" इत्यमरः । "संज्ञायां भृतृवृजि-" इत्यादिना खच्प्रत्ययः । क्लृप्तविवाहवेषा ( क्लृप्तो रचितो विवाहसम्बन्धी वेषो यस्याः सा तथोक्ता ) कन्येन्दुमती मनुष्यैर्वाह्यं परिवारेण परिजनेन शोभि ( रम्यं ) चतुरस्रयानं चतुरस्रवाहनं । [ चतस्रः अस्रयः कोणाः यस्य तच्चतुरस्रम्-हे० ] । शिबिकामध्यास्यारुह्य मञ्चान्तरे मञ्चमध्ये यो राजमार्गस्तं । [ मञ्चानामन्तरमेव राजमार्गस्तं तथोक्तमिति-हे० ] । विवेश ।

8 Then the assembly of princes sprung from the moon and the sun ( of the lunar and solar lines ) having been praised by bards versed in the histories of their families and the fume of ( burning ) sandle wood of excellent quality spreading around and rising above the banners,—

9. All around, auspicious trumpet-sounds, having extended to the end of the cardinal points, swelled by the blowing of the conch, the cause of the wild dance of the peacocks dwelling in the gardens on the skirts of the city,—

10. The maiden-princess, who was about to choose a husband and was therefore decked in wedding dress, took her seat in the palanquin borne by men and looking beautiful by the train of attendants and entered the royal road made between the rows of the dais.

8. A. D. E. G. H. and Vijay. चागरु° for चागुरु° B. C. E. G. with He. Chá. Din. Va. Su. Dhar. Vijay. and Vija., धूपे समुत्सर्पति वैजयन्तीः A. and Din. धूमे शिखाभावितकेतुमाले. So also He. and Chà., notice it. D. धूपे शिखाभावितकेतुमाले, H. धूपे शिखावासितकेतुमाले.

9. D. °श्रितानां for °श्रयाणां; B. C. H. with He. Din. Chà. Vijay. and Va., शिखण्डिनां for कलापिनां.

10. A. with He. Châ. Din. Va. Su. Dhar. Vijay. and Vija., चतुरस्रयानं. B. C. चतुरस्तयानं. D. चतुरं च यानं H. चतुरंगयानं.; A. B. H. कौतुकगुप्तवेषा for क्लृप्तविवाहवेषा.

तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये ।
निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु ॥ ११ ॥

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥

कश्चित्कराभ्यामुपगूढनालमालोलपत्त्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥ १३ ॥

११. नेत्रशतानामेकलक्ष्ये एकदृश्ये कन्यामये कन्यारूपे तस्मिन्विधातुः ( स्रष्टुः ) विधानातिशये सृष्टिविशेषे । [निर्माणकौशले—चा० ] । नरेन्द्रा अन्तःकरणैः ( मनोभिः ) निपेतुः । आसनेषु ( सिंहासनेषु ) देहैः केवलं देहैरेव स्थिताः । देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुरित्यर्थः । अन्तःकरणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेश आदरातिशयार्थः । [ दर्शनमात्रेण तेषां मनः आचकर्षेति वाक्यार्थः—हे० चा० ] ।

१२. तामिन्दुमतीं प्रति । अभिव्यक्तमनोरथानां [ अभिव्यक्तः प्रकटीकृतः मनोरथः प्रणयः यैः तेषां तथोक्तानां—चा० सु० ] प्ररूढाभिलाषाणां महीपतीनां राज्ञां प्रणयाग्रदूत्यः । प्रणयः प्रार्थना प्रेम वा । "प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः" इत्यमरः । प्रणयेष्वग्रदूत्यः प्रथमदूतिकाः । प्रणयप्रकाशकत्वसाम्याद्दूतीत्वव्यपदेशः । विविधाः [ नानाप्रकाराः—चा० सु० ] शृङ्गारचेष्टाः शृङ्गारविकाराः पादपानां ( तरूणां ) प्रवालशोभाः पल्लवसम्पद इव । [ प्रवालोपमया शृङ्गारचेष्टानामभिनवत्वं सूचितं—हे० ] । बभूवुरुत्पन्नाः । [ अन्योन्यानुरक्तयोः स्त्रीपुंसयोश्चेष्टाविशेषः शृङ्गार इति रुद्रटः यथा स्वमिन्द्रियाणां प्रवृत्तौ वाङ्मनःसुखाभिमानः शृङ्गार इति भोजः । यदाह । "चेष्टा भवन्ति पुंनार्योर्या रत्युत्था विरक्तयोः । सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः" । "ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वप्रणयसेवाभिः । उपवनगमनविहारैः शृङ्गाररसः समुद्भवति । नयनवदनप्रसादैः श्रुतिमधुरवचोधृतिप्रमोदैश्च । ललितैश्चाङ्गविहारैस्तदभिनयः संप्रयोक्तव्यः" इति भरतः—हे० चा० ] । अत्र शृङ्गारलक्षण रसस्धाकरे—"विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीतासदस्यास्वाद्यत्वं रतिः शृङ्गार उच्यते" । रतिरिच्छाविशेषः । तदुक्तं तत्रैव—"यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता" इति । चेष्टाशब्देन तदनुभावविशेषा उच्यन्ते । तेऽपि तत्रैवोक्ताः—"भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः । ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसंभवाः" इति । तत्र गात्रारम्भसम्भवांश्चेष्टाशब्दोक्ताननुभावान् "कश्चित्—" इत्यादिभिः श्लोकैर्वक्ष्यति । शृङ्गाराभासश्चायम् । एकत्रैव प्रतिपादनात । तदप्युक्तम्—"एकत्रैवानुरागश्चेत्तिर्यक्शब्दगतोऽपि वा । योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः" इति । शृङ्गारचेष्टा बभूवुरित्युक्तम् । ता एव दर्शयति—

१३. कश्चिद्राजा कराभ्यां पाणिभ्यामुपगूढनालं गृहीतनालम् । आलोलैश्चञ्चलैः पत्रैरभिहतास्ताडि-

---

11. The kings fell as it were by means of their hearts in that creator's master-piece of creation of a maiden princess, the sole mark of thousands of eyes, while they remained firm in their seats only by means of their bodies.

12. The love gestures of various kinds that of course being the first confidantes of true love were seen among those kings who had betrayed their passion for her, like unto the beauty of young shoots among the trees.

13. A certain king began to turn round a pleasure-lotus, the stem of which he held in his hands, which with its revolving petals warded off the bees and which formed a circle in its interior by means of pollens.

---

11. D. E. नेत्रसहस्रलक्ष्ये for नेत्रशतैकलक्ष्ये.

12. D. प्रवाल॰ for प्रवाल॰. So also noticed by He.

13. B. C. with He. Chà. Din. Va. and Su., ॰परिवेषबन्धि; A. E. G. H. Vijay. and Vija., ॰परिवेषबंधि, D. and Dhar., ॰परिवारबन्धि.

विलस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः ॥ १४ ॥
आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किंचित्समावर्जितनेत्रशोभः ।
तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥ १५ ॥

द्विरेफा भ्रमरा येन तत्तथोक्तम् ( चटुलदलताडितभृङ्ग )। रजोभिः परागैरन्तःपरिवेषं मण्डलं बध्नातीत्य-परिवेषबन्धि । लीलारविन्दं ( क्रीडाकमलं ) भ्रमयाञ्चकार ।[ इच्छासूचिकेयं चेष्टा । "विभक्ते व्यक्तमन-यूनां सङ्गतिकांक्षिणां । आवर्जनेनमन्योन्यमभिरूपांगदर्शनं " इति रतिरहस्यं—चा० ]। करस्थलीलारवि-न्दवयाहं भ्रमयितव्य इति नृपाभिप्रायः। हस्तघूर्णकोऽयमपलक्षणक इतीन्दुमत्यभिप्रायः(एतदेवं हेमाद्रिणा)।

१४. विलसनशीलो विलासी । [ यद्वा । "धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाश्रिता । स्मितपूर्वं च आ-लापो विलास इति कीर्तितः " इति भरतः । "विलासी कामुकः कामी स्त्रीपरो रतिलम्पटः " इति शा-ङ्गर्णवः—हे० ]। "वौ कषलसकत्थस्रम्भः " इति घिनुण्प्रत्ययः । अपरो राजांसात् ( स्कन्धात् ) विलस्तं ( चलितं ) रत्नानुविद्धं रत्नखचितं यदङ्गदं केयूरं । [ बाहुरक्षक —सु० ]। तस्य कोटिलग्नं प्रालम्बमृजुलम्बि-नीं स्रजम् । "प्रालम्बमृजुलम्बि स्यात्कण्ठात् " इत्यमरः । उत्कृष्योद्धृत्य साचीकृतं तिर्यक्कृतं चारु ( म-नोहरं ) वक्त्रं ( मुखं ) यस्य सतथोक्तः स यथावकाशं स्वस्थानं निनाय । [ मुखस्य साचीकरणं प्रालंबस्य यथा प्रदेशानयनं च शृङ्गारसूचकं । यदाह । "वदति हि संवृतिरेव कामितं "—चा० ] । प्रावारोत्क्षेपण-च्छलेना हृत्वामेवं परिरप्स्य इति नृपाभिप्रायः । गोपनीयं किंचिदङ्गेऽस्ति ततोऽयं प्रावृणुत इतीन्दुमत्यभिप्रायः ( एतदेव हेमाद्रिणा ) ।

१५ ततः पूर्वोक्तादन्योऽपरो राजा किंचित्समावर्जितनेत्रशोभ ईषदर्वाक्पातितनेत्रशोभः सन् । आ-कुञ्चिता आभुग्ना अग्राङ्गुलयः।[अङ्गुलीनामग्राणि अग्राङ्गुलयः । " वाहिताग्न्यादिषु । अग्राः अंगुलयः इति वा—हे० ]। यस्य तेन तिर्यग्विसंसर्पिण्यः ( प्रसरणशीलाः ) नखप्रभा यस्य तेन च पादेन ( चरणेन । हेम्नः विकारः) हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । [रेखानिर्माणमुख्यां छेदतृणलवनं पादयोश्चाप्यपूजा। दन्तानामप्यशौचं वसनमलिनता रुक्षतामूर्द्धजानां । सन्ध्यायुग्मे च निद्रा विवसनशयनं ग्रासहास्यातिरेकः । स्वाङ्गे वाद्यं च पुंसां निधनमुपनयेत्केशवस्यापि लक्ष्मीं " —हे० ] । [ भर्तुरिन्दुमतीदर्शने विभ्रमप्रकाशनं सभृतावपि विलासप्रकाशनं नागरता— चा० ] । पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमाग-च्छेति नृपाभिप्रायः । भूमिविलेखकोऽयमपलक्षणक इतीन्दुमत्याशयः । भूमिविलेखनं तु लक्ष्मीविनाशहेतुः। ( एतदेव हेमाद्रिणा ) ।

---

14. Another voluptuary with his beautiful face obliquely turned aside having taken up, set to its proper place, the garland that had slipped from his shoulder and which was stuck to the ends of the shoulder-ornaments which were set with jewels

15. Then another king having his beautiful eyes a little cast behind, was scratching the golden foot-stool with his foot, the tips of the toes of which were a little contracted and the lustre of whose nails had spread obliquely

---

14. A. C. D. H. केयूरकोटिक्षणजातसंगम् for रत्नानुविद्धांगदकोटिलग्नम्.; B. C. E. G. H. Chà. Din. Va. Vija. and Vijay., प्रावारं for प्रालम्ब. So also Malli. who says, 'प्रावारं' इति पाठे तृतीयं वस्त्र. also noticed by He.; B. C. E. G. H. Chà. Din. Va. Vijay. and Vija., उत्क्षिप्य for उत्कृष्य ; B. C. E. G. H. Chà. Din. Va. Vijay. and Vija., यथाप्रदेशं for यथावकाश.

15. B. C. E. with Va. Su. Vijay. and Vija., °नेत्रशोभो for °नेत्रशोभः ; A. B. E. G. with He. Su. Vijay. and Vija., तिर्यग्विसंसर्पिनखप्रभेण, C. H. and Din., रत्नांशुसंपृक्तनखप्रभेण. D. with Chá. and Dhar., रत्नांशुसंसर्पिनखप्रभेण.

निवेश्य वामं भुजमासनार्धे तत्संनिवेशादधिकोन्नतांसः ।
कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत् ॥ १६ ॥
विलासिनीविभ्रमदन्तपत्त्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसंनिवेशैर्विपाटयामास युवा नखाग्रैः ॥ १७ ॥
कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान् ॥ १८ ॥

१६. कश्चिद्राजा वामं भुजमासनार्धे सिंहासनैकदेशे निवेश्य संस्थाप्य तत्संनिवेशात्तस्य वामभुजस्य संनिवेशात्संस्थापनादधिकोन्नतोऽंसो वामांस एव यस्य स तथोक्तः सन् । विवृत्ते परावृत्ते त्रिके ( पृष्ठकटिसन्धौ ) त्रिकप्रदेशे भिन्नहारो लुण्ठितहारः ( शिथिलमुक्तावलिः इति यावत् ) । सन् । "पृष्ठवंशाधरे त्रिकम्" इत्यमरः । [ "स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं स्मृतं" इति सन्धिभेद-त० ] । सुहृत्समाभाषणतत्परोऽभूत् । ( मित्रेण समं आलापे सावधानो बभूव ) । वामपार्श्ववर्तिनैव मित्रेण संभाषितुं प्रवृत्त इत्यर्थः । अत एव विवृत्तत्रिकत्वं घटते । [ अनेनेन्दुमत्यासक्तिं गोपितवानिति भावः –चा० ] । त्वया वामाङ्गे निवेशितया सहैव वार्त्तां करिष्य इति नृपाभिप्रायः । परं दृष्ट्वा पराङ्मुखोऽयं न कार्यकरैरितीन्दुमत्याकूतम् । ( एतदेव हेमाद्रिणा ) ।

१७. अन्यो युवा । ( नृपः इति यावत् ) । विलासिन्याः प्रियाया विभ्रमार्थं दन्तपत्त्रं ( कर्णाभरणस्थानीयं ) दन्तपत्त्रभूतमापाण्डुरं ( पीतवर्णं ) केतकबर्हं केतकदलम् । "दलेऽपि बर्हम्" इत्यमरः । प्रियानितम्बे उचितसंनिवेशैर्न्यस्तैर्निक्षेपणैर्नखाग्रैर्विपाटयामास विदारयामास । [ एतेनाप्यन्यासक्ता स्वचातुरी सूचिता–हे० एतेनात्मनः कामशास्त्रप्रावीण्यं सूचितं–चा० ] । अहं तव नितम्बे एवं नखव्रणादीन्दास्यामीति नृपाशयः । तस्मादयं कामासक्तोऽयमपलक्षणक इतीन्दुमत्याशयः । ( एतदेव हेमाद्रिणा ) ।

१८. कश्चिद्राजा कुशेशयं । [ कुशे जले शेते तत्कुशेशयं । "अधिकरणे शेतेः" इत्यच् । "शयवास–" इत्यलुक् । "कुशं वने कुशं नीरे" इति धनञ्जयः । "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले" इति विश्वः–हे०चा० ] । शतपत्त्रमिवाताम्रं तलं यस्य तेन । [ इति सौन्दर्य–हे० ] । "शतपत्त्रं कुशेशयम्" इत्यमरः । रेखारूपो ध्वजो लाञ्छनं यस्य । [ इति महाराजचिह्न–हे० ] । तेन करेण । अङ्गुलिषु भवान्यङ्गुलीयान्यूर्मिकाः । [ निर्दिष्टय अङ्गुलौ भवं अङ्गुलीयकं–हे० ] । "अङ्गुलीयकमूर्मिका" इत्यमरः । [illegible] इति [illegible] । रत्नानामङ्गुलीयानि तेषां प्रभयानुविद्धान्व्याप्तानक्षान्पाशान् । "अक्षास्तु देवनाः पाशकाः" इत्यमरः । सलीलम् ( सक्रीड ) उदीरयामास चिक्षेप । अहं त्वया सहैव रंस्य इति नृपाभिप्रायः । अक्षक्रीडाव्यसनी कापुरुषोऽयमितीन्दुमत्यभिप्रायः । "अक्षैर्मा दीव्येत" इति श्रुतिनिषेधात् । ( एतदेव हेमाद्रिणा ) ।

16. Resting his left arm [illegible] of the seat and having in consequence of it his shoulder raised up a little, a certain king [illegible] was loosened on account of his back-bone, having turned, became intent on [illegible] on the left side.

17. Another prince [illegible] that are fit to be set on the hips of a beloved wife, the [illegible] of Ketaka flower which serves the purpose of the ear-ring for the amorous gestures of coquettish woman.

18. A certain king, sportively cast up the dice enveloped with the splendour of his diamond rings, with his hand, the palm of which was red like a lotus flower and marked with the lines of banners.

17. C. D. H. केतकगर्भमन्यः for केतकबर्हमन्यः
18. H. लेखा', Vijay. रेखा' for रेखा'.

कश्चिद्यथाभागमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव ।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे ॥ १९ ॥
ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्संनिकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥ २० ॥
असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः परंतपो नाम यथार्थनामा ॥ २१ ॥

१९ कश्चित् ( विलासी ) यथाभाग यथास्थानमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव स्वस्थानाच्चलित इव किरीटे ( मुकुटे ) वज्राणां किरीटगतानां ( हीरकाणां ) अंशवः ( किरणाः ) गर्भे ( मध्ये ) येषां तान्यङ्गुलिरन्ध्राणि यस्य तमेकं करं व्यापारयामास [ योजयामास । चपलताख्योऽलंकारः-हे० ] । किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्य इति नृपाभिप्रायः । शिरसि न्यस्तहस्तोऽयमपलक्षण इतीन्दुमत्याभिप्रायः । ( एतदेव हेमाद्रिणा ) । [ आत्मप्रकाशना परचेष्टा चपलतोच्यत इति-चा० ] ।

२०. ततोऽनन्तरं नृपाणां श्रुतवृत्तवंशा । श्रुतनृपवृत्तवंशेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या प्रतिहारं ( द्वारं ) रक्षतीति प्रतिहाररक्षी द्वारपालिका कर्मण्यण्प्रत्ययः । " टिड्ढाणञ् " इत्यादिना ङीप् । प्राक्प्रथमं कुमारीमिन्दुमतीं मगधेश्वरस्य संनिकर्षं समीपं नीत्वा पुंवत्पुंसा तुल्यम् । " तेन तुल्यं क्रिया चेद्वतिः " इति वतिप्रत्ययः अवदत् ( बभाषे ) ।

२१. असौ राजा असाविति पुरोवर्तिनो निर्देशः । एवमुत्तरत्रापि द्रष्टव्यम् । शरणोन्मुखानां शरणार्थिनां शरण्यः शरणं रक्षणे साधुः । " तत्र साधुः " इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इति नाथनिरुक्तिर्निर्मलैव । अगाधसत्त्वः [ अगाधमधिकं सत्त्वं बलं यस्य सः-चा० सु० ] गम्भीरस्वभावः । " सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः " इति विश्वः । मगधा जनपदाः । तेषु प्रतिष्ठास्पदं यस्य स मगधप्रतिष्ठः । " प्रतिष्ठा कृत्यमास्पदम् " इत्यमरः । प्रजारञ्जनेन लब्धवर्णो विचक्षणः । यद्वा प्रजारञ्जनेन लब्धोत्कर्षः । परान्छत्रूंस्तापयतीति परंतपः । परंतपाख्यः । [ अनुप्रासोऽलंकारः-हे० ] । " द्विषत्परयोस्तापेः " इति खच्प्रत्ययः । " खचि ह्रस्वः " इति ह्रस्वः । " अरुर्द्विषदजन्तस्य मुम् " इति मु-

19. Another king kept his hand, the intervals between the fingers of which were internally illumined with the rays of the diamonds, busy with his crown, as if it had slipped off from its proper place.

20. At last the maid-servant Sunanda, the keeper of the door of the harem, who was as bold as a male and who had known the exploits achieved by, and the pedigrees of, the kings, first led the virgin princess to the lord of the Magadhas, and then addressed the following words :—

21. This is a King by name Parantapa and rightly so named, the refuge of those who look up to him for protection, of a spirit unfathomable, a resident of the country of the Magadhas, and one who has obtained fame by ever pleasing his subjects.

19. D. H. यथास्थानं for यथाभाग.; A. H. Vijay. and Dhar., स्वसंनिवेशाध्यतिलङ्घिनी, D. and Su., स्वसंनिवेशाद्व्यतिलङ्घिनी for स्वसंनिवेशाद्व्यतिलङ्घिनी.; C. E. He. Va. Vijay. and Vija. वज्रांशुभिन्नाङ्गुलिरन्ध्रं. D. and Dhar., वज्रांशुभिन्नाङ्गुलिरत्नं for वज्रांशुगर्भाङ्गुलिरन्ध्रं. G. H has रत्नांशुभिन्नांगुलिरन्ध्रं.

20. H. has श्रुतवंशवृत्ता for श्रुतवृत्तवंशा; E. प्रतिहाररक्षा for प्रतिहाररक्षी.

21. C. D. and Vijay. शरणोत्सुकानां for शरणोन्मुखानां.

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२ ॥
क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकांश्चकार ॥ २३ ॥
अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे ।
प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ २४ ॥

सागमः । नामेति प्रसिद्धौ । यथार्थनामा ( यथार्थं अर्थानुगतं नामाख्या यस्य सः ) । शत्रुसंतापनादिति भावः । [ परंतपत्वेन क्रूरत्वं लोकरक्षणाय व्यग्रत्वं चेन्दुमत्या वैराग्यस्य सूचनं । अजव्यतिरिक्तेषु भूपेषु स्तुतिनिन्दापरत्वात्सर्वत्र लेशालङ्कारोऽवगन्तव्यः । उक्तञ्च दण्डिना । " लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृतां " इति—चा० ] ।

२२. अन्ये नृपाः कामं । [ " काम प्रकामं पर्याप्त " प्रायः क्रियाविशेषणानि एतानीति क्षीरस्वामी । " अकामानुमती काम " इति विश्व.—हे० ] । सहस्रशः ( सहस्रं सहस्रमिति सहस्रशः ) सन्तु । भूमिमनेन राजन्वतीं शोभनराजवतीमाहुः । नेतरैः कैश्चिदस्तीत्यर्थः । " सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् " इत्यमरः । " राजन्वान्सौराज्ये " इति निपातनात्साधुः । तथाहि । नक्षत्रैरश्विन्यादिभिस्ताराभिः साधारणैर्ज्योतिर्भिर्ग्रहैर्भौमादिभिश्च । [अत्र हि विज्ञानेश्वरः । तारा अश्विन्यादिव्यतिरिक्तानि ज्योतींषि । नक्षत्राण्यश्वयुक्प्रभृतीनि भौमादिग्रहास्तै । यद्वा । तारा ग्रहा भौमादयः पञ्च तथा मुहूर्तदर्पणे । " प्रकाशकौ द्वौ प्रथमौ ग्रहाणां ताराग्रहाः पञ्च ततो परे द्वौ तमोग्रहौ तेषु शुभास्तु मध्ये त्रयोऽवलीन्दुश्चपरन्दुपापाः "— हे० ] । संकुलापि रात्रिश्चन्द्रमसैव ज्योतिष्मती अस्तीति ज्योतिष्मती (ज्योत्स्नावती ) । नान्येन ज्योतिषेत्यर्थः ।

२३. अयं परंतपोऽध्वराणां क्रतूनां क्रियाप्रबन्धादनुष्ठानसातत्यात् । अविच्छिन्नादनुष्ठानादित्यर्थः । अजस्रं नित्यमाहूतसहस्रनेत्रः । आकारितेन्द्रः । शच्या इन्द्राण्या अलकान् ( केशान् ) पाण्डुकपोलयोर्लम्बान्स्रस्तान् । [ पाण्डुता च भर्तृविरहात् हे० ] । पर्यायेण च । मन्दारैः कल्पद्रुमकुसुमैः शून्यांश्चकार । [ एतेन तस्य यज्ञकर्मतत्परत्वं वर्णनेनेन्दुमत्या वैराग्यहेतुः सूचित—चा० ] । प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति । [लेशालङ्कारोऽलङ्कारः लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम " इति दण्डी—हे०] । "प्रोषिते मलिना कृशा" इति । " क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका " इति च स्मरणात् [याज्ञवल्क्य - हे० ] । [ एतेन [illegible] सूच्यते । तथा पाराशरः । " दुरस्थानामविद्यानां मोक्षधर्मानुयायिनां । शूराणां निर्गुणानां च न देया कन्यका बुधैः " हे० ] ।

२४. [illegible] पुष्पपुरं नगरं । अनेन राज्ञा गृह्यमाणं ( पीड्यमानं ) पाणिमिच्छसि चेत् [ [illegible] समीचीनत्वा—हे० । अनेनास्मिनाऽनर्गाकारः सुनन्दया सूचितः—चा० ] ।

22 Grant [illegible] thousands, yet they say that the earth has, in him alone [illegible] with constellations, stars and planets, is yet [illegible]

23 This King [illegible] sacrificial ceremonies, perpetually invited the thousand-eyed [illegible] of Sachi, which were pendent on her pale cheeks, long destitute of M[illegible]

24 If you wish your hand [illegible] marriage by this King worth choosing, then or

22 B. D. E. G. H. with He. Va. Su. Dhar. Vijay. and Vija. सन्ति for सन्तु, the latter also is observed by He.; D. H. and Dhar. Vijay., and Vija., सहस्रसंख्या for सहस्रशोऽन्ये; D. with Dhar. and Vija., चन्द्रमसेव for चन्द्रमसैव. So also noticed by He.

24. D. with Su., and Dhar, संश्रयाणां, A. G. H. with He. Va. Vijay. and Vija., समाश्रितानां for संश्रितानां.

एवं तयोक्ते तमवेक्ष्य किंचिद्विस्रंसिदूर्वाङ्कमधूकमाला ।
ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥ २५ ॥
तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय ।
समीरणोत्थेव तरंगलेखा पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥
जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७ ॥

पाणिग्रहणमिच्छसि चेदित्यर्थः । प्रवेशे प्रवेशकाले प्रासादवातायनसंश्रितानां राजभवनगवाक्षस्थितानां पुष्पपुराङ्गनानां पाटलिपुराङ्गनानां नेत्रोत्सवं कुरु । सर्वोत्तमानां तासामपि दर्शनीया भविष्यसीति भावः ।

२५. एवं तया सुनन्दयोक्ते सति तं परंतपमवेक्ष्य किंचिद्विस्रंसिनी दूर्वाङ्का दूर्वाचिह्ना मधूकमाला गुडपुष्पमाला यस्याः सा । [ विवाहसमये कन्याः मंगलार्थं दूर्वाकमधूकमालां कण्ठं बिभ्रति–सु० ] । " मधूके तु गुडपुष्पमधुद्रुमौ " इत्यमरः । वरणे शिथिलप्रयत्नेति भावः । [ याजकोयं ब्रह्मचारित्वे वन्द्यः–हे० ] । तन्वीन्दुमत्येनं नृपमभाषमाणज्र्वा भावशून्यया प्रणामक्रिययैव ( ऋजुः शुद्धा विभ्रमरहिता या नमस्क्रिया तयैव ) प्रत्यादिदेश परिजहार । [ " इंगिताकारलक्ष्यार्थः । सौ ( ल ) क्ष्म्यात्सूक्ष्म इति स्मृतः " इति काव्यादर्शे–हे० ] ।

२६. सैव नान्या । चित्तज्ञत्वादिति भावः । वेत्रग्रहणे ( सुवर्णदण्डग्रहणे ) नियुक्ता ( स्थापिता ) दौवारिकी सुनन्दा तां राजसुतां राजान्तरमन्यराजानं निनाय । नयतिर्द्विकर्मकः । कथमिव । समीरणोत्था वातोत्पन्ना तरंगलेखोर्मिपङ्क्तिर्मानसे सरसि या राजहंसी तां पद्मान्तरमिव । [ सुनन्दायाः इन्दुमतीबुध्यनुसरणं सूचयत्येवकारः–हे०चा० ] ।

२७. एनामिन्दुमतीं जगाद । किमिति । अयमङ्गनाथोऽङ्गदेशाधीश्वरः सुराङ्गनाभिः ( देवस्त्रीभिः ) प्रार्थिता कामिता यौवनश्रीः ( तारुण्यसंपद् ) यस्य स तथोक्तः । पुरा किलैनमिन्द्रमाहात्म्यार्थमिन्द्रपुरगामिनमकामयन्ताप्सरस इति प्रसिद्धिः । किंच । सूत्रकारैर्गजशास्त्रकृद्भिः [ पालकाप्यप्रणीतमादयस्तैः–चा० ] पालकादिभिर्महर्षिभिर्विनीतनागः शिक्षितगजः [ मृगचर्मादयो गजशास्त्रप्रवक्तारः । पालकाप्यं कथाप्यस्ति । अथैकदाङ्गराजः प्रथमं कुतोपि देशाद्दिवावतीर्णं ऋषिणा पालकाप्येन पालितं दिग्गजानां कुलं अवलोक्य विस्मितस्त-

your entrance, you will certainly become an object of delight to the eyes of the females of Pushpapura, seated in the windows of their respective mansions

25 When Sunanda said this to her the thin and delicate princess, whose garland of Madhûka-flowers, inter-strung with the Durvas, had fallen a little aside, first gazed at him without speaking a word, and then rejected him simply by making a straight bow (making a bow without much bending her head)

26. As a row of waves, raised by the wind carries a female swan of the lake Manasa from one to another lotus flower, so that very person (Sunanda) who was employed to hold a golden cane, the sign of her office, took the princess to another King

27. And spoke the following words to her —" This is the king of the Angas whose loveliness

25. E. H. °विस्रंसि for °विस्रमि°; C, D. and Vijay. इव for एव.

26. D. with Cha. Din. and Dhar., °माला, B. °रेखा for °लेखा.

27. D. and Vijay. सैनां for चैनां.; D. with He. Chà. Din. and Va, अंगराज° for अंगनाथ:.; A. E. G. with Chà. Din. Vijay. and Vija. विनीतनागः किल सूत्रकारैः So also observed by He., C. H. with He. and Va., विनीतभागः किल सूत्रकारैः, So also noticed by Chà., B. and Su., विनीतभागः किल सत्रकारैः. D. and Dhar., विनीतनागः किल सूत्रधारैः, So also noticed by He. H. has सुखं for पदं.

अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः ॥ २८ ॥
निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि तयोस्तृतीया २९
अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।
नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ३०

ग्रहणोत्सुकः स्वयमशक्तः सन् इन्द्रमुपेत्य तदनुज्ञातैर्मृगचर्मादिभिर्महर्षिभिस्तद्गजकुलं ग्राहयित्वा शास्त्राणि कारयित्वा च शिक्षयामास । तदादिभूमौ गजसंतानः प्रवर्तते । अनेन ऋषिसेव्यत्वमुक्तं । भंग्या रणप्रियतोक्ता वा—हे० भंग्यन्तरेण संग्रामप्रियोक्तिरिति कश्चित्—चा० ] । किलेत्यैतिह्ये । अत एव भूमिगतोऽपि ( भूमंडलस्थोऽपि ) ऐन्द्रं पदमैश्वर्यं भुङ्क्ते । भूलोक एव स्वर्गसुखमनुभवतीत्यर्थः । गजाप्सरोदेवर्षिसेव्यत्वमैन्द्रपदशब्दार्थः । पुरा किल कुतश्चिच्छापकारणाद्भुवमवतीर्णं दिग्गजवर्गमालोक्य स्वयमशक्तेरिन्द्राभ्यनुज्ञया नीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान्वशीकृत्य भुवि संप्रदायं प्रावर्तयदिति कथा गीयते ।

२८. शत्रुविलासिनीनां स्तनेषु ( कुचेषु ) मुक्ताफलस्थूलतमान् । [ मुक्ताफलवत्स्थूलतमान् । मुक्ताफलसाम्यात्कज्जलाभावः सूच्यते—हे० ] । अश्रुबिन्दून् ( बाष्पकणान् ) । "अस्रमश्रुणि शोणिते" इति विश्वः । पर्यासयता प्रस्तारयता [ पातयता—हे० ] । भर्तृवधादिति भावः । अनेनाङ्गनाथेनोन्मुच्याक्षिप्य सूत्रेण विना हारा एव प्रत्यर्पिताः । [ अतिवीरस्मरणं वैराग्यहेतुः—चा० ] । अविच्छिन्नाश्रुबिन्दुप्रवर्तनादुत्सूत्रहारार्पणमेव कृतमिवेत्युत्प्रेक्षा गम्यते । [ विशेषोक्तिरलंकारः—चा० ] ।

२९. निसर्गतः स्वभावतो भिन्नास्पदं ( भिन्नं परस्परविरुद्धं आस्पदं स्थानं यस्य तत् ) भिन्नाश्रयम् । सहावस्थानविरोधीत्यर्थः । श्रीः ( लक्ष्मीः ) च सरस्वती ( भारती ) चेति द्वयमस्मिन्नङ्गनाथे एकत्र संस्था स्थितिर्यस्य तदेकसंस्थम् ( सहस्थितं ) । उभयमिह संगतमित्यर्थः । [ "प्रायेण हीश्वरा मूर्खाः पण्डिता अपि निर्धनाः" इति—हे० चा० ] । हे कल्याणि ( हे शुभे ) । "बह्वादिभ्यश्च" इति ङीष् । कान्त्या ( श्रिया ) सूनृतया सत्यप्रियया गिरा च योग्या समर्गाहा त्वमेव तयोः श्रीसरस्वत्योस्तृतीया । समानगुणयोर्युवयोर्दाम्पत्यं युज्यत एवेति भावः । [ अनेन प्रायस्तृतीया पत्नी न शुभावहा इत्युक्तं । तृतीयविवाहे—कविवाहस्य शौनकेनोक्तत्वात् । सपत्नीसद्भावो वा—हे० ] । दक्षिणनायकत्वं चास्य ध्वन्यते । तदुक्तम् । "तुल्योऽनेकत्र दक्षिणः" इति । [ लक्ष्मीसरस्वतीरूपसपत्नीसंभवादस्य त्यागः सूचितः—चा० ] ।

३०. अथ ( भूपवर्णनानन्तरं ) कुमार्यङ्गराजाच्चक्षुरवतार्य । अपनीयेत्यर्थः । जन्यां मातृसखीम् । "ज-

of full youth had been sought by celestial damsels whose elephants were trained by the professors of elephantine science and who enjoys the position of Indra even though living on the earth.

28. In causing the beautiful wives of his enemies to shed on their bosoms the drops of tears, as big as pearls, he returned to them as it were, their pearl garlands, without strings, that had been already taken off

29. " Both the Goddesses Sri ( wealth ) and Sarasvati ( learning ), whose abodes by nature are different, live together in him And you, O fortunate girl, are by your charming loveliness and a true pleasing address, fit for their third fellow companion

30. Then having removed her eyes from the king of the Angas, 'proceed,' said the maiden

28. A. D. पर्यायता for पर्यासयता; A. B. D. E. G. H. and Vijay. आक्षिप्य for उन्मुच्य So also noticed by He.

30. D.H. अंगनाथात् for अंगराजात्.; A.G. with Su. and Dhar., याहीति जन्यामवदत्. D. H. with Chà. Din. Va. Dhar.*and Vija., यातेति याप्यानवदत्. So also noticed by He. and Din.; B. C. E. with He. Vijay. and Din., यातेति ज-

ततः परं दुःप्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ ।
निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै ॥ ३१ ॥
अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ ३२ ॥

न्या मातृमखीमुदोः ” इति विश्वः । सुनन्दां याहि गच्छेत्यवदत् । न चायमङ्गराजनिषेधो दृश्यदोषान्नापि द्रष्टृदोषादित्याह—नेत्यादिना । असावङ्गराजः काम्यः कमनीयो नेति न । किं तु काम्य एवेत्यर्थः । सा कुमारी च सम्यग्द्रष्टुं विवेक्तुं न वेदेति न । वेदेत्यर्थः । [ द्वौ नञौ प्रकृत्यर्थंगमयतः । वामनश्च । “ संभाव्यनिषेधनिवर्तने द्वौ संप्रतिषेधात् ” इति तद्व्यगुणज्ञा सा चेदपि नेत्याह—हे० ] । किं तु लोको जनो भिन्नरुचिर्हि रुचिरमपि किंचित्कस्मैचिन्न रोचते । [ यदुक्तं किरातार्जुनीये “ विचित्ररूपाः खलु चित्तवृत्तयः ” हे० ]। किं कुर्मो न हीच्छा नियन्तुं शक्यत इति भावः ।

३१. ततोऽनन्तरं प्रतिहारभूमौ द्वारदेशे नियुक्ता दौवारिकी । “स्त्री द्वार्द्वारं प्रतीहारः” इत्यमरः । द्विषद्भिः शत्रुभिर्दुःप्रसहं दुःसहम् । शूरमित्यर्थः। विशेषेण दृश्यं दर्शनीयम् । रूपवन्तमित्यर्थः । परमन्यं नृपम् । नवोत्थानं नवोदयमिन्दुम् (चन्द्र) इव । इन्दुमत्यै निदर्शयामास । [“आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियं । कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ” इत्यादेर्लोकैरादृतत्वान्न दोषः । उक्तं हि सरस्वती कण्ठाभरणे । “ इदं हि शास्त्रमाहात्म्यदर्शनालमचेतसां । अपशब्दवदाभाति न च सौभाग्यमुज्झति ” इति—चा० ] ।

३२. उदग्रबाहुर्दीर्घबाहुः । ( “ उच्चप्रांशून्नतोदग्रः ” इत्यमरः )। विशालवक्षास्तनुवृत्तमध्यः कृशवर्तुलमध्योऽयं राजावन्तिनाथोऽवन्तिदेशाधीश्वरः । [ मालवदेशाधिपतिः— हे० सु० ] । त्वष्ट्रा विश्वकर्मणा । भर्तुस्तेजोविगमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेनेति शेषः । चक्रभ्रम चक्राकारं शस्त्रोत्तेजनयन्त्रम् । [ अर्जुनयंत्र—सु० ] । “ भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुण्डाख्ये शिल्पियन्त्रके ” इति विश्वः । आरोप्य यत्नेनोल्लिखित उष्णतेजाः सूर्य इव । [ त्वष्टा संज्ञाभिधायाः दुहितुरादित्यपत्न्याः तत्तेजोऽसहमानायाः कृते रविं यंत्रेऽलिखदित्यागमः—हे० ] । विभाति । [ “ निरुपाख्यमत्यतं बुधैः श्रुतिकटु स्मृतं । एकाग्रमनसा मन्ये त्वष्ट्रेयं निर्मिता यथा ” इति वाग्भटः—हे० ] । अत्र मार्कण्डेयः— “ विश्वकर्मा त्वनुज्ञातः शाकद्वीपे विवस्वता । भ्रममारोप्य तत्तेजः शातनायोपचक्रम ” इति । [ उपमोत्प्रेक्षा वा—हे० ] ।

---

to her friend. Not that he was not attractive, nor that she was not a good judge herself; but because different persons have different tastes.

31. Then she, who was appointed to keep guard over the gate, pointed out to Indumati another prince, whom his enemies dared not withstand and who was remarkably beautiful like the moon newly risen.

32. "This long-armed, broad-breasted, and slender-and round waisted Lord of Avanti looks like the effulgent luminary trimmed off with care by Tvashtri, who placed him for the purpose on his round lathe."

---

[illegible]नवदत. So also observed by Chà. and commented on by Malli., who [illegible]ys इति पाठे जनीं वधूं वहन्तीति जन्या वधूबन्धवः तान् यात गच्छतेत्यवदत् । “ जन्यो वरवधू [illegible]तिमियतुल्यहितेऽपि च ” इति विश्वः । अथ वा जन्या वधूभृत्याः । “ भृत्याश्चापि नवोढायाः ” इति के[illegible]: । संज्ञायां जन्येति यत्प्रत्ययान्तो निपातः । यदत्राह वृत्तिकारः—“ जनीं वधूं वहन्तीति जन्या जा[illegible]तुर्वयस्याः ” इति । यच्चामरः—“ जन्याः स्निग्धा वरस्य ये ” इति तत्सर्वमुपलक्षणार्थमित्यविरोधः ।

31. D. G. H. Vijay. and Va., परेषां for द्विषद्भिः, also noticed by Chà.; B. D. प्रयुक्ता for नियुक्ता; A. D. E. G. H. विशेषकान्तं for विशेषदृश्यं.

32. H. has चक्रभ्रामं for चक्रभ्रमं.; G. H. यंत्रोल्लिखितो for यत्नोल्लिखितः.

अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि ।
कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥ ३३ ॥
असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥३४॥
अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।
सिप्रातरंगानिलकम्पितासु विहर्तुमुद्यानपरंपरासु ॥ ३५ ॥
तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।
बबन्ध सा नोत्तमसौकुमार्या कुमुद्वतीभानुमतीव भावम् ॥ ३६ ॥

३३. समग्रशक्तेः शक्तित्रयसंपन्नस्यास्यावन्तिनाथस्य प्रयाणेषु जैत्रयात्रास्वग्रेसरैः ( पुरोगामिभिः ) वाजिभिरश्वैरुत्थितानि रजांसि ( धूलयः । कर्तॄणि ) सामन्तानां । [ द्वित्रिग्रामाधीशः सामन्तः—हे० ] । समन्ताद्भवानां [ मण्डलेश्वराणां—चा० ] राज्ञां ये शिखामणयश्चूडामणयस्तेषां [ भूम्येकदेशनृपशिरोरत्नानां—हे० ] प्रभाप्ररोहास्तमयं तेजोङ्कुरनाशं कुर्वन्ति । [ अतितेजस्वितावर्णनं वैराग्यहेतुः—चा० ] । नासीरैरेवास्य शत्रवः पराजीयन्त इति भावः । [ अनेन परदेशयात्राभिनिवेशः उक्तः—हे० ] ।

३४. असाववन्तिनाथः । महाकालं नाम स्थानविशेषः । [ उज्जयिन्यां हि महाकालरूपी हरो वसतीति प्रसिद्धिः—हे० ] । तदेव निकेतनं स्थानं [ गृहं—हे० ] यस्य तस्य चन्द्रमौलेरीश्वरस्यादूरे समीपे वसन् । अत एव हेतोस्तमिस्रपक्षे कृष्णपक्षेऽपि प्रियाभिः सह ( वनिताभिः सार्धं ) ज्योत्स्नावतः प्रदोषान्रात्रीर्निर्विशत्यनुभवति किल । नित्यज्योत्स्नाविहारत्वमेतस्यैव नान्यस्येति भावः । [ अनेन बहुस्त्रीकता सूचिता—हे० ] ।

३५. रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूस्तस्याः संबोधनम् । हे रम्भोरु । "ऊरूत्तरपदादौपम्ये" इत्यूङ्प्रत्ययः । नदीत्वाद्ध्रस्वः । यूना ( तरुणेन ) अनेन पार्थिवेन सह । सिप्रा नाम तत्रत्या नदी तस्यास्तरङ्गाणाम् ( कल्लोलानां ) अनिलेन कम्पितासूद्यानानां परम्परासु पङ्क्तिषु विहर्तुं ( क्रीडितुं ) ते तव मनसः ( चित्तस्य । रुचिः । अभिलाषः ) कच्चित् । [ "कच्चित्प्रश्ने कामवादे" इति वैजयन्ती—हे० ] । स्पृहास्ति किमित्यर्थः । [ एतेन रसास्सर्मानरुक्ता—हे० ] । "अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्" इत्यमरः ।

३६. उत्तमसौकुमार्योत्कर्षा हेमाङ्गदेवा सेन्दुमती । अभियातिनां शत्रूणां मित्राणि बन्धव एव पद्मानि येन त-

33. "In the marches of this all-powerful king, the dust raised by the vanguard of horses, effects the disappearance of the shooting rays of the crest jewels of the tributary princes."

34. "Residing not far from the moon-crested Śiva whose abode is Mahakala, this king, it is said, enjoys the moonlight evenings in company with his beloved females even in the dark fortnight."

35. "I hope you entertain a desire, O beautiful-thighed princess, to amuse yourself with this young prince in the rows of gardens the trees of which are shaken by the breeze from the rippling water of the river Siprā."

36. As the moon lotus does not bloom in the scorching rays of the sun, so that exquisitely

33. E. उद्भूतानि, G. H, उद्धतानि for उत्थितानि ; D. with Su. and Dhar., °शिरोमणीनां for °शिखामणीनां.

34. D. H. Din. and Chā. चन्द्रार्धमौलेर्निवसन्नदूरे for वसन्नदूरे किल चन्द्रमौलेः; D. तामसपक्षे for तमिस्रपक्षे; D2. has 'दिवापि जालान्तरचन्द्रिकाणां नारीमुख' स्पर्शसुखानि भुंक्ते for the last two Pādas; A2. has प्रदोषा for प्रदोषान् which is condemned by Chā and Din.

35. D. E. G. H. शिप्रा° Vijay. शिप्रा°, for सिप्रा.°

तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम् ।
विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥ ३७ ॥
सङ्ग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥ ३८ ॥

मन् । प्रतापेन तेजसा संशोषिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन् । तस्मिन्नवन्तिनाथे कुमुद्वती कुमुदानि अस्याः सन्तीति कुमुद्वती ) । " कुमुदनडवेतसेभ्यो ड्मतुप् " इति ड्मतुप्प्रत्ययः । भानुमत्यंशुमति व । भावं चित्तं न बबन्ध । न तत्रानुरागमकरोदित्यर्थः । [ अनेन कुमार्याः सौकुमार्यं राज्ञः क्ष्ण्यं सूचितं–हे० ] । बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च निरूपणं राज्ञः सूर्यसाम्यार्थम् । [ अति क्रूरत्वं राग्यकारणं–चा० ] ।

३७. सुनन्दा ( प्रतीहाररक्षी ) तामरसान्तराभां ( तामरसस्य कमलस्य अन्तरं मध्यं तामरसान्तरस्येव आ- ाा कान्तिर्यस्याः सा तां तथोक्ता ) पद्मोदरतुल्यकान्तिम् । कनकगौरीमित्यर्थः । गुणैः [ विनयादिभिः– ० ] अनूनाम् । अधिकामित्यर्थः । शोभना दन्ता यस्याः सा सुदती । [ ननु कथं सुदतीति ात्रकार्योपगम्यते । इयमिदुमती तत्र बालापदेन निर्दिशिता । " बाला च गीयते नारी यावत्षोडश- त्सरं " । अथ वा । " आषोडशा भवेद्बाला तरुणी त्रिंशका मता । पञ्च पञ्चाशका प्रौढा वृद्धा भवति त- त्परं " इति रतिरहस्ये । तामरसत्वात् । एवं च तत्रापि यौवनं वया गम्यते–चा० ] । " वयसि दन्तस्य दतृ " इति दत्रादेशः । " उगितश्च " इति ङीप् । तां प्रकृतां प्रसिद्धां वा विधातुः ( ब्रह्मणः ) ललितां ( रम्यां ) सृष्टिम् । मधुरनिर्माणां स्त्रियमित्यर्थः । अनुगता आपो येषु तेऽनूपा नाम देशाः । " ऋक्पूरब्धूः पथामानक्षे " इत्यप्रत्ययः समासान्तः । " ऊदनोर्देशे " इत्यूदादेशः । तेषां [ अनूपाख्यदेशानां–हे० ] । राज्ञोऽनूपराजस्याग्रतो विधाय व्यवस्थाप्य भूयः पुनर्जगाद ( बभाषे ) ।

३८. सङ्ग्रामेषु युद्धेषु निर्विष्टा अनुभूताः । ( सुखिताः वा ) । सहस्रं बाहवो यस्य स तथोक्तः । [ इति पौरुषो- क्तिः–हे० ] । युद्धादन्यत्र द्विभुज एव दृश्यत इत्यर्थः । अष्टादशसु द्वीपेषु निखाताः स्थापिता यूपाः ( य- ज्ञस्तंभाः ) येन स तथोक्तः । [ तथा च विष्णुपुराणे । " जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो द्विपः । कुश- क्रौञ्चौ तथा शाकः पुष्करश्चैव सप्तमः " इति । " इंद्रद्वीपः कशेरुमान् ताम्रवर्णो गभस्तिमान् । नागद्वीपे तथा सौम्यो गन्धर्वो वरुणास्तथा । इलावृत्तं तथा सर्वं चन्द्रादित्यसमप्रभं । इलावृत्तस्य मध्ये यो मेरुः कन- कपर्वतः । इत्यमष्टादश द्वीपाः समाख्याता मनीषिभिः " । जम्बूद्वीपान्तर्गतसिंहलाद्यवान्तरगणनयाष्टादशत्वं । तथा नैषधे । " अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् " इति–हे० ] । सर्वक्रतुयाजी सार्व- भौमश्चेति भावः । [ अनेन धार्मिकत्व–हे० ] । जगयज्ञादिसर्वभूतरक्षणादनन्यसाधारणः ( समानं साधारण- साधारं यस्य सः अन्यसाधारणो न भवतीति अनन्यसाधारणः ) राजशब्दो यस्य स तथोक्तः । योगी [ योगः चित्तवृत्तिनिरोधस्तद्युक्तो योगी सिद्धः–चा० ] । ब्रह्मविद्वानित्यर्थः । स किल भगवतो दत्तात्रेयाल्लब्धयोग

delicate princess did not fix her heart on him, who by his valour illuminated the lotuses in the form of his friends and dried the mud in the form of his enemies.

37. Then Sunanda took the princess to the presence of the king of the Anupas and began to address her again who was as bright as the interior of a white lotus, who had a beautiful set of teeth, who was undiminished in good qualities, and who was the most elegant of the creator's creation.

38. " It is reported that in former times there was a Yogin by name Kartvirya who showed, as it were, a thousand arms in many of his fights who had fixed sacrificial posts in eighteen continents and whose title of ' Raja ' was not common to other kings.

37. D. C. सुनसं for सुदतीं. So also noticed by He.

38. H. 'निर्दिष्ट', D. Vijay. and Su., 'निर्वृत्त' for 'निर्विष्ट'.

अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात् ।
अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥

ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरंपरेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥ ४० ॥

तस्यान्वये भूपतिरेष जातः प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१ ॥

इति प्रसिद्धिः । कृतवीर्यस्यापत्यं पुमान्कार्तवीर्यो नाम राजा । [ सहस्रार्जुनः–हे० ] । बभूव किलेति [ ऐतिह्ये–चा० ] । अयं चास्य महिमा सर्वोऽपि दत्तात्रेयवरप्रसादलब्ध इति भारते दृश्यते । [ उक्तं च विष्णुपुराणे । " न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण श्रुतेन वा "–हे० ] ।

३९. विनेता शिक्षको यः कार्तवीर्यः । अकार्यस्यासत्कार्यस्य चिन्तया । अहं चौर्यादिकं करिष्यामीति बुद्ध्या । समकालमेककालमेव यथा तथा पुरस्तादग्रे चापधरः । [ धरतीति धरः चापस्य धनुषः धरः चापधरः । तथा वामनः । ब्रह्मविदादयः । " कृदन्तवृत्त्या तेर्महीधरादयो व्याख्याताः " इति–हे० ] । प्रादुर्भवन्सन् । प्रजानां जनानाम् । " प्रजा स्यात्सन्ततौ जने " इत्यमरः । अन्तःशरीरेष्वन्तःकरणेषु । शरीरशब्देनेन्द्रियं लक्ष्यते । अविनयमपि प्रत्यादिदेश ( निराकार्षीत । " प्रत्यादेशो निराकृतिः " इत्यमरः ) । मानसापराधमपि निवारयामासेत्यर्थः । अन्ये तु वाक्कायापराधमात्रप्रतिकर्तार इति भावः । [ यदा क्वापि कस्योपरि विरुद्धं चिन्तयन्ति तदा चापं गृहीत्वा समय एव प्रकटीभवति । कार्तवीर्ये राज्यं कुर्वाणे केनापि चित्तेऽपि अन्यायं चिन्तयितुं न शक्यते किमुत बहिः–सु० ] ।

४०. ज्याया मौर्व्या बन्धनं बन्धनेन निष्पन्दा निश्चेष्टाः ( निश्चलाः इति यावत् ) भुजा यस्य तेन ( अत एव ) विनिःश्वसन्ती ज्याबन्धोपरोधाद्दीर्घं निःश्वसती वक्त्रपरंपरा दशमुखी यस्य तेन निर्जितवासवेनेन्द्रविजयिना । अन्ये इन्द्रादयोऽप्यनेन जितप्राया एवेति भावः । लङ्केश्वरेण दशास्येन यस्य कार्तवीर्यस्य कारागृहे ( कारा च तद्गृहं च तस्मिन् । " कारा बन्धनमुच्यते " इति हलायुधः ) । बंधनागारे । " कारा स्याद्बन्धनालये " इत्यमरः । आ प्रसादादनुग्रहपर्यन्तमुषितं स्थितम् । [ पूर्वं हि जलकेलिलोलविलासिनीस्नानार्थार्जुनभुजपरिघरुद्धनर्मदावारिप्रवाहापहृतशिवलिङ्गार्चोऽरुषित रणमागतं रावणं मृधे जित्वा कार्तवीर्योऽर्जुनो निजचापज्याबन्धेन बबन्ध इत्यागमः–हे० ] । " नपुंसके भावे क्तः " । एतत्प्रसाद एव तस्य मोक्षोपायो न तु क्षात्रमिति भावः ।

४१. आगमवृद्धसेवी श्रुतवृद्धसेवी प्रतीप इति श्रेयः । एष भूपतिस्तस्य कार्तवीर्यस्यान्वये वंशे जातः । येन प्रतीपेन संश्रयस्य पुंसो दोषैः । [ पूतकोऽडामिः–चा०म० ] । व्यसनादिभी रूढमुत्पन्नं श्रियः सम्बन्धि स्वभावलोला प्रकृतिचञ्चलेत्येवं रूपमयशो दुष्कीर्तिः प्रमृष्टं निरस्तम् । दुष्टाश्रयत्यागशीलायाः श्रियः प्रकृतिचापल्यप्रवादो मूढजनपरिकल्पित इत्यर्थः । [ अस्य तु सन्मार्गवर्तित्वादचला इति–हे० । यतोऽयं विद्यावृद्धसेवी अत एव तत्समीपसंसर्गदोषाभावात्स्थिरश्रीरित्यर्थः–चा० ] । अयं तु दोषराहित्यान्न कदाचिदश्रिया त्यज्यत इति भावः ।

39 "The very moment that any evil desire entered into the inner organs (minds) of his subjects, this chastiser presenting himself before them, bow in hand, prevented them from doing those immoral actions."

40. "In his (Kartaviryas) prison stayed the lord of Lanka, who had vanquished Vasava whose arms were made motionless being bound up by bow strings and consequently whose row of mouths was breathing hard, until he was favourably disposed to release him."

41 "And this king named Pratipa was born in Kartaviryas line, who is known for his reverential regard for profoundly learned men, and who has wiped off the stain of the Goddess o

40. A. B. E. G. H. and Vijay. °निस्पन्द° for °निष्पन्द°; H. दशाननेन for लङ्केश्वरेण
41. A. D. with He. and Va., प्रदीपः for प्रतीपः.

**आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।**
**धारां शितां रामपरश्वधस्य संभावयत्युत्पलपत्रसाराम् ॥ ४२ ॥**
**अस्याङ्कलक्ष्मीर्भव दीर्घबाहोर्माहिष्मतीवप्रनितम्बकाञ्चीम् ।**
**प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥ ४३ ॥**
**तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।**
**शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ ४४ ॥**

४२. यः प्रतीप आयोधने युद्धे कृष्णगतिं कृष्णवर्त्मानमग्निं सहायं (सखायं) अवाप्य । [" बर्हिःशुष्मा कृष्णवर्त्मा " इत्यमरः । " वरेण तोषयामास तं नृपं स्विष्टकृत्तदा " इति भारते सहायहेतुः—हे० ] । क्षत्रियाणां ( राजन्यानां ) कालरात्रिम् [ यमभगिनीं नाशकरणशीलां—चा० ] । संहाररात्रिमित्यर्थः । रामपरश्वधस्य जामदग्न्यपरशोः । " द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः " इत्यमरः । शितां तीक्ष्णां धारां मुखम् । " खड्गादीनां च निशितमुखे धारा प्रकीर्तिता " इति विश्वः । उत्पलपत्रस्य ( कुमुदपत्रस्य ) सारः ( बलं ) इव सारो यस्यास्तां तथाभूतां संभावयति मन्यते । [ अतिसाहसिकत्वं वैराग्यहेतुः—चा० ]। एतन्नगरजिगीषया गतान्रिपून्स्वयमेव धक्ष्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा । यद्यन्ते च तथाभवाः शत्रव इति भारते कथानुसंधेया ।

४३. दीर्घबाहोरस्य प्रतीपस्याङ्के लक्ष्मीः ( उत्संगे श्रीः ) भव । एनं वृणीष्वेत्यर्थः । अनेनाय विष्णुतुल्य इति ध्वन्यते । माहिष्मती नामास्य नगरी । तस्या वप्रः प्राकार एव नितम्बः । तस्य काञ्चीं रशनाभूतां जलानां वेण्या प्रवाहेण रम्याम् । " ओघः प्रवाहो वेणी च " इति हलायुधः । रेवां नर्मदां प्रासादजालैः गवाक्षैः । " जालं समूह आनायो गवाक्षक्षारकावपि " इत्यमरः । प्रेक्षितुं ( द्रष्टुं ) काम इच्छास्ति यदि । [ अंकस्थायास्तवालिंगनमेव स्यादिति दीर्घबाहुत्वं—हे० ] ।

४४. प्रकामं प्रियं प्रीतिकरं दर्शनं यस्य सोऽपि । दर्शनीयोऽपीत्यर्थः । स क्षितीशः । शरदा प्रमृष्टाम्बुधरोपरोधो निरस्तमेघावरणः पर्याप्तकलः पूर्णकलः शशी । [ शुक्लपक्षे चतुःषष्टिः कलाः—हे० चा० ]। नलिन्या इव । [ नलिन्युपमानेन पद्मिनीजातित्वं—हे० ] । तस्या इन्दुमत्या रुचये ( प्रीत्यै ) न बभूव ( नाजनिष्ट ) । रुचिं नाजीजनदित्यर्थः । लोको भिन्नरुचिरिति भावः ।

fortune as being naturally fickle——the stain that arises from the faults of those to whom she is firmly attached."

42. He, it is reported, obtained the God of fire (lit. he who leaves a dark track behind him) for his ally in war affairs, and thus looked down upon the sharp edge of Rama's axe, the destruction-night of the Kshatriya race, as having the strength of a smooth lotus-leaf."

43. " Be thou therefore, the लक्ष्मी in the lap of this long-armed king, if thou, O fair one, entertainest a desire of looking at the river Reva from the windows of his palace, charming on account of the curling ripples of water, and looking like a girdle on the hips in the form of the ramparts of the city of माहिष्मती.

44. But that ruler of the earth, though of a lovely appearance, did not sufficiently come up to her taste, like the full moon even when freed from the covering of the clouds in autumn, to the taste of the lotus-pond.

---

42. H. has कृष्णमति for कृष्णगतिं; D. E. with Cha. Din. Va. and Su., सितां for शितां; D. E. °सारं for °सारां.

सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम् ।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५ ॥
नीपान्वयः पार्थिव एष यज्वा गुणैर्यमाश्रित्य परस्परेण ।
सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥ ४६ ॥
यस्यात्मगेहे नयनाभिरामा कान्तिर्हिमांशोरिव संनिविष्टा ।
हर्म्याग्रसंरूढतृणाङ्कुरेषु तेजोऽविषह्यं रिपुमन्दिरेषु ॥ ४७ ॥
यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।
कलिंदकन्या मथुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति ॥ ४८ ॥

४५. लोकान्तरे [ योगादिना—चा० ] स्वर्गादावपि गीतकीर्तिमाचारेण शुद्धयोरुभयोर्वंशयोर्मातापितृकुलयोः प्रकाशकम् । उभयवंशेत्यत्रोभयपक्षत्वनिर्वाहः । शूरसेनानां देशानामधिपतिं सुषेणं नाम नृपतिमुद्दिश्याभिसंधाय । [ नाममात्रेण संकीर्तनमुद्देशः—हे० ] । शुद्धान्तरक्ष्यान्तःपुरपालिकया । "कर्मण्यण्" । "टिड्ढाणञ्—" । इति ङीप् । सा कुमारी जगदे । [ बहुलक्षीकत्वाद्वैराग्यं—हे० ] ।

४६. यज्वा विधिवदिष्टवान् [ इति वैराग्यहेतुः—हे० ] । "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः । पार्थिवः । नीपो नामान्वयोऽस्येति नीपान्वयो नीपवंशजः । यं सुषेणमाश्रित्य ( अधिगम्य ) गुणैर्ज्ञानादिभिः । [ क्षमाकीर्त्यादिभिः—हे० ] । शान्तं प्रसन्नं सिद्धाश्रमम् ऋष्याश्रममेत्य प्राप्य सत्त्वैर्गजसिंहादिभिः इव । नैसर्गिकः स्वाभाविकोऽपि परस्परेण विरोधः ( विग्रहः ) उत्ससृजे त्यक्तः ।

४७. हिमांशोः कान्तिः चन्द्रकिरणा इव नयनयोः ( नेत्रयोः ) अभिरामा ( आनंदकारिणी ) यस्य कान्तिः आत्मगेहे स्वभवने संनिविष्टा संक्रान्ता । अविषह्यं विसोढुमशक्यं तेजः प्रतापस्तु । हर्म्येषु धनिकमन्दिराग्रेषु । "हर्म्यादि धनिनां वासः" इत्यमरः । संरूढाः ( संजाताः ) तृणाङ्कुरा येषु । शून्यत्वात्पथैः । [ एतेनातिक्रूरत्वं वैराग्यकारणं—चा० ] । रिपुमन्दिरेषु शत्रुनगरेषु । "मन्दिरं नगरेऽगारे" इति विश्वः । संनिविष्टम् । स्वजनाह्लादको द्विषंतपश्चेति भावः ।

४८. यस्य सुषेणस्य वारिविहारकाले जलक्रीडासमयेऽवरोधानामन्तःपुराङ्गनानां स्तनेषु चन्दनानां [illegible]नां प्रक्षालनाद्धेतोः । कलिंदो नाम शैलस्तत्कन्या यमुना । "कालिंदी सूर्यतनया यमुना शमनस्वसा" [illegible]मरः । मथुरा नामास्य राज्ञो नगरी । तां गतापि ( मथुरापुरीसमीपवर्तिन्यपि ) गङ्गाया विप्रकृष्टापी-

5. Whereupon the keeper of the harem spoke to that maiden princess with reference to [Sus]hena, the lord of the Surasenas, whose fame was sung even in the next world, and who by [his] conduct became the light (or ornament) of both of the pure lines (paternal and maternal).
6. "This king, a performer of sacrificial ceremonies, is sprung from the race of the Nipas; [hav]ing taken refuge in him ever the natural opposition to each other has been given up by th[e qua]lities, as by the beasts of forest on reaching a hermit's peaceful dwelling."
7. "His graceful loveliness in his own palace becomes delightful to the eyes like that of [the] cool rayed moon, but his unbearable energy of valour is seen in the cities of his enemies, [whe]re the tops of mansions are ever grown with grassy-blades."
8. "By the washing of the sandal on the bosoms of the females of his inner-apartment at the

15. E. has सुषेण for सुषण.; B. C. E. G. H. with He. Chá. Din. Va. . Dhar. Vijay. and Vija., देशान्तर° for लोकान्तर°.
17. B. C. H. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija. मदेहे for आत्मगेहे.
48. D. मथुरागतापि. for मथुरां गतापि; B. C. G. H. with He. Chà. Din. Va. . Dhar. Vijay. and Vija., °संपृक्तजला for °संसक्तजला. E. has °संश्लिष्टजला.

त्रस्तेन तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा यः ।
वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥ ४९ ॥
संभाव्य भर्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः ॥ ५० ॥
अध्यास्य चाम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि ।
कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु ॥ ५१ ॥

त्यर्थः । मथुरायां गङ्गाभावं सूचयत्यपिशब्दः । कालिंदीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्मास्यत इति वक्ष्यति । तत्कथमधुना मथुरासभव इति चिन्त्यम् । "मथुरा मधुरापुरि" इति शब्दभेदः । यद्वा साम्येति । गङ्गाया भागीरथ्या ऊर्मिभिः ( तरंगैः ) ससक्तजलेव ( संमिलितोदकेव ) भाति । धवलचन्दनसंसर्गात्प्रयागादन्यत्राप्यत्र गङ्गासंगतेव भातीत्यर्थः । [ बहुलश्रीकत्वाद्वैराग्य–हे० ] । "सितासिते हि गङ्गायमुने" इति घण्टापथः ।

४९. तार्क्ष्याद्गरुडात्त्रस्तेन । यमुनौकः स्थानं यस्य तेन । कालियेन नाम नागेन विसृष्टं किलाभयदाननिष्क्रयत्वेन दत्तम् । किलेत्यैतिह्ये । वक्षःस्थलव्यापिरुचं । [ वक्षःस्थल उरःस्थलं व्यापिनी रुक् यस्य तं तथोक्तं । स्थलशब्दः प्रशस्तार्थः तथा गणरत्नमहोदधौ । "प्रकाण्डस्थलभित्तयः" इति–हे० ] । मणिं ( रत्नं ) दधानः ( बिभ्राणः ) यः सुषेणः सकौस्तुभं ( कौस्तुभरत्नयुक्तं ) कृष्णं विष्णुं ह्रेपयतीव व्रीडयतीव । "अर्तिह्री–" इत्यादिना पुगागमः । कौस्तुभमणेरप्युत्कृष्टोऽस्य मणिरिति भावः ।

५०. युवानम् ( तरुणं ) अमुं सुषेणं भर्तारं संभाव्य मत्वा । पतित्वेनाङ्गीकृत्येत्यर्थः । मृदुप्रवालोत्तरोपरिप्रस्तारितकोमलपल्लवा पुष्पशय्या यस्मिंस्तत्तस्मिन् । [ कोमलकिसलयाधिककुसुमशयनीये–व० सु० उत्तरशब्दः आधिक्यं ब्रुवाणः सन् मिश्रत्वमाह । "दूर्वायवांकुरप्लक्षत्वगभिन्नपटोत्तरं । ज्ञातिवृद्धं प्रयुक्तं स योजनीराजनविधिः" । तथा च । "निनाय सात्यर्थहिमोत्तरानिलाः" । हिममिश्रा इत्यर्थः–हे० ] । चैत्ररथात्कुबेरोद्यानादनूने वृन्दावने । [ उक्तञ्च शंभुरहस्ये । "अलकाया बहिश्चास्त्युद्यानं चैत्ररथ प्रिये । योजनायुतविस्तीर्णं सर्वं कल्पद्रुमाकुलं "–हे० ] । वृन्दावननामक उद्याने हे सुन्दरि यौवनश्रीर्यौवनफलं निर्विश्यतामुपभुज्यताम् ।

५१. किं च । प्रावृषि वर्षासु कान्तासु गोवर्धनस्याद्रेः कन्दरासु दरीषु । "दरी तु कन्दरो वा स्त्री"

---

time of sporting in the water, the daughter of Kalinda, though flowing by Mathura, appears to have mixed her waters with the ripples of the Ganga."

49. "They say that he puts Krishna to shame along with his Kaustubha by his wearing a diamond, the lustre of which covers the surface of his chest, and which had been given to him by the snake Kaliya, whose abode was the river Yamuna and who was very much afraid of Garuda (or by adopting the reading त्रातेन &c 'and who was protected by him from Garuda')".

50. "For these reasons honour this youthful prince by accepting him for your husband and then you may, O charming princess, enjoy your loveliness of youth on a flowery couch overspread with tender sprouts, in the gardens of वृन्दावन not inferior to चैत्ररथ.

51. "Seated on the plane surface of marble slabs sprinkled with drops of water and fragrant

---

49. C. B. E. G. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija. त्रातेन for त्रस्तेन; D. H. Din. and. Chà., तार्क्षाद for तार्क्ष्याद; B. C. E. G. with He. Va. Su. Dhar., Vijay. and Vija., विष्णुं for कृष्णं.

51. B. C. E. G. H. with Va. Chà. Din. Su. Dhar. Vijay. and Vija., °तलानि. D. and He. °पट्टानि. He. also notices गन्धीनि.

नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ५२ ॥
अथाङ्गदाश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषीं सादितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे ॥ ५३ ॥
असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च ।
यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेन्द्रः ॥ ५४ ॥

इत्यमरः । अम्भसः पृषतैर्बिन्दुभिः ( जलकणैः ) उक्षितानि सिक्तानि । शिलायां भवं शैलेयम् । [ चन्दनवृक्षः—सु० ] । " शिलाजतु च शैलेयम् " इति यादवः । यद्वा शिलापुष्पाख्य ओषधिविशेषः । " कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु । शैलेयम् " इत्यमरः । " शिलाया ढः " इत्यत्र शिलाया इति योगविभागादिवार्थे ढञ्प्रत्ययः । तद्गन्धवन्ति शैलेयसुगन्धीनि शिलातलान्यध्यास्याधिष्ठाय कलापिनां बर्हिणां नृत्यं ( नर्तनं ) पश्य । [ तत्र मयूरसचारेण सर्पाभावात्संभोगे निःशंकता । कौतुकाभावो ध्वन्यते—हे० चा० ] ।

५२. " स्यादावर्तोऽम्भसां भ्रमः " इत्यमरः । आवर्तमनोज्ञा ( वर्तुलाकारात्मनोहरा ) नाभिर्यस्याः सा । इदं च नदीसाम्यार्थमुक्तम् । अन्यवधूरन्यपत्नी भवित्री भाविनी सा कुमारी तं नृपम् । सागरगामिनी सागरं गन्त्री स्रोतोवहा नदी मार्गवशादुपेतं प्राप्तं महीधरं पर्वतमिव । [ शैलोपमया राज्ञः उन्नतिः । सागरोपमया भाविनः पत्युर्गाम्भीर्यं ध्वनितं । काव्यप्रकाशे । "इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः " —हे० ] । व्यत्ययादतीत्य गता । [ शैलदृष्टान्तेनातिक्रान्तस्य राज्ञस्तत्परित्यागे हृदयंभिदा सूच्यते—चा० ] ।

५३. अथ भुजिष्या किंकरी सुनन्दा । " भुजिष्यः किंकरो मतः " इति हलायुधः । अङ्गदाश्लिष्टभुजं [ अनेन मांसलत्व—चा० ] । केयूरनद्धबाहुं । [ आभरणप्रियत्वं—हे० चा० ] । सादितशत्रुपक्षं विनाशितशत्रुवर्गं हेमाङ्गदं नाम ( प्रसिद्ध ) कलिङ्गनाथमासेदुषीमासन्नामबालेन्दुमुखीं पूर्णेन्दुमुखीं बालां । [ " बालाषोडशवार्षिकी " इति रतिरहस्ये—हे० ] । इन्दुमतीं बभाषे ( जगाद ) ।

५४. महेन्द्राद्रिः । ( " महेन्द्रो मलयः सह्यः " इति वैजयन्ती ) । समानसारस्तुल्यसत्त्वः । [ महेन्द्रः इन्द्रः अद्रिः सूर्यः तयोः समानबलः—व० ] । असौ हेमाङ्गदो नाम महेन्द्रस्य कुलपर्वतस्य महोदधेः ( महासमुद्रस्य ) च पतिः स्वामी । " महेन्द्रमहोदधी एवास्य गिरिजलदुर्गे " इति भावः । यस्य । यात्रासु [ दिग्विजयप्रयाणेषु । कटकचङ्क्रमसमयेषु वा—सु० ] क्षरतां मदस्राविणां सैन्यगजानां छलेन ( व्याजेन ) महेन्द्रो महेन्द्राद्रिः पुरोऽग्रे यातीव ( गच्छति इव ) । अद्रिकल्पा अस्य गजा इत्यर्थः । [ पर्वतसमुद्रस्वामित्वेन दुर्धर्षत्वं—चा० ] ।

with benzoin ( or by adopting the reading शैलेयनद्धानि ' covered by moss and such other vegetable plants growing on rocks ' ), you may look at the dance of peacocks, in the beautiful caves of the mountain Govardhana in the rainy season

52. After this, she, who was destined to become the wife of another, with a beautiful navel resembling a whirlpool, passed by that king, as a river, bent on going to the ocean, passes by a mountain accidently coming across its course.

53. Then the maid-servant spoke to the young damsel with a face like that of the full moon when she came, near the Lord of the Kalingas, Hemangada by name, on whose arm was fastened the shoulder ornament and who had destroyed the host of his enemies

54. "This king whose strength is equal to that of the mountain Mahendra, is the Lord of Mahendra and the great ocean, in his marches the mountain Mahendra itself walks as it were, in front, in the semblance of the army of sweat-streaming elephants."

ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां साञ्जनबाष्पसेके बन्दीकृतानामिव पद्धती द्वे ॥ ५५ ॥
यमात्मनः सद्मनि संनिकृष्टो मन्द्रध्वनित्याजितयामतूर्यः ।
प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥ ५६ ॥
अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥ ५७ ॥

५५. सुभुजः ( शोभनबाहुः ) चापभृतां ( धनुर्धराणां ) पुरोगो धनुर्धराग्रेसरो यः । बन्दीकृतानां प्रग्रहीतानाम् । " प्रग्रहोपग्रहौ बन्द्याम् " इत्यमरः । रिपुश्रियाम् ( अरिलक्ष्म्यां । रोदनवशात् ) साञ्जनः ( सकज्जलः ) बाष्पसेकः ( अश्रुसेचनं ) ययोस्ते । कज्जलमिश्राश्रुसिक्ते इत्यर्थः । [ सांजनत्वेन ज्याघाततुल्यता-घा० ] । पद्धती ( मार्गौ ) इव । द्वे ज्याघातानां मौर्वीकिणानां रेखे राजी भुजाभ्यां बिभर्ति ( धारयति ) । द्विवचनात्सव्यसाचित्वं गम्यते । रिपुश्रियं भुजाभ्यामवाहरणात्तद्गतरेखयोस्तत्पद्धतित्वेनोत्प्रेक्षा । तयोः श्यामत्वात्साञ्जनाश्रुसेकोक्तिः ।

५६. आत्मनः ( शुद्धियुक्त ) सद्मनि सुप्तं यं हेमाङ्गदं संनिकृष्टः समीपस्थोऽत एव प्रासादवातायनैः ( प्रासादगवाक्षैः ) दृश्यवीचिः [ प्रेक्षणीयकल्लोलः । अतिसमीपवासप्रसङ्गादेतत्कथनं । यद्वा । योऽन्यस्य कम्पहेतुः सोऽप्युद्दोष्यः तस्या हर्षं करोतीति धैर्योक्तिः–हे० ] । मन्द्रेण गम्भीरेण । " मन्द्रस्तु गम्भीरे " इत्यमरः । ध्वनिना ( शब्देन ) त्याजितं विवर्जितं यामस्य तूर्यं प्रहारावसानसूचकं वाद्यं येन स तथोक्तः । " द्वौ यामप्रहरौ समौ " इत्यमरः । अर्णव एव प्रबोधयति । अर्णवस्यैव तूर्यकार्यकारित्वात्तद्वैयर्थ्यमित्यर्थः । समुद्रस्यापि सेव्यः किमन्येषामिति भावः । [ वैतालिकाभावश्चोक्तः–हे० ] ।

५७. अनेन राज्ञा सार्धं तालीवनैर्मर्मरेषु मर्मरति ध्वनत्सु । [ अनेनोद्यानाभावश्चोक्तः–हे० ] । " अथ मर्मरः । स्वनिते वस्त्रपर्णानाम् " इत्यमरवचनाद्गुणपरस्यापि मर्मरशब्दस्य गुणिपरत्वं प्रयोगादवसेयम् ।

---

55. "This Hemangada, the chief of all the bow-men, has an elegant pair of hands, and bears on his shoulders two marks of lines caused by the strokes of the bow-strings, the two foot-paths, as it were, moist with tears mixed with collyrium, of the Fortune of the enemies, when taken prisoner ( i e when seized and carried off by Hemangada in his arms )."

56. "The ocean itself, the waves of which are seen from the windows of his palace, and the deep resounding roars of which surpass the sound of the watch drum being close at hand, awakes him as it were, when slept in his palace-room."

57. "Sport, O princess, with this king on the seashore where the palm tree groves make a rustling noise, and where you will have your drops of perspiration removed by breezes that bring with them the sweet scent of the clove flowers from other islands "

---

55. E. G. H. and Vijay. °लेखे. for °रेखे.; A. B. G. रिपुश्रियां: D. रिपुश्रिया.; C. E. H. He. Chà., Din. Va. Dhár. Vijay. and Vija., रिपुश्रियः; D2. and Su. रिपुश्रियः. C. E. H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., बन्दीकृतायाः for बन्दीकृतानां. Between 55-56 D2. He. Din. and Châ., read " रणेष्वमित्रीणतया प्रकाशः शरासनज्यानिकषे भुजाभ्यां । विस्पष्टलेखौ रिपुविक्रमस्य निर्वाणमार्गाविव यो बिभर्ति " ।

56. A. and He. संनिकृष्टः, D. संनिकृष्टं, B. C. Chá. Din. Va. Vijay. and Su., संनिविष्टं., D2. E. G. सनिविष्टः; D. Din. and Chà., आलोक्य वेलातटपूगमालः for प्रासादवातायनदृश्यवीचिः, So also noticed by He. H. reads:-" यमात्मनः सद्मनि सौधजालैरालोक्य वेलातटपूगमाली । मंद्रध्वनित्याजितयामतूर्यः प्रबोधयत्यर्णव एव सुप्तम् ॥ "

57. D. and Su., तटेषु for तीरेषु.

प्रलोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम् ।
तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५८ ॥

अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥ ५९ ॥

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ६० ॥

अम्बुराशेः समुद्रस्य तीरेषु ( तटेषु ) द्वीपान्तरेभ्यः ( अन्यद्वीपेभ्यः ) आनीतानि लवङ्गपुष्पाणि देवकुसुमानि येषां तैः । " लवङ्गं देवकुसुमम् " इत्यमरः । मरुद्भिर्वातैरपाकृताः प्रशमिताः [ सुरतक्रीडाजनिताः—चा० ] स्वेदस्य लवा बिन्दवो यस्याः सा तथाभूता सती त्वं विहर क्रीड । [ द्वीपान्तरात् लवङ्गपुष्पाण्याहाय मुक्तामणीनिव विहारोद्भवान् स्वेदलवान् अपहरिष्यन्तीति भावः—हे० ] ।

५८. आकृत्या रूपेण लोभनीयाकर्षणीया । [ यादृशेन रूपेणान्यः प्रलोभ्यते तादृशं रूपमस्मिन्नृपे नास्तीत्यर्थः—चा० ] । न तु वर्णनमात्रेणेत्यर्थः । विदर्भराजावरजा भोजानुजेन्दुमती तया सुनन्दयैवं ( अनेन प्रकारेण ) प्रलोभितापि प्रवर्तितापि । नीत्या पुरुषकारेण दूरकृष्टा दूरमानीता लक्ष्मीः ( श्रीः ) प्रतिकूलं ( पराङ्मुखं ) दैवं ( भाग्यं ) यस्य तस्मात्पुंस इव । तस्मादङ्गराजादपावर्तत प्रतिनिवृत्ता ।

५९. अथ द्वारे नियुक्ता दौवारिकी सुनन्दा । " तत्र नियुक्तः " इति ठक्प्रत्ययः । " द्वारादीनां च " इत्यौ आगमः । आकारेण देवसरूपं देवतुल्यम् । उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्जतीरवर्तिनागपुरस्य नाथमेत्य प्राप्य । हे चकोराक्षि, । [ रक्तत्वाच्चकोरस्य अक्षिणीवाक्षिणी यस्याः सा । " चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे " इति रतिरहस्योक्तः पद्मिनीत्व—हे० ] । इतो विलोकयेति पूर्वानुशिष्टां पूर्वमुक्तां भोजस्य राज्ञो गोत्रापत्यं स्त्रियं भोज्यामिन्दुमतीम् । " क्रौड्यादिभ्यश्च " इत्यत्र भोजात्क्षत्रियादित्युपसंख्यानात्ष्यङ्प्रत्ययः । " यङश्चाप् " इति चाप् । निजगाद ( बभाषे ) । इतो विलोकयेति पूर्वमुक्त्वा पश्चाद्वक्ष्यं निजगादेत्यर्थः ।

६०. अंसयोरर्पिताः । लम्बन्त इति लम्बाः । हारा ( मुक्तावल्यः ) यस्य सः । हरिचन्दनेन । [ " चन्दने कुंकुमच्छाये चंदनं हरिचन्दनम् " इति तेन—हे० ] । गोशीर्षाख्येन । चंदनेन " तैलपर्णिकगोशीर्षे हरिच-

58 At last the younger sister of the king of the Vidarbhas, who was of a most attractive figure and who though tempted in this way by her (i. e. Sunanda), did turn away from him, as the goddess of Fortune turns away from an unfortunate fellow though brought from a distance by his manly exertions.

59. After this the door keeper सुनन्दा came to the lord of the city called नागपुर, who resembled a god (in beauty of form), and spoke to the princess of Bhoja who had been previously addressed in the following manner — "O you with eyes like those of the चकोर bird, please look this way."

60. "Here sits the king of the Pandus, who has applied scented cosmetics to his body from whose shoulders hang down the pearl--garlands and who looks like the King of the mountains

58. D. H. प्रलोभिता सत्यपि सगतभ्रू: for प्रलोभिताप्याकृतिलोभनिया. So also noticed by He.

59. E. has उरगाक्षस्य for उरगाख्यस्य.; E. has कैवारिकी for दौवारिकी.; A. Chà. Dhar. and Vija., देवसरूपं, D देवस्वरूपं, B. C. E. G. H. He. Va. Vijay. and Su.. देवसमानं; B. E. नागाह्वनाभं for पूर्वानुशिष्टां. H. has भोगाय for भोज्याम्.

60. B. C. E. Va. Vijay., and Vija. अंसार्पितलम्बि° for असार्पितलम्ब°; A. D. H. He. and Va., कृतांगरागः for क्लृप्तांगरागः.

विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः ।
प्रीत्याश्वमेधावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६१ ॥

अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः ।
पुरा जनस्थानविमर्दशङ्की संधाय लङ्काधिपतिः प्रतस्थे ॥ ६२ ॥

अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥ ६३ ॥

न्यनमञ्जियाम् ” इत्यमरः । क्लृप्ताङ्गरागः सिद्धानुलेपनोऽयं पाण्डूनां जनपदानां राजा पाण्ड्यः । “ पाण्डोर्जनपदशब्दात्क्षत्रियाड्ड्यण्वक्तव्यः ” इति ड्यण्प्रत्ययः । तस्य राजन्यपत्यवदितिवचनात् । बालातपेन रक्ता अरुणाः सानवः (शिखराणि) यस्य स सनिर्झरोद्गारः प्रवाहस्यन्दनसहितः । “ वारिप्रवाहो निर्झरो झरः ” इत्यमरः । अद्रिराजः ( मेरुः ) इवाभाति । [ अत्र वाक्यार्थवृत्तिरुपमा । यद्वामनः । “ तद्द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् ” इति–हे० ] ।

६१. विन्ध्यस्य नाम्नो महाद्रेः । ( कर्मणि षष्ठी ) । तपनमार्गनिरोधाय वर्धमानस्येति शेषः । संस्तम्भयिता निवारयिता निःशेषं पीत उज्झितः पुनस्त्यक्तः सिन्धुराजः समुद्रो येन सोऽगस्त्योऽश्वमेधस्यावभृथे दीक्षान्ते कर्मणि । “ दीक्षान्तोऽवभृथो यज्ञः ” इत्यमरः । आर्द्रमूर्तेः ( आर्द्रा जलकणयुक्ता मूर्तिः शरीरं यस्य तस्य तथोक्तस्य ) । स्नातस्येत्यर्थः । यस्य पाण्ड्यस्य प्रीत्या स्नेहेन । न तु दाक्षिण्येन । सुस्नातं पृच्छतीति सौस्नातिकः । [ सुखेन स्नातः इति पृच्छति यः स सौस्नातिकः–सु० ] । भवति । पृच्छतौ सुस्नातादिभ्य इत्युपसंख्यानाट्ठक् । [ अगस्त्यस्य माहात्म्येन पाण्ड्यमहिमाप्युक्तो भवति–हे० अनेन नायकोत्कर्षः–चा० ] ।

६२. [“स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ”इत्यमरः–हे०] । पुरा पूर्वं जनस्थानस्य खरालयस्य विमर्दशङ्की दृप्त उद्धतो लङ्काधिपती रावणो दुरापं दुर्लभमस्त्रं ब्रह्मशिरोनामकं हरादाप्तवता येन पाण्ड्येन ( सह ) संधाय (मैत्रीं कृत्वा) । इन्द्रलोकावजयायेन्द्रलोकं जेतुं प्रतस्थे । [ पुरा पाण्ड्याद्भीतो रावणः शिवप्रसादाद्ब्रह्मास्त्रं प्राप्य ।–चा० ] । इन्द्रविजयिनो रावणस्यापि विजेतेत्यर्थः ।

६३. महाकुलीनेन महाकुले जातेन । [ यद्वा महती या कुः पृथ्वी तत्र लीनेन–सु० ] । “ महाकुलादञ्खञौ ” इति खञ्प्रत्ययः । अनेन पाण्ड्येन पाणौ त्वदीये विधिवद्यथाशास्त्रं गृहीते सति गुर्वी गुरुः । “ वोतो गुणवचनात् ” इति ङीष् । महीव रत्नैरनुविद्धा व्याप्तोऽर्णव एव मेखला यस्यास्तस्याः । इदं वि-

---

whose summits are reddened with the rays of the morning--sun and which has rivulets flowing downwards ”

61 “ The sage Agastya, the subduer of the great mountain Vindhya and by whom the ocean was drunk up to a drop and poured forth again, became through affection the catechiser on holy ablutions of him whose person was wet with the concluding holy baths of the As'vamedha sacrifice. ”

62. “ In former times the haughty king of लंका, fearing the destruction of जनस्थान, made peace with this king who had obtained from Siva a missile which was hard to be overcome, and then set out for the conquest of the regions of Indra ”

63. “ When this prince of an illustrious race has taken your hand in marriage according to the rule, you may like the great earth become a fellow-wife to the southern quarter having for its girdle the ocean abounding in jewels ”

---

61. E. has सिन्धुनाथः for सिन्धुराजः; D. अगस्तिः for अगस्त्यः So also noticed by He.

62. A. C. D. E. स्रष्टः for दृप्तः, So also Hemàdri notices this reading and says:—स्रष्टः इति पाठे उद्युक्तः । स्रष्टा ब्राह्मणविरोधे [ वधे ] इतिवत् ।

ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्त्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ ६४ ॥
इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥ ६५ ॥
स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥ ६६ ॥
संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ ६७ ॥

शोषणं मय्यामिन्दुमत्यां च योग्यम् । दक्षिणस्या दिशः सपत्नी । [ इति पिण्डगन्धलोहितकुक्षिविणीपक्षे-ष्वपीति केचित्–हे० ] । भव । [ इति वैराग्य हेतुः–हे०चा० ] । अनेन सपत्न्यन्तराभावो ध्वन्यते ।

६४. ( हे इन्दुमति ) ताम्बूलवल्लीभिः नागवल्लीभिः परिणद्धाः परिरब्धाः पूगाः क्रमुका यासु तासु । [इ-ति शैत्यं–हे० ] । " ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि " इति " घोण्टा तु पूगः क्रमुकः " इति चामरः । एलालताभिरालिङ्गिताश्चन्दना मलयजा यासु तासु । [ इति सौरभ्य–हे० ] । " गन्धसारो मलयजो भद्रश्री-श्चन्दनोऽस्त्रियाम् " इत्यमरः । तमालस्य तापिच्छस्य पत्त्राण्येवास्तरणानि यासु तासु [ इति मार्दवं–हे० ] । " कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि " इत्यमरः । मलयस्थलीषु ( मलयाद्रिभूमिषु ) शश्वन्मुहुः स-दा वा । [ शश्वच्छब्देन ताम्बूललतादीनामुद्दीपनविभावनानामाधिक्यं सूच्यते–चा० ]। रन्तुं ( क्रीडितुं ) प्र-सीदानुकूला भव ।

६५. ( हे इन्दुमति ) असौ नृप इन्दीवरश्यामतनुः ( इन्दीवरं नीलोत्पलं तद्वत् श्यामा तनुः शरीरं यस्य सः ) । त्वं रोचना गोरोचनेव गौरी शरीरयष्टिः ( गात्रलता ) यस्याः सा । अतस्तडित्तोयदयोर्विद्युन्मे-घयोरिव । [ मेघविद्युतोः क्षणिकयोगाद्वैराग्योक्तिः । राज्ञो नीलत्वं तोयदपदेन–चा० ] । वां युवयोर्योगः स-मागमोऽन्योन्यशोभायाः परिवृद्धयेऽस्तु । [ अनेन परस्परशोभा नान्येषामित्युक्तं दक्षिणत्वं च–हे० ] ।

६६. विदर्भाधिपतेर्भोजस्य स्वसुः इन्दुमत्याश्चेतसि ( मनसि ) तदीयः सुनन्दासंबन्ध्युप-देशो वाक्यम् । दिवाकरस्य ( सूर्यस्य ) अदर्शनेन । [ अनेन अजस्य सूर्यनिभत्वमुक्तं–हे० ] । बद्धकोशे मुकुलितेऽरविन्दे ( कमले ) नक्षत्रनाथांशुश्चन्द्रकिरण इव । अन्तरमवकाशं न लेभे । [ एतेन दिवसकरकम-लयोरिवेन्दुमत्यभीप्स्याजकुमारस्य मनसश्च स्नेहाधिक्यं सूच्यते–चा० ] ।

६७. पतिंवरा सेन्दुमती रात्रौ संचारिणी ( संचरतीति संचारः सोऽस्याः अस्तीति संचारिणी । पुरुषगृही-

64 Be pleased O princess, to sport often times in the dales of the Malaya mountain,over-spread with Tamala leaves, where the sandle trees are encircled (lit embraced) with cardamom creepers, and where the betel trees are enclosed within a ring of ताम्बूल creepers."

65. "This prince has a body dark like the blue lotus, and your bodily frame is as fair as the yellow-pigment. May the union of both of you set off each other's beauty, like that of lightning and cloud."

66. But Sunanda's address did not find footing in the heart of the sister of the lord of the Vidarbhas, as the rays of the lord of stars (the moon) find no room in the daylotus with its receptacle closed in consequence of the disappearance of the sun

67. Whatsoever king, she who was bent on choosing a husband, passed by, every one of them

64. Vijayānandsevaka has ताम्बूलपर्ण°. Vijay शश्वत्प्रसीद रन्तुं for रन्तुं प्रसीद शश्वत्.
65. H. has °श्यामरुचिर्नृपोऽयं for °श्यामतनुर्नृपोऽसौ.
66. D. G. H. Din. and Chā., तारापतेरंशुः for नक्षत्रनाथांशुः.
Between 67–68. Vijay. reads " यदा यदा राजकुमारिकासौ न पूर्वपूर्वं प्रणयांचकार । तदा तदा नामितरेषु रेषामाशालता पल्लविनी बभूव ॥ "

तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्रसितैर्नुनोद ॥ ६८ ॥
तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६९ ॥
तस्मिन्समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य ।
प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥ ७० ॥

तस्माद् ) दीपशिखेव ( प्रदीपार्चिरिव ) यं यं भूमिपालं व्यतीयायातीत्य गता स स भूमिपालः । स सर्व इत्यर्थः । " नित्यवीप्सयोः " इति वीप्सायां द्विवचनम् । नरेन्द्रमार्गे राजपथेऽट्टाख्यो गृहभेद इव । [ पण्यगृहमिव-हे० क्षौमाख्यो मंदिरभेदः इव-चा० ] । " स्यादट्टः क्षौममस्त्रियाम् " इत्यमरः । विवर्णभावं विच्छायत्वम् । अट्टस्तु तमोवृतत्वम् । प्रपेदे । [ इन्दुमत्योक्तानां राज्ञां वैवर्ण्यकथनं अर्थ लप्स्यमानस्य कुमारस्य सौभाग्यातिशयः सूचितः-चा० ] ।

६८. तस्यामिन्दुमत्यामुपस्थितायामासन्नायां सत्यां रघोः सूनुरजो मां वृणीत न वेति समाकुलः संशयितोऽभूत् । अथास्याजस्य वामेतरो वामादितरो दक्षिणो बाहुः । केयूरं बध्यतेऽत्रेति केयूरबन्धोऽङ्गदस्थानम् । तस्योच्छ्वसितैः स्फुरणैः संशयं नुनोद । [ " वामभागस्तु नारीणां श्रेष्ठः पुंसां तु दक्षिणः । दाने देवादिपूजायां स्पन्दे ऽलंकरणेऽपि च " इति निमित्तनिदानं । तथा । " अंगविस्फुरणं नृणां दक्षिणं सर्वकामदं । तदेव शस्यते सद्भिर्नारीणामप्रदक्षिणं "-हे० । दक्षिणभुजस्फुरणं कान्तालिङ्गनं कथयति-चा० ] ।

६९. कुमारी । सर्वेष्ववयवेष्वनवद्यमदोषं तमजं प्राप्य । अन्योपगमाद्राजान्तरोपगमाद्व्यावर्तत निवृत्ता । तथा हि । षट्पदाली भृङ्गावलिः । प्रफुल्लतीति प्रफुल्लं विकसितम् । पुष्पितमित्यर्थः । प्रपूर्वात्फुल्लतेः पचाद्यच् । फलतेस्तु प्रफुल्तमिति पठितव्यम् । " अनुपसर्गात्- " इति निषेधात् । इत्युभयथापि न कदाचिदनुपपत्तिरित्युक्तं प्राक् । सहकारं चूतविशेषमेत्य ( प्राप्य ) । " आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः " इत्यमरः । वृक्षान्तरं न काङ्क्षति ( नेच्छति ) । न हि सर्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाषः स्यादित्यर्थः ।

७०. तस्मिन्नजे समावेशिता संक्रामिता चित्तवृत्तिः ( भावबन्धनं ) यया ताम् । इन्दोः प्रभेव प्रभा यस्यास्ताम् । आह्लादकत्वादिन्दुसाम्यम् । इन्दुमतीमवेक्ष्यानुक्रमज्ञा ( अनुक्रमं परिपाटीं जानातीति अनुक्रमज्ञा । क्रमवित् ) वाक्यपौर्वापर्याभिज्ञा सुनन्देदं वक्ष्यमाणं सविस्तरं सप्रपञ्चम् । " प्रथने वावशब्दे " इति घञो निषेधात् " ऋदोरप् " इत्यप्प्रत्ययः । " विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः " इत्यमरः । वाक्यं वक्तुं प्रचक्रमे ।

---

was turned pale (lit. got into a state of pale facedness) like a buttress on the royal-road when the moving flame of a light (or torch) goes beyond it at night.

68. When she came near, the son of Raghu became doubtful as to whether she would choose him or not. But the throbbing of his right arm, which had loosened the bands of his shoulder-ornaments, completely removed his doubt.

69. At last the princess approached Aja who was faultless in all his limbs and gave up the idea of going to any other prince, as a row of bees does not long for any other tree when it reaches a full blossomed mango tree.

70. Sunanda, versed in the art (lit. proper order) of speech, having observed Indumati, possessed of the splendour of the moon, to have fixed her heart (lit. to have fixed her tendency of mind) on him proceeded to make the following observation in detail.

---

68. D. E. Din. and Cha., मा for मां; D. Din. and Cha., आश्वासितस्तत्क्षणमंसकूटे । वामेतरेण स्फुरता भुजेन for the last two Padas. So also noticed by He.

69. G. reads षट्पदालिः for षट्पदाली.

70. H. and Vijay. read अवेत्य for अवेक्ष्य.

इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ७१ ॥

महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्त्रलेखाः ॥ ७२ ॥

ऐरावतास्फालनविश्लथं यः संघट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ७३ ॥

७१. इक्ष्वाकोर्मनुपुत्रस्य वंश्यो वंशे भवः । नृपाणां ककुदं श्रेष्ठः [ प्रधानं । प्रधानमेव प्राधान्यमिति क्षीरस्वामी–हे० ] । " ककुद्वत् ककुद श्रेष्ठ वृषांगे राजलक्ष्मणि " इति विश्वः । आहितलक्षणः प्रख्यातगुणः ( गुणैः प्रधानः ) । " गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ " इत्यमरः । ककुदि वृषांसे तिष्ठतीति ककुत्स्थ इति प्रसिद्धः कश्चिद्राजाभूत । यतः ( यमारभ्य ) ककुत्स्थादारभ्योन्नतेच्छा महाशयाः । " महेच्छस्तु महाशयः " इत्यमरः । उत्तरकोसलेन्द्रा राजानो दिलीपादयः श्लाघ्यं प्रशस्तम् । ककुत्स्थस्यापत्यं पुमान्काकुत्स्थ इति शब्दं संज्ञां दधति बिभ्रति । तन्नामसंस्पर्शोऽपि वंशस्य कीर्तिकर इति भावः । पुरा किल पुरंजयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया ( वृषपर्वनामानं दैत्यमारभ्य ) निखिलमसुरकुलं निहत्य ककुत्स्थसंज्ञां लेभे । इति पौराणिकी कथानुसंधेया । वक्ष्यते चायमेवार्थ उत्तरश्लोके ।

७२. यः ककुत्स्थः । [ ककुदि वृषाग्रे तिष्ठतीति ककुत्स्थः । ककुदशब्दोऽप्यस्तीति क्षीरस्वामी–हे० ] । संयति युद्धे । महानुक्षा महोक्षः । " अचतुर– " इत्यादिना निपातः । तस्य रूपमिव रूपं यस्य तं महेन्द्रमास्थायारुह्य । अत एव प्राप्ता ( लब्धा ) पिनाकिन ईश्वरस्य लीला ( श्रीः ) येन स तथोक्तः सन्बाणैः ( शरप्रपातैः ) असुराङ्गनानां ( दैत्यस्त्रीणां ) गण्डस्थलीः ( कपोलपालीः ) प्रोषितपत्त्रलेखा निवृत्तपत्त्ररचनाश्चकार । तद्भर्तृनसंहारादित्यर्थः । न हि विधवाः प्रसाध्यन्त इति भावः । [ पुरा किल इक्ष्वाकुवंश्यः पुरंजयो नाम राजा इन्द्रसाहाय्यार्थं वृषस्वरूपं वृषं ( इन्द्रं ) आरुह्य वृषपर्वनामानं असुरं हतवान् ततः प्रभृति ककुत्स्थ इत्यागमः–हे० ] ।

७३. यः ( पुरंजयो नाम ) ककुत्स्थ ऐरावतस्य स्वर्गजस्यास्फालनेन ताडनेन विश्लथं शिथिलमङ्गदमैन्द्रमङ्गदेन स्वकीयेन संघट्टयन्संघर्षयन् । ( महोक्षरूपत्यागात् ) । स्वामग्र्यां श्रेष्ठां मूर्तिमुपेयुषोऽपि प्राप्तस्यापि ।

71. And said — " they say that there was a king named Kakustha, descended from the race of Ikshvaku — the king who was the foremost of all the kings, and noted for his good qualities; and from whom the lords of the Uttarkosalas of noble aspirations inherit the dignified title of Kakustha."

72. " Playing the Pinakin's role by mounting upon the great Indra in the form of a great bull, he by means of his arrows rendered the cheeks of the Asura females, devoid of amorous paintings."

73. " Causing his own [illegible] of Indra loosened by the blows inflicted on the celestial elephant, the king पुरंजय occupied half the seat of the Destroyer of the mountains, even when Indra had assumed his original excellent form."

71. Vijay. reads आहृतलक्षण: for आहितलक्षण:.

72. H. reads 'पिनाकलील: for 'पिनाकिलील:; C.E.Vijay. and He., गण्डस्थली: for गण्डस्थली:.

73. H. reads ऐरावणास्फालन° for ऐरावतास्फालन°; H. has स्वामिव for स्वामपि. A. G. with He. Chā. Din. Va. Su. Dhar. and Vija., अधितष्ठौ. B C. E.H. and Vijay. अधितस्थौ. D. अधितस्थे.

जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४ ॥
यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ७५ ॥
पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७६ ॥

[ उपेयाय इति उपेयिवान् तस्य उपेयुषः । नाश्वानिति साधुः । न चात्रोपसर्गस्तन्त्रं । तथा हि किराते । "गुणानुरागादिव सख्यमीयिवान्न बाधतेऽस्य त्रिगुणः परस्परं"–हे०] । गोत्रभिद इन्द्रस्यार्धमासनस्यार्धासनम् । "अर्धं नपुंसकम्" इति समासः । ("अधिशीङ्स्थासां कर्म") । अधितष्ठावधिष्ठितवान् । स्थादिष्वभ्यासेन चाभ्यासस्येत्यभ्यासेन व्यवायेऽपि षत्वम् । न केवलं महोक्षरूपधारिण एव तस्य ककुदमारुक्षत् । किं तु निजरूपधारिणोऽपीन्द्रस्यार्धासनमारूढवानित्यपिशब्दार्थः । अथ वा । अर्धासनमपीत्यपेरन्वयः ।

७४. उरुकीर्तिर्महायशाः कुलप्रदीपो वंशप्रदीपको दिलीपो नृपतिस्तस्य ककुत्स्थस्य कुले जातः किल । यो दिलीपः शक्राभ्यसूयाविनिवृत्तये ( इन्द्रद्वेषपरिहाराय )। न त्वशक्त्येति भावः । एकेनोनाः शतं क्रतवो यस्य स एकोनशतक्रतुः । तस्य भावे तत्त्वेऽतिष्ठत् । इन्द्रप्रीतये शततमं क्रतुमवशेषितवानित्यर्थः ।

७५. यस्मिन्दिलीपे महीं ( भुवं ) शासति ( रक्षति ) सति । विहरन्त्यत्रेति विहारः क्रीडास्थानम् । तस्य । [ यद्वा । विहारस्य राजमार्गस्योपवनस्य वा पंथाः–हे०] । अर्धपथे । [ संकेतपथे वा–चा० ] । निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम् [ दतीनामिति–हे० ] । "वाणिनी नर्तकीमत्ताविदग्धवनितासु च" इति विश्वः । "वाणिन्यौ नर्तकीदूत्यौ" इत्यमरश्च । अंशुकानि वस्त्राणि वातोऽपि ( वायुरपि ) नास्रंसयन्नाकम्पयत् । आहरणायापहर्तुं को हस्तं लम्बयेत् । तस्याज्ञासिद्धत्वादकुतोभयसंचाराः प्रजा इत्यर्थः । अर्धश्चासौ पन्थाश्चेति विग्रहः । समप्रविभागे प्रमाणाभावान्नैकदेशिसमासः ।

७६. विश्वजितो नाम महाक्रतोः । [ सर्वदक्षिणत्वात्क्रतोर्महत्त्व–हे० ] । प्रयोक्तानुष्ठाता तस्य । [ इति पदं काकाक्षिगोलकन्यायेनोभयत्र योज्यं–चा० ] । दिलीपस्य पुत्रो रघुः पदं ( राज्यं स्थानं वा । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ) । पदमेव प्रशास्ति पालयति । यो रघुश्चतसृभ्यो दिग्भ्य आवर्जिताहृता संभृता सम्यग्वर्धिता च या तां चतुर्दिगावर्जितसंभृतां विभूतिं संपदं मृत्पात्रमेव

74. "It is said that in his race was born the king Dilipa of wide fame, the light of his family, who stood in the position of a performer of ninety-nine sacrificial ceremonies in order to desist from the spite of Sakra."

75. When he was reigning over the earth, even the breeze did not disturb the garments of drunken women fallen asleep on half the way to the pleasure ground. Who could then stretch forth his hand to take them away?"

76. His son Raghu, the performer of the great sacrifice called Vis'vajit, now reigns in his place, who turned his wealth, amassed by the sweeping of the four quarters, into the residue of an earthen pot" (retained nothing for himself except an earthen pot)

---

75. B. C. E. G. H. He. Va. Chà. Din. Su. Dhar. Vijay. and Vija., वाणिनीनां. A. कामिनीनां. D. पाणिनीनां. So also noticed by He.; D. विहारार्धपथे for विहारार्धपथे; B. C. E. G. H. He. Chà. Din. Va. Su. Dhar. Vijay. and Vija. आभरणाय for आहरणाय. The latter reading is also noticed by Chà and. He.

76. A. C. and He. चतुर्दिगावर्जितसंभृतां यः. B. चतुर्दिगावर्जनसंभृतायां. D. Chà. Din. Va. Su. and Vija., चतुर्दिगावर्जनसंभृतानां. E. and Vijay. चतुर्दिगावर्जनसंभृतां यो.

आरूढमद्रीनुदधीन्वितीर्णं भुजंगमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥ ७७ ॥
असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति ॥ ७८ ॥
कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥

( मृत्तिकाभाजनमेव ) शेषं यस्यास्तामकरोत् । विश्वजिद्यागस्य सर्वस्वदक्षिणाकत्वादित्यर्थः । [ "चतस्रः कीर्तयन्त्यष्टौ दश वा ककुभः कश्चित्" इति वाग्भटः—हे० ] ।

७७. किं च अद्रीनारूढम् । उदधीन्वितीर्णमवगाढम् । सकलभूगोलव्यापकमित्यर्थः भुजंगमानां ( सर्पाणां ) वसतिं ( निलयं ) पातालं प्रविष्टम् । ऊर्ध्वं स्वर्गादिकं गतं व्याप्तम् । इत्थं सर्वदिग्व्यापीत्यर्थः । [ यशसः सकर्मकत्वविवक्षायां कर्मधीरिति कर्तृपदाध्याहारो वा—हे० ] । अनुबध्नातीत्यनुबन्धि चाविच्छेदि [ अद्यापि प्रसरणशीलमिति—व० चा०म० ] । कालत्रयव्यापकं चेत्यर्थः । अत एवैवंभूतं यस्य यश इयत्तया ( इदं परिमाणमस्य इयान् इयतो भावः इयत्ता तया ) देशतः कालतो वा केनचिन्मानेन परिच्छेत्तुं परिमातुं नालं न शक्यम् ।

७८. असावजाख्यः कुमारः । त्रिविष्टपस्य स्वर्गस्य पतिमिन्द्रं जयन्तः ( ऐन्द्रिः ) इव । "जयन्तः पाकशासनिः" इत्यमरः । तं रघुमनुजातः । [ अनुजननं यद्यपि भ्रातृविषयं प्रसिद्धं । तथापि इह प्रकरणवशात् जन्यजनकविषयमित्यवगन्तव्यं । तस्माज्जात इत्ययमर्थोऽवतिष्ठते—हे० ] । तस्माज्जात इत्यर्थः । ( अनुर्लक्षणे तृतीयार्थे इति कर्मप्रवचनीयः ) । तज्जातोऽपि तदनुजातो भवति जन्यजनकयोरानन्तर्यात् । "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति क्तः । सोपसर्गत्वात्सकर्मकत्वम् । आह चात्रैव सूत्रे वृत्तिकारः—"श्लिषादयः सोपसर्गाः सकर्मका भवन्ति" इति । दम्यः शिक्षणीयावस्थः योऽजो गुर्वीं भुवनस्य धुरं ( भारं ) धुर्येण धुरंधरेण चिरनिरूढेन पित्रा सदृशं तुल्यं यथा तथा बिभर्ति । ( तुल्यार्थैरिति तृतीया ) । यथा कश्चिद्वत्सतरोऽपि धुर्येण महोक्षेण सम वहतीत्युपमालंकारो ध्वन्यते । "दम्यवत्सतरौ समौ" इत्यमरः ।

७९. कुलेन ( वंशेन ) कान्त्या लावण्येन नवेन वयसा यौवनेन विनयः प्रधानं येषां तैस्तैस्तैः ( प्रसिद्धैः ) गुणैः श्रुतशीलादिभिश्चात्मनस्तुल्यं स्वानुरूपममुमजं त्वं वृणीष्व । [ "ययोरेव समं वित्तं ययोरेव समं कुलं । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित्"—हे० ] । [ प्रतिवस्तूपमामाह—हे०चा० ] । किं बहुना । रत्नं ( माणिक्यं ) काञ्चनेन ( सुवर्णेन ) समागच्छतु संगच्छताम् । [ आङ्व्यवधानात्समो गमीति न तङ्—हे० ] । प्रार्थनायां लोट् । रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वादनयोः समागमः । [ त्वं तावत्स्त्रीरत्नं अयं म-

---

77. "His fame had [illegible] oceans (i.e. had reached as far as the ocean) [illegible] to the skies, was eternal ( i.e. [illegible] ) and [illegible] space [illegible] too much to be measured by any standard.

78. "This prince Aja [illegible] of the lord of the heavens, he bears the weighty yoke of the world [illegible] with [illegible] father, [illegible] as a young bull with one broken to the yoke."

79. Do you therefore elect him your [illegible] in birth, in beauty, youth, and in all ( other ) good qualities with modesty at their head [illegible] the jewel thus be united with gold."

---

77. B. C. E. G. H. He. Chā. Din. Va. Su. Dhar. Vijay. and Vija. प्रकीर्णं for वितीर्णं.

78. B. C. E. H. Va. Vijay. and Su., सदृशीं for सदृशं.

ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ ८० ॥
सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥
तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ ८२ ॥
सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥ ८३ ॥

हानुभावस्तु सुवर्णे अतो रत्नस्य काञ्चनेन योगः–सु० ] । प्रार्थ्यत इत्यर्थः । [ " वस्तु किंचिदुपन्यस्य न्यसनं तत्सधर्मिणः साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा " इति काव्यादर्शे–हे० ] ।

८०. ततः सुनन्दावचनस्य ( वाक्यस्य ) अवसानेऽन्ते नरेन्द्रकन्येन्दुमती लज्जां तनूकृत्य संकोच्य । ( ईषद्विहायेत्यर्थः ) । प्रसादेन मनःप्रसादेनामलया प्रसन्नया दृष्ट्या संवरणस्य स्रजा स्वयंवरणार्थं स्रजेव कुमारमजं प्रत्यग्रहीत्स्वीचकार । सम्यक्सानुरागमपश्यदित्यर्थः ।

८१. सा कुमारी यूनि तस्मिन्नजेऽभिलाषबन्धमनुरागग्रन्थिं शालीनतयाऽधृष्टतया । " स्यादधृष्टस्तु शालीनः " इत्यमरः । " शालीनकौपीने अधृष्टकार्ययोः " इति निपातः । वक्तुं न शशाक ( न समर्था बभूव )। तथाप्यरालकेश्याः [ अरालाः कुटिलाः अत एव सुन्दराः केशाः यस्याः तस्याः तथोक्तायाः । " अरालं वृजिनं जिह्मं " । " व्याजोऽपदेशो लक्ष्यं च " इति चामरः–हे० ] । सोऽभिलाषबन्धो रोमाञ्चलक्ष्येण पुलकव्याजेन । " व्याजोऽपदेशो लक्ष्यं च " इत्यमरः । गात्रयष्टिं ( शरीरलतां ) भित्त्वा निराक्रामत् । सात्त्विकाविर्भावलिङ्गेन प्रकाशित इत्यर्थः ।

८२. सख्यामिन्दुमत्यां तथागतायां तथाभूतायाम् ( अभिलाषबन्धं वक्तुमशक्तायां ) । दृष्टानुरागायां सत्यामित्यर्थः । सखी सहचरी । [ स्त्रीत्वे सखीशब्दव्यवहारो दृश्यते । तथा कुमारसम्भवे । " पूर्वं सखे त्वय्युपपन्नमेतत् " इति । तथा च किराते । " स किंसखा साधु न शास्ति योऽधिपम् " इति–हे० ] । " सख्यशिश्वीति भाषायाम् " इति निपातनान्ङीप् । वेत्रभृत्सुनन्दा । हे आर्ये पूज्ये, अन्यतोऽन्यं प्रति । ( अन्यमुद्दिश्य वा ) । व्रजाम इति परिहासपूर्वमाबभाषे । अथ वधूरिन्दुमत्येनां सुनन्दामसूयया रोषेण कुटिलं ददर्श । [ पुंसि वध्वाः प्रसिद्धाभिलाषत्वात्–हे० ] । अन्यागमनस्यासह्यत्वादित्यर्थः ।

८३. करभः करप्रदेशविशेषः । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः " इत्यमरः । करभ उपमा य-

---

80 Then at the conclusion of Sunanda's address the daughter of the king lessened her feeling of maidenly bashfulness and took the prince for her husband by her glance brightened with joy as if by a garland used in the self-electing marriage.

81 At first the princess was unable to express her love to the prince through her maidenly shyness; but at last the love of that curled haired damsel, having pierced through her bodily frame, rushed out by the mark of the hair erection on her body.

82. The cane-holder सुनन्दा, her female companion seeing her friend in such plight spoke to her in jest as follows—" Let us go, O noble lady, to another " Instantly the bride glanced at her with a frown of displeasure.

83. Then the princess, who had beautiful thighs comparable to the trunk of an elephant,

---

80. E. कुमारी for कुमार. B. H. He. Chá. Din. Va. Su. Dhar. & Vija. °मृदूकृत्य for °तनूकृत्य. So also noticed by He.
82. E. सख्याः for सख्यां, C. E. G. H. Chà. Din. Va. Vijay. and Su. वेत्रधरा for वेत्रभृद. So also noticed by He., D. एनं for एनां.
83. Vijay. reads स्रजं for गुणं.

तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥ ८४ ॥
शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५ ॥
प्रमुदितवरपक्षमेकतस्तत्क्षितिपतिमण्डलमन्यतो वितानम् ।
उषसि सर इव प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८६ ॥

पोस्ताविव यस्याः सा करभोपमोरूः । "ऊरूत्तरपदादौपम्ये" इत्यूङ्प्रत्ययः । सा कुमारी चूर्णेन । [ काश्मीरजातिमांगल्यद्रव्येण–चा० ] । मङ्गलचूर्णेन गौरं लोहितं । [ कुङ्कुमादिक्षोदारुण हरिद्राचूर्णपीतं वा–हे० ] । गुणं स्रजम् [ मधूकमालां–चा० ] । मूर्तं मूर्तिमन्तमनुरागमिव । धात्र्या उपमातुः सुनन्दायाः कराभ्यां रघुनन्दनस्याजस्य कण्ठे यथाप्रदेशं यथास्थानमासञ्जयामासासक्तं कारयामास । न तु स्वयमाससञ्ज । अनौचित्यात् । [ गुणस्तन्तुस्तेन माल्या लक्ष्यते । स्रक्शब्दं विहाय अनुरागोपमार्थे गुणशब्दः प्रयुक्तः । मूर्तमिवेत्यनुरागात्मकोऽपि गुणस्तस्मिन्समर्पित इति भावः–हे० ] ।

८४. वरेण्यो वरणीय उत्कृष्टः । ( श्रेष्ठो वा ) । वृञ एण्यः । सोऽजो मङ्गलपुष्पमय्या मधूकादिकुसुममय्या विशालवक्षःस्थले [ विस्तीर्णवक्षस्थले । स्थलशब्दः प्रशस्तार्थः–हे० ] । लम्बया लम्बमानया तया मङ्गलया स्रजा विदर्भराजावरजामिन्दुमतीं कण्ठार्पितौ बाहू एव पाशौ यया ताममंस्त ( अज्ञासीत् ) । मन्यतेर्लुङ् । बाहुपाशकल्पगुणममन्यतेत्यर्थः ।

८५. तत्र स्वयंवरे समगुणयोरन्योन्यगुणयोरिन्दुमतीरघुनन्दनयोर्योगेन प्रीतिर्येषां ते समगुणयोगप्रीतयः पौराः पुरे भवा जनाः । इयमजमुपगतेन्दुमती मेघमुक्तं ( अत एव व्यक्तं ) शशिनं शरच्चन्द्रमुपगता कौमुदी ( ज्योत्स्ना ) । अनुरूपं सदृशं जलनिधिम् ( समुद्रं ) अवतीर्णा प्रविष्टा जह्नुकन्या भागीरथी । तत्सदृशीत्यर्थः । [ उपमानोपमेययोरभेदोक्तिः–हे० ] । इत्येवं नृपाणां श्रवणयोः कटु परुषमेकमविसंवादि वाक्यमेकवाक्यं विवव्रुः ( ऊचुः ) । मालिनी वृत्तम् । ( " ननमयययुतेयं मालिनी भोगिलोकैः " ) ।

८६. एकत एकत्र प्रमुदिता हृष्टा वरस्य जामातुः पक्षो वर्गो यस्य तत्तथोक्तम् । अन्यतोऽन्यत्र वितानं शून्यम् । अप्राप्तत्वादप्रहृष्टमित्यर्थः । तत्क्षितिपतिमण्डलम् ( भूपवृन्दं ) । उषसि प्रभाते प्रफुल्लपद्मं ( विकसितपंकजं ) कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं सरः इव सरस्तुल्यम् । आसीत् । पुष्पिताग्रा वृत्तमेतत् ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये स्वयंवरवर्णनं नाम षष्ठः सर्गः ।

assigned to a proper place on the neck of his son which was red with auspicious powder and which appeared as it were her love incarnate by the hands of her nurse.

84. With that garland made of auspicious flowers and hanging over the surface of his broad chest, that eligible prince thought the younger sister of the king of the Vidarbhas to have thrown the cords of her arms round his neck.

85. The citizens, pleased with the union of like qualities gave forth a unanimous utterance, unpleasant to the ears of the kings that she was the moonlight united with the moon freed from clouds, or the daughter of Jahnu (Ganga) gone down to the Ocean (lit. the store of waters) who is equally fit for her.

86. The assembly of princes, having in one part, the delighted party of the bride-groom and in the other a gloomy mantle spread over the face of the circle of kings, resembled a lake at dawn, having in one part, the day-lotuses blooming and in the other the beds of moon-lotuses had gone to sleep.

84. E. reads °बाहुराशां for °बाहुपाशां; E. reads °वरजं for °वरजां.
86. E. reads भवति for उषसि.

# सप्तमः सर्गः

अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम् ।
स्वसारमादाय विदर्भनाथः पुरप्रवेशाभिमुखो बभूव ॥ १ ॥
सेनानिवेशान्पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः
भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेषेषु च साभ्यसूयाः ॥ २ ॥
सांनिध्ययोगात्किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः
काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ ३ ॥

भजेमहि निपीयैकं मुहुरन्यं पयोधरम् ।
मार्गन्तं बालमालोक्याश्वासयन्तौ हि दंपती ॥

१. अथ विदर्भनाथो भोज. सदृशेनोपयन्त्रा ( उपयच्छते स्वीकरोतीति उपयन्ता तेन ) वरेण युक्ताम् । अत एव साक्षात्प्रत्यक्षम् । " साक्षात्प्रत्यक्षतुल्ययोः " इत्यमरः । स्कन्देन युक्तां देवसेनामिव [ शक्रपुत्रीमिव–चा० सु० ] । देवसेना नाम देवपुत्री स्कन्दपत्नी । [ पूर्वं हि ब्रह्मणा निर्मिते देवसेनादैत्यसेने इन्द्रकन्येऽभूतां । तयोः पूर्वस्याः पतित्वे स्कन्दोऽभिषिक्तः इत्यागमः । " देवसेनेन्द्रकन्यायां सेनायाश्च दिवौकसां " इति विश्वः–हे० व० ] । तामिव स्थितां स्वसारं भगिनीमिन्दुमतीमादाय गृहीत्वा पुरप्रवेशाभिमुखो बभूव । [ " अथ कुमारगांगेयगौरेयाः ब्रह्मचारिणः " । " स्वामी महौजा एषा च देवसेनास्य योषित् " इत्यमरशेषे । तत्कथं ब्रह्मचारीति । ब्रह्मशब्देन वेदार्थं व्रतमुच्यते ब्रह्म चरतीति ब्रह्मचारी । व्रते णिनि इत्यमरटीकायां–हे० ] । उपजातिवृत्तं सर्गेऽस्मिन् ।

२. भोजस्य राज्ञो गोत्रापत्यं स्त्री भोज्या । तामिन्दुमतीं प्रति व्यर्थमनोरथत्वात् ( निरर्थकाभिलाषत्वात् ) रूपेष्वाकृतिषु । ( " रूपं स्वभावे सौन्दर्ये " इति विश्वः ) । वेषेषु नेपथ्येषु च साभ्यसूया वृथेति निन्दन्तः । [ सक्रोधाः–हे० ] । किं च । विभाते प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव मन्दभासः क्षीणकान्तयः पृथिवीक्षितो नृपा अपि सेनानिवेशाञ्छिबिराणि जग्मुः । ( " निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः " इति विश्वः ) । ननु क्रुद्धाश्चेद्युध्यन्तां तत्राह–

३. तत्र स्वयंवरक्षेत्रे शच्या इन्द्राण्याः । संनिधिरेव सांनिध्यम् । तस्य योगात्सद्भावाद्धेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणामभावः किल । [ शचीमनिष्ट्वा ये विघ्नमुपजनयन्ति ते त्वाचिरात्प्रलीयन्ते इति प्रवादः–हे० । इन्द्राण्याः सान्निध्यात् प्रत्यहं विना पाणिग्रहणपरिसमाप्तिर्भवतीति–चा० सु० ] । किलेति स्वयंवरविघातकाः शच्या विनाश्यन्त इत्यागमसूचनार्थम् । तेन हेतुना काकुत्स्थमजमुद्दिश्य समत्सरोऽपि सवैरोऽपि क्षितिपाललोकः शशाम नाक्षुभ्यत् । [ विवाहे शचीपूजनं नारदीयसंहितायां । " सपूज्य प्रार्थयित्वा तां शचीं देवीं गुणाश्रयां " इति । तथा च प्रयोगरत्नाकरे । ततो दाता पात्रस्थापिततण्डुलपुञ्जे शचीमावाह्य षोडशोपचारैः पूजयेत् तां च कन्यैवं प्रार्थयेत् । " देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि । विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे " इति–हे० ध० ] ।

1. Then the Lord of the Vidarbhas bent his steps towards the city, taking with him his sister, accompanied with a bride-groom equally qualified with her, like Devasena, ( the personification of the army of the gods ) with Skanda visibly present as it were.

2. The lords of the earth also, pale (dimmed in lustre) as stars at dawn, went to their respective encampments, indignant both with their personal beauty and apparel, on account of their hopes proving futile with respect to the sister of Bhoja.

3. Owing no doubt to the presence of S'achi there was total absence of obstructers to the

1. D. Din. and Chà., °राजः for °नाथः.
2. D. He. Va. Dhar. Vija. and Su., °भृतः for °क्षितः.
3. D. E. Din. and Chà., शच्या for शच्याः.

तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम् ।
वरः स वध्वा सह राजमार्गं प्राप ध्वजच्छायानिवारितोष्णम् ॥ ४ ॥
ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५ ॥
आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्द्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥

४. " यावत्तावच्च साकल्ये " इत्यमरः । [ यावत्ते राजानो गताः तावदेव स वरः—हे० चा० सु० ] । तावत्प्रकीर्णाः साकल्येन प्रसारिता अभिनवा नूतना उपचाराः [ पूर्णकुंभादयः—चा० ] पुष्पप्रकरादयः [ चंदनसेकः पुष्पविक्षेपादिः—हे० ] यस्य तं तथोक्तम् । इन्द्रायुधानीव [ इन्द्रायुधमिति कविप्रसिद्धिः—हे० । हीरकमणीनाम्—चा० सु० ] द्योतितानि [ नानारत्नदीप्तिसमूहेन—हे० ] प्रकाशितानि तोरणान्यङ्काश्चिह्नानि यस्य तम् । ध्वजानां छाया ध्वजच्छायम् । " छाया बाहुल्ये " इति नपुंसकत्वम् । तेन निवारित उष्णः । ( " उष्णः स्यादातपे ग्रीष्मे " इति विश्वः ) । आतपो यत्र तं तथा राजमार्गं स वरो वोढा वध्वा सह प्राप विवेश ।

५. ततस्तदनन्तरं चामीकरजालवत्सु । ( " चामीकरं जातरूपं " इत्यमरः ) । सौवर्णगवाक्षयुक्तेषु । ( " जालं समूह आनायगवाक्षक्षारकेष्वपि " इत्यमरः ) सौधेषु तस्याजस्यालोकने तत्पराणामासक्तानां । ( " तत्परे प्रसितासक्तौ " इत्यमरः ) । पुरसुन्दरीणां ( नगरप्रमदानां ) इत्थं वक्ष्यमाणप्रकाराणि त्यक्तान्यकार्याणि केशबन्धनादीनि येषु तानि विचेष्टितानि व्यापाराः [ हस्तपादादिचालनं चेष्टाः—सु० ] । नपुंसके भावे क्तः । बभूवुः । तान्येवाह पञ्चभिः श्लोकैः—

६. सहसालोकमार्गं ( यतोऽवलोकनं भवति तत्र स्थले ) गवाक्षपथं व्रजन्त्या ( गच्छन्त्या ) कयाचित्कामिन्योद्वेष्टनवान्तमाल्यः । उद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनः । अत एव वान्तमाल्यः ( उद्गतं विश्लिष्टं वेष्टनं बन्धो यस्य केशपाशस्य अत एव वान्तानि माल्यानि पुष्पाणि यस्मात् सः ) बन्धविश्लेषणोद्गीर्णमाल्यः । [ इत्यमरसिंहेण । 'वेष्टृ वेष्टने' इत्यस्मादेव बन्धव्याप्त्या " इति कविकल्पद्रुमः । अनुनासिकस्य क्वीति दीर्घः । उद्गिरणं मुक्तस्याधोगतिः । मुख्यार्थं परित्यज्य गौणार्थेऽप्येव वर्तमानो वान्तशब्दो न ग्राम्यः । तथा काव्यादर्शे । " निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयात् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते "—

self-electing marriage in the hall and hence the assemblage of the lords of the earth, though jealous of the good fortune of Kakutstha, remained quiet.

4. Meanwhile the bridegroom accompanied with his bride got to the royal road strewn with fresh offerings of flowers and decorated with the triumphal arches as brilliant as the rain-bow and the heat whereof was kept off by the shade of banners.

5. Then, freed from other engagements of the day, the actions of the beautiful city-women, who were intent upon looking at him through the golden windows of their mansions, became as follows.

6. A certain lady while suddenly hastening to the window (lit. a passage to look through)

4. E. has 'चारामिन्द्रा' for चारमिन्द्रा. D. He. 'द्योतन' for 'द्योतित'. The latter reading is also noticed by He.; D. प्रापद for प्राप. So also noticed by He.

5. D. and Dhar., सुरे for सु ; D. Su. and Dhar., मुक्तान्यकार्याणि H. मुक्तान्यकार्याणि, for त्यक्तान्यकार्याणि.

6. D. उद्वेष्टनवीतमाल्यः for उद्वेष्टनवान्तमाल्यः. D. बन्धः B. C. E. Vijay. Vija, Dhar., He. Su. Châ. Din. बद्धुं for बन्द्धुं. D's reading is also noticed by He.; A. B. C. E. H. Vijay. and Su., हि for च.

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ७ ॥
विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ८ ॥
जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ९ ॥

हे० ] । करेण रुद्धो गृहीतोऽपि च केशपाशः केशकलापः । " पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे " इत्यमरः । तावदालोकमार्गप्राप्तिपर्यन्तं बन्धुं बन्धनार्थं न संभावितः । [ एतेन कुतूहलातिशयः सूचितः—चा० ] । न चिन्तित एव । [ तावदेवशब्दाभ्यां बन्धस्य दूरावस्थोच्यते । यत्र करणे रोधमात्रमपि नास्ति तत्र बन्धस्तावद्दूरापास्तः इत्यर्थः—हे० ] ।

७. काचित् । प्रसाधिकयालंकर्त्र्यालम्बितं रञ्जनार्थं धृतं द्रवरागमेवार्द्रालक्तकमेव । [ एवकारेण कदाचिदपि अवस्थायाः गत्यभाव उक्तः—हे० । एवकारेण कदाचिदपि आर्द्ररागेपादमपकृष्य स्त्रियो नयन्ति—चा० ] । अग्रं चासौ पादश्चेत्यग्रपाद इति समानाधिकरणसमासः [यद्वा । पादस्याग्रं अग्रपादः । "वाहिताग्न्यादिषु" । भेदपक्षे पादस्य अग्रं इति षष्ठीसमासः—हे० ] । " हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदाभ्याम् " इति वामनः । [ गुणोऽवयवः गुणी अवयवी लक्षणं अभेदः—हे०] । तमाक्षिप्याकृष्य । उत्सृष्टलीलागतिस्त्यक्तमन्दगमना । ( त्यक्तविलासगमना इत्यर्थः ) । सती । आगवाक्षाद्गवाक्षपर्यन्तं पदवीं पन्थानमलक्तकाङ्कां ( अलक्तकः अङ्कः यस्यां तां तथोक्तां ) लाक्षारागचिह्नां ततान विस्तारयामास ।

८. अपरा स्त्री दक्षिणं विलोचनं ( नेत्रं ) अञ्जनेन संभाव्यालंकृत्य [ दक्षिणशब्देन संभ्रमात्क्रमभंगः सूचितः—हे० ] । संभ्रमादिति भावः । तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा सती तथैव शलाकामञ्जनतूलिकां वहन्ती ( कर्षन्ती ) सती वातायनसंनिकर्षं गवाक्षसमीपं ययौ ( जगाम ) । दक्षिणग्रहणं संभ्रमाद्व्युत्क्रमकरणद्योतनार्थम् । " सव्यं हि पूर्वं मनुष्या अञ्जते " इति श्रुतेः । [ निमित्तनिदाने च । " वामभागस्तु नारीणां श्रेष्ठः पुंसां तु दक्षिणः । दाने देवादिपूजायां शृङ्गारकरणेऽपि च " इति—हे० ] ।

९. अन्या स्त्री जालान्तरप्रेषितदृष्टिः ( जालान्तरे गवाक्षमध्ये प्रेषिता प्रेरिता दृष्टिर्लोचनं यया सा ) गवाक्षमध्यप्रेरितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वसनग्रन्थिम् । " नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः " इति विश्वः । न बबन्ध । किं तु [ गलितनीवीत्वात्—हे०—चा० ] नाभिप्रविष्टाभर-

---

did not at all think of binding the braid of hair though she held it in her hand and from the folds of which the flowers were dropping down on account of its being made loose through her haste, till she has reached the door of the window.

7. Drawing aside her fore-foot previously held up by the decorating maid ( helping maid ) even when the colour on it was still wet, a certain lady having given up her sportive way of walking, spread as far as the window a row of foot-prints marked by the red lac.

8. Having adorned the right eye with collyrium, another lady with her left eye destitute of it, went forth just so to the window carrying with her the pencil ( used in decoration ).

9. Another lady with her eyes directed to the holes of the window did not tie up the knot ( of her garment ), made loose by her walking, and remained standing there holding her garment by her hand, the lustre of the ornaments on which, had entered her navel.

---

8. D. and Dhar., प्रासाद°, for तथैव°; E. and Vijay. शिलाकामपरा वहन्ती for शलाकामपरा वहन्ती ।

9. A. and Dhar., जालान्तरप्रेक्षितदृष्टिः, D. जालान्तरप्रेरितदृष्टिः for जालान्तरप्रेषितदृष्टिः. So also He. notices these.

अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १० ॥
तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ११ ॥
ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ १२ ॥

नाभौ कङ्कणादीनां प्रभा यस्य तेन । प्रभैव नाभेराभरणमभूदिति भावः । हस्तेन वासः ( वस्त्रं ) अवलम्ब्य धृत्वा तस्थौ ( स्थिता । "वस्त्रमाच्छादनं वासः" इत्यमरः ) ।

१०. सत्वरं ( शीघ्रं ) उत्थितायाः कस्याश्चिदर्धाचिता मणिभिरर्धगुम्फिता दुर्निमिते संभ्रमादुत्क्षिप्ते । "डुमिञ्प्रक्षेपणे" इति धातोः कर्मणि क्तः । पदे पदे प्रतिपदम् । वीप्सायां द्विर्भावः । गलन्ती गलत्रत्ना सती रशना मेखला तदानीं गमनसमयेऽङ्गुष्ठमूलेऽर्पितं गर्भितं सूत्रमेव ( तन्तुरेव ) शेषः ( अवशिष्टं ) यस्याः सासीत् । [ अंगुष्ठमूले सूत्रमात्रेऽपि मेखलादि ग्रथ्यते इति स्त्रीणां जातिस्वभावः—चा० सु० ] ।

११. तदानीं सान्द्रकुतूहलानां ( सान्द्रमधिकं कुतूहलं कौतुकं यासां ) तासां स्त्रीणामासवगन्धो गर्भे येषां तैः । [ सान्द्रकुतूहलत्वेन मुखविकारात् पद्मगन्धाविर्भावः—हे० ] । विलोलानि ( चंचलानि ) नेत्राण्येव भ्रमरा येषां तैः । मुखैः ( आननैः ) व्याप्तान्तराः छन्नावकाशा गवाक्षाः । [ गवामक्षिणी इव गवाक्षाः । अक्ष्णोऽदर्शनादित्यच् । चक्षुःपर्यायोऽदर्शनशब्दः । "अवङ् स्फोटायनस्य" इत्यत्रेन्द्राक्षयोः षच् समाप्नोतीति नित्यमवङ्—हे० ] । सहस्रपत्राभरणा इव कमलालंकृता इव । "सहस्रपत्रं कमलम्" इत्यमरः । आसन् । ( "कुवलयितगवाक्षां लोचनैरङ्गनानां" इत्ययं समार्थः श्लोकांशः ) ।

१२. ता नार्यः । [ इत्यत्र अचोरहाभ्यां द्वे इति प्राप्तस्य द्वित्वस्य दीर्घादाचार्याणामिति शेषः । आचार्यग्रहणं पूजार्थं इति न्यासकार—हे० ] । रघोरपत्यं राघवमजम् । "तस्यापत्यम्" इत्यण्प्रत्ययः । दृष्टिभिरापिबन्त्योऽतितृष्णया पश्यन्त्यः । [ शब्दादि—हे० ] विषयान्तराणि ततोऽन्यान्विषयान्न जग्मुः । न विविदुरित्यर्थः । [ उत्प्रेक्षते—हे० ] । तथा हि । आसां नारीणां शेषेन्द्रियवृत्तिः । ( शेषाणि यानि श्रवणादीनि इन्द्रियाणि । तेषां वृत्तिः आकर्णनादिव्यापारः ) । चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्वात्मना स्वरूप-

---

10. The half-stringed girdle of some other lady risen up in haste, the jewels of which were dropping down at her every faltering step, had at the time the string fastened only to the root of her foot toe.

11. The windows of the mansions the space of which was full of faces, the inside of which was fuming with the fragrance of wines, of those ladies whose curiosity was greatly excited, were decorated, as it were, with lotuses, where the rolling eyes resembled the black bees.

12. Those ladies drinking, with their eyes the son of Raghu, did not mind the objects of other senses, because the functions of the rest of the organs of sense, had, as it were, by concentration entered the organ of sight.

---

10. A. and Su., अर्धाचिता. B. C. E. He. Chà. Din. Va. Dhar. and Vija., अर्धाचिता. D. अर्धाचिता; A. B. D. He. Chà. Va. Su. Dhar. and Vija., दुर्निमिते. C. and Din., have दुर्निमिते Between 10-11 D. E. read the following:-
"स्तनंधयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती । सप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित् पयसा गवाक्षम्"

11. A. D. प्रफुल्लपद्माभरणाः for सहस्रपत्राभरणा. So also noticed by He.
12. D. Din. and Dhar., सर्वेन्द्रियवृत्तिः for शेषेन्द्रियवृत्तिः

स्थाने वृता भूपतिभिः परोक्षैः स्वयंवरं साधुममंस्त भोज्या ।
पद्मेव नारायणमन्यथासौ लभेत कान्तं कथमात्मतुल्यम् ॥१३॥
परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥
रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथा हि बाला ।
गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसंगतिज्ञम् ॥ १५ ॥

कार्त्स्न्येन चक्षुः प्रविष्टेव । [ इन्द्रियान्तरं त्यक्त्वा तद्विलोकनमेव चक्षुरिति वाक्यार्थः—हे० ] । श्रोत्रादी-नीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स्वस्व-विषयाधिगमः किं न स्यादिति भावः । [ संभाषणादि विमुच्य तद्दर्शनैकरसा अभूवन्निति भावः—चा० ]। "शृण्वन्कथाः श्रोत्रसुखाः कुमारः" इति वक्ष्यति । ताः कथयति "स्थाने" इत्यादिभिस्त्रिभिः—

१३. भोज्या ( भोजस्य गोत्रापत्यं स्त्री भोज्या ) इन्दुमती परोक्षैः । [ अक्षिभ्यां परे इति परोक्षास्तैः तथोक्तैः । "परोक्षे लिट्" इति निपातनात् अक्षिशब्दस्य अकारस्य उत्वं "प्रतिपरःसमनुभ्योऽक्ष्णः" इति अक्षिशब्दादच्—हे०] । अदृष्टैर्भूपतिभिर्वृता प्रार्थितेयमिति प्रार्थितापि स्वयंवरमेव साधुं हितममंस्त मेने । न तु परोक्षमेव कंचित्प्रार्थकं वव्रे । स्थाने युक्तमेतत् । "युक्ते द्वे सांप्रतं स्थाने" इत्यमरः । कुतः । अन्यथा स्वयंवराभावेऽसाविन्दुमती । पद्ममस्या अस्तीति पद्मा लक्ष्मीः । "अर्शआदिभ्योऽच्" इत्यच्प्रत्ययः । ना-रायणमिव । आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत । [ विभाषा कथमिति काल-त्रयेऽपि लिङ्—हे० ] । न लभेतैव । सदसद्विवेकासौकर्यादिति भावः ।

१४. स्पृहणीयशोभं सर्वाशास्यसौन्दर्यमिदं द्वन्द्वं मिथुनम् । "द्वन्द्वं रहस्य—" इत्यादिना निपातः । परस्परेण नायोजयिष्यच्चेन्न योजयेद्यदि । तर्हि प्रजानां पत्युर्विधातुरस्मिन्द्वये द्वन्द्वे रूपविधानयत्नः सौन्द-र्यनिर्माणप्रयासो वितथो विफलोऽभविष्यत् । एतादृशानुरूपस्त्रीपुंसान्तराभावादिति भावः ।[ यद्वा । इन्दुम त्याः शोभा अनेन स्पृहणीया अजस्य शोभा इन्दुमत्यैव स्पृहणीयेति । शोभेत्यत्र वामनः । शोभेति नि-पातनादिति शुभशुंभशोभार्थाविति शुभे भिदादेराकृतिगणत्वादङ् सिद्ध एव । गुणप्रतिषेधाभावस्तु निपा-त्यते इति—हे० ] । "लिङ्निमित्ते लृङ्क्रियातिपत्तौ" इति लृङ् । "कुतश्चित्कारणवैगुण्यात्क्रियाया अ-नभिनिष्पत्तिः क्रियातिपत्तिः" इति वृत्तिकारः ।

१५. रतिस्मरौ यौ । नित्यसहचराविन्त्यभिप्रायः । नूनं । [ नूनं निश्चये उत्प्रेक्षायां वा "नूनं तर्केऽर्थनिश्च-ये" इत्यमरः—हे० ] । तावेवेयं चायं चेमौ दंपती अभूताम् । एतद्रूपेणोत्पन्नौ । कुतः । तथा हि । इयं

13. As लक्ष्मी obtained नारायण who was equally worthy of her, so the sister of Bhoja, though ardently wished for by many kings who were not present for the ceremony, did well in thinking of self-electing marriage as the right course for her to follow; otherwise how could she have obtained a husband equally worthy of her ?

14. If Creator had not united this couple of enviable beauty one with the other, the efforts of creating beauty in this pair on the part of the Lord of living beings would have been fruitless !

15. Surely these two were Rati and Smara respectively, for this maiden princess had chosen a

13. D. परोक्षे for परोक्षैः; D. भार्या for असौ.

14. D. विफलः for वितथः.

15. A. B. C. E. H. He. Va. Su. and Vija., रतिस्मरौ. So also noticed by Châ.; D. Châ. Din. and Dhar. जातिस्मरौ; A. G. E. He. Châ. Din. Va. Su. and Vija., इमावभूताम्. B. उमावभूतां., D. H. and Dhar., इवाभूतां; B. He. Va. and Dhar.; बाला for गता. H. reads संगतं for संगतिज्ञं.

इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन्कथाः श्रोत्रसुखाः कुमारः ।
उद्भासितं मङ्गलसंविधाभिः संबन्धिनः सद्म समाससाद ॥ १६ ॥
ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥
महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम्
भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः ॥ १८ ॥

बाला । [ मुग्धा । बालेति अज्ञत्वसूचनं–हे० ] । राज्ञां सहस्रेषु राजसहस्रमध्ये । सत्यपि व्यत्यासकारण इति भावः । आत्मप्रतिरूपं स्वानुरूपमेव । "तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः" इति दण्डी । मताप्राप्ता तदपि कथं ज्ञातमत आह–हि यस्मान्मनो जन्मान्तरसंगतिज्ञं ( पूर्वभवमेलापकं ( भवति । तदेवेदमितिप्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीत्युक्तम् । जन्मान्तरसाहचर्यमेवात्र प्रवर्तकमिति भावः । [ पद्यन्त्येते श्लोकाः कुमारोत्पत्तावपि विद्यन्ते तथाप्येककर्तृकत्वान्न दोषः–हे०चा० ] ।

१६. इति "स्थाने वृता" इत्याद्युक्तप्रकारेण पौरवधूमुखेभ्यः ( पुरप्रमदानां वदनेभ्यः ) उद्गता उत्पन्नाः श्रोत्रयोः सुखा मधुराः । सुखशब्दो विशेष्यनिघ्नः । "पापपुण्यसुखादि च" इत्यमरः । कथा गिरः शृण्वन् ( आकर्णयन् ) कुमारोऽजो मङ्गलसंविधाभिर्मङ्गलरचनाभिः । [ पताकादिसामग्रीभिः–हे० पूर्णकलशकुसुममालादिभिः–चा० गीतवादित्रशोभनस्वनादिभिः —सु० ] । उद्भासितं शोभितं संबन्धिनः कन्यादायिनः ( भोजस्य ) सद्म गृहं समाससाद प्राप । ( चतुर्भिः कलापकम् ) ।

१७. ततोऽनन्तरं करेणुकाया हस्तिन्याः सकाशादाशु शीघ्रमवतीर्य । [ आरोहणार्थं राज्ञामधाः इति नीतिः–हे० ] । कामरूपेश्वरे दत्तो हस्तो येन [ कामरूपेश्वरेण दत्तः हस्तः यस्य–हे० ] सोऽजः । अथोऽनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितमन्तश्चतुष्कं चत्वरम् । नारीणां मनांसीव [ चित्तानीव । इति सर्वप्रियोक्तिः –हे० ] । विवेश [ प्राविशत् । इवशब्दार्थोऽत्र सहार्थे व्याख्यायते नारीमनोभिः सह चतुष्कमध्यं प्राविशत् । नारीमनांस्यपि विवेशेत्यर्थः–सु० ] ।

१८. महार्हसिंहासनं ( महानर्हो मौल्यं यस्य । यद्वा । महच्च तदर्हं च महार्हं तच्च सिंहासनं तत्र ) संस्थितोऽसावजः । भोजेनोपनीतम् । रत्नैः सहितं सरत्नम् । मधुपर्कमिश्रं [ मधुना पच्यते इति मधुपर्कः तेन

counterpart of her own self from amongst thousands of kings, for the mind is cognizant of the association of the previous birth.

16. Thus hearing the words pleasing to the ear coming out from the mouths of the women of the city, the prince reached the palace of his relative, which was adorned with auspicious decorations.

17. Then the prince quickly alighted from the female-elephant and with his hand in that of the Lord of the Kamarupas entered the inner quadrangle of the palace shown by the Lord of the Vidarbhas as if he entered the hearts of the palace women.

18. Seated on a rich throne, he accepted the offering with jewels, mixed with the Madhuparka ( consisting of equal parts of curds, honey and clarified butter ) and a pair of silk-

17. D. अथ for आशु; D. अज: for अथो; D2. E. and Su., वैदर्भनिर्दिष्टपथो for वैदर्भनिर्दिष्टमथो.

18. A. E. Chà., Din. Su. and Vija., महार्हसिंहासनसंस्थितः. B. C. H. महार्हसिंहासनसंस्थितः. D. He. Va. and Dhar., महार्हसिंहासनसंश्रितः; B. C. H. Chà. Din. Su. and Vija., मधुपर्कमिश्रं A. He. and Va., मधुमधमिश्रं. D. E. and Dhar., मधुमधवर्थ्यं; D. H. He. Chà. Din. and Va. अर्घ for अर्घ्यं.

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ १९ ॥
तत्रार्चितो भोजपतेः पुरोधा हुत्वाग्निमाज्यादिभिरग्निकल्पः ।
तमेव चाधाय विवाहसाक्ष्ये वधूवरौ संगमयांचकार ॥ २० ॥
हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।
अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ २१ ॥

मिश्रं युतं पञ्चामृतमिश्रं । " अलंकृतः सितच्छत्रोऽपदातिर्ज्ञातिबान्धवैः । वृतो वधूगृहं गत्वा मधुपर्केण पूजितः" इत्याश्वलायनकारिकायां—हे० ]। अर्घ्यं पूजासाधनद्रव्यं [ पूजार्थमुदकादि—हे० ] दुकूलयोः क्षौमयोर्युग्मं च । वनिताकटाक्षैः ( वनितानां सानुरक्तप्रमदानां कटाक्षाः तैः ) अन्यस्त्रीणामपाङ्गदर्शनैः सार्धम् ( समं ) । जग्राह गृहीतवान् ।

१९. दुकूलवासाः ( दुकूले वाससी यस्य ) सोऽजः । विनीतैर्नम्रैरवरोधरक्षैरन्तःपुराधिकृतैः । ( कञ्चुकिभिः )। वधूसमीपं ( वध्वाः नैकट्य ) निन्ये । तत्र दृष्टान्तः—स्फुटफेनराजिः (व्यक्तडिण्डीरश्रेणिः ) उदन्वान्समुद्रः ( उदकमस्यास्तीति उदन्वान् ) नवैर्नूतनैश्चन्द्रपादैश्चन्द्रकिरणैः । ( "पादा रश्म्यंघ्रितुर्यांशाः" इत्यमरः ) । वेलायाः सकाशं समीपमिव । पूर्णदृष्टान्तोऽयम् । [ अजस्य समुद्रोपमानं इन्दुमत्याः वेलोपमानं अवरोधरक्षाणां चन्द्रपादोपमानं—सु० ] ।

२०. तत्र सद्मनि ( दानमानादिभिः) अर्चितः पूजितः ( अग्नेः ईषन्न्यूनः ) अग्निकल्पोऽग्नितुल्यो भोजपतेर्भोजदेशाधीश्वरस्य पुरोधाः ( पुरस्तात् एव राज्ञां हित धत्ते सः ) पुरोहितः । " पुरोधास्तु पुरोहितः" इत्यमरः । आज्यादिभिर्द्रव्यैरग्निं हुत्वा तमेव चाग्निं विवाहसाक्ष्ये आधाय ( परिकल्प्य ) । साक्षिणं च कृत्वेत्यर्थः । वधूवरौ संगमयांचकार योजयामास । [ "सप्तमे क्रामितं तत्स्थः शिरसी संनिधाय च " इत्याश्वलायनकारिकायां–हे० ] ।

२१. स राजसूनुर्हस्तेन स्वकीयेन वध्वाः ( इन्दुमत्याः ) हस्तं परिगृह्य । [ " अंगुष्ठादि ( ति ) गृह्णीयाद्रुक्मणामीत्यंकया ततः " इत्याश्वलायनकारिकायां–हे० ] । अनन्तरायाः सन्निहितायाः अशोकलतायाः प्रवाल पल्लवं प्रतिपल्लवेन स्वकीयेन ( अनुरूपकिशलयेन ) प्राप्य चूत आम्र इव । सुतरां ( अतिशयेन ) चकासे ( शुशुभे ) ।

---

woven garments presented to him by Bhoja, along with the lovely glances of the beautiful ladies.

19. He, dressed in silken-garments, was led near the bride by the humble keepers of the inner-apartments, as the ocean with its line of foam clearly displayed is led near the coast by the new rays of the moon.

20. There the revered priest of the Lord of the Bhojas, himself like fire having offered to the fire the clarified butter and other things ( i. e. Sami-leaves, fried grain, Akshatas, &c. ) and having made the same fire a witness to the marriage, united the bride and the bride-groom in wedlock.

21. That prince shone still more bright on taking the hand of his bride with his own, as does the mangotree after having received with its foliage the shoots of an A'soka-creeper clung to it.

---

19. D. °रक्ष्यैः for रक्षैः.

20. E. reads रामकल्पः for अग्निकल्पः; E. has वधूवरं for वधूवरौ; B. H. He. Va. Châ. Din. Su. Dhar. and Vija. संगमयांबभूव for संगमयांचकार.

21. H. reads राजपुत्रः for राजसूनुः; B. C.E. H. He. Châ. Din. Va. Dhar. and Su., बभासे for चकासे. E. reads °शोकलगः° for °शोकलता°; E. reads नूतः for चूतः.

आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ २२ ॥

तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ २३ ॥

२२. वरः कण्टकितः पुलकितः प्रकोष्ठः ( कराग्रभागः यस्य स आसीत् । "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः । कुमारी स्विन्नाङ्गुलिः संववृतेऽभूत् । अत्रोत्प्रेक्ष्यते—पाणिसमागमेन पाण्योः संस्पर्शेन । कर्त्रा । तयोर्वधूवरयोर्मनोभवस्य वृत्तिः स्थितिः समं विभक्तेव । समीकृतेवेत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्पाणिस्पर्शकृतत्वमुत्प्रेक्ष्यते । [ सात्त्विकाश्च भावा भरतेनोक्ताः । "स्तंभः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ स्तंभो निष्क्रियांगतः । प्रलयो नष्टचेष्टत्वं शेषास्तु व्यक्तलक्षणाः" इति—हे० ] । अत्र वात्स्यायनः—"कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च भवति । पुरुषस्तु रोमाञ्चितो भवति । एभिरनयोर्भावं परीक्षेत" इति । स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणं । न तु प्रतिनियमो विवक्षितः । एभिरिति बहु वचनसामर्थ्यात् । एवं सति कुमारसंभवे—"रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुंगवकेतुरासीत्" इति व्युत्क्रमवचनं न दोषायेति । [ अपरे तु तुल्यत्वमुत्प्रेक्षितमिति व्याचक्षते—चा० ] ।

२३. अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्तितानि क्रिययोर्निरीक्षणलक्षणयोः समापत्त्या यदृच्छासंगत्या निवर्तितानि । [ अनेन रत्या भाव उक्तः । तथा हि । "परस्परस्योपरि दृष्टिपातं रतिप्रकर्षास्पदलिङ्गमाहुः" इति—हे० ] । प्रत्याकृष्टान्यन्योन्यस्मिँल्लोलानि सतृष्णानि । ( परस्परदर्शनेन साभिलाषाणि इति यावत् ) । "लोलश्चलसतृष्णयोः" इत्यमरः । तयोर्दम्पत्योर्विलोचनानि दृष्टयो मनोज्ञां रम्यां ह्रिया ( लज्जया ) निमित्तेन यन्त्रणां संकोचमानशिरे प्रापुः ।

22. The hair on the wrist of the bride-groom stood erect and the fingers of the princess became wet with perspiration, thus by the joining of their hands the action of love was, as it were, equally divided in them at that moment.

23. The eyes of both of them had a lovely constraint of bashfulness,—the eyes which were insatiately coveting to see one another, whose pupils were moving towards the end of the corners (i. e. mutually exchanging side-long glances), and which were withdrawn when by accident the gazes mutually encountered.

22. D. अभूत् for आसीत्; B. C. E. H. He. Chà. Din. Va. Su. Dhar. and Vija., तस्मिन्द्वय तत्क्षणमात्मवृत्तिः सम विभक्तेव मनोभवेन for वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य E. has अस्मिन् for तस्मिन्. So also Malli, who says: 'इत्यपरार्धस्य पाठान्तरे व्याख्यानान्तरं । तस्मिन्द्वये मिथुने तत्क्षणमात्मवृत्तिः सात्त्विकोदयरूपा वृत्तिर्मनोभवेन कामेन समं विभक्तेव । पृथक्कृतेव ।

23. A. Va. and Su., अपाङ्गप्रतिसारितानि. B. C. Dhar. Vija. उपान्तप्रतिसारितानि. D. and He., अपाङ्गप्रतिचालितानि. D2. Din. and Chà., अपाङ्गप्रतिवारितानि; E. H. read अपान्तप्रतिसारितानि; B. D. H. Chà. Din. Dhar. and Vija , क्रियासमापत्तिनिवर्तितानि. A. Va. and Su., क्रियासमापत्तिविवर्तितानि. C. and He., क्रियासमापत्तिषु कातराणि, E. has क्रियासमापत्तिनिवर्तितानि. A2. has तयोः समापत्तिषु कातराणि क्रियाप्रवृत्त्यापिनिवर्तितानि for the last two Pádas.

प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।
मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥
नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥ २५ ॥
हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥
तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम् ।
वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव ॥ २७ ॥

२४. तन्मिथुनं उदर्चिष उद्गतज्वालस्य । [ उत्कृष्टदीप्तेर्वा—हे० ] । कृशानोर्वह्नेः प्रदक्षिणप्रक्रमणात्प्रदक्षिणीकरणात् । [ "हविर्भुजं सकुम्भं च दृषद्वजं प्रदक्षिणं । वधूं परिणयन्मंत्रमर्मीहमिति वै जपेत्" इत्याश्वलायनकारिकायां—हे० ] । मेरोः (कनकाचलस्य) । उपान्तेषु समीपेषु वर्तमानमावर्तमानम् । मेरुं प्रदक्षिणीकुर्वदित्यर्थः । अन्योन्यसंसक्तं परस्परसंगतम् । मिथुनस्याप्येतद्विशेषणम् । अहश्च ( त्रयो यामाः यस्याः सा ) त्रियामा चाहस्त्रियामं रात्रिदिवमिव । समाहारे द्वन्द्वैकवद्भावः । चकासे दिदीपे ।

२५. नितम्बेन ( नितम्बश्रोणितटेन ) गुर्वी लब्धी । [ इति प्रदक्षिणायामसंगतिः—हे० ] । "दुर्धरालघुनोगुर्वी" इति शाश्वतः । विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन प्रयुक्ता जुहुधीति नियुक्ता । ( धूमसम्बन्धादत्यरुणत्वात् ) मत्तचकोरस्येव । ( "जीवंजीवश्चकोरकः" इत्यमरः) । नेत्रे यस्याः सा लज्जावती ( ह्रियावनतमुखी ) सा वधूरग्नौ ( हुतभुजि ) लाजविसर्गं ( लाजमोक्षं ) चकार ।

२६. हविष आज्यादेः शमीपल्लवानां (समिधां) लाजानां च गन्धोऽस्यास्तीति हविःशमीपल्लवलाजगन्धी । "शमीपल्लवमिश्रॉंल्लाजानञ्जलिना वपति" इति कात्यायनः । पुण्यः [ पवित्रः । पुनन्ति येन तत्पुण्यं । अहःसर्वैकदेशेतिनिपातनात्क्यप्–हे० ] । धूमः कृशानोः पावकादुदियायोद्गतः । कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य स तथोक्तः स धूमस्तस्या वध्वा मुहूर्तं कर्णोत्पलतां कर्णाभरणतां । (श्रवणेन्दीवरावतंसत्वं इत्यर्थः)। प्रपेदे ( प्राप ) ।

२७. तद्वधूमुखमाचारेण प्राप्ताद्धूमग्रहणात् । [लाजांजलिं विसृज्य धूमं समाजिघ्रेदिति प्रयोगवृत्तिकारोक्तेराचारो द्रष्टव्यः । तथा हि । " पापा ऋतुमती कन्या पापो राजाप्यरक्षकः पापं व्याधकुलं हिंस्रं पण्याकी पण्य आश्रमः " इति–हे०चा०सु० ] । अञ्जनस्य क्लेदोऽञ्जनक्लेदः । अञ्जनमिश्रबाष्पोदकमित्यर्थः । तेन समाकुलाक्षम् । प्रम्लानौ बीजाङ्कुरौ यवादिबीजाङ्कुरः । ( " बीजं रेतसि सत्त्वे च हेतावंकुरकारणे "

24. The royal couple now attached to one another ( by the matrimonial alliance ) looked resplendent by going round the blazing fire ( always keeping the right side towards it ), as the day and night come close together in their revolution ronnd the axis of the Meru.

25. That bashful bride, with heavy hips and eyes like those of the Chakora bird maddened with passion, when directed by that family preceptor, the very image of Brahmá, made an offering of the fried grain to the sacred fire.

26. There rose up from that fire the sacred smoke fragrant with the scent of oblations, S'ami-leaves and Lajas, which as its spire passed by her cheeks looked for a moment like a lotus on her ear.

27. Having to be exposed to the smoke ( of the sacrificial ceremony ) in accordance with the religious custom, the face of the bride had the eyes troubled with the moistened collyrium, the sprouts that formed the ear-rings faded, and the expanse of the cheeks became ruddy.

24. D. E. and Su., °संपृक्त for °संसक्त.

26. C. D. E. H. °लाजगन्धिः for °लाजगन्धी. H. has °संसर्पिशिखः for °संसर्पिशिखः.

27. H. reads अञ्जनक्षोभ° for अञ्जनक्लेद°; E. reads पाटलमग्न° for पाटलगण्ड.°

तौ स्नातकैर्बन्धुमता च राज्ञा पुरंध्रिभिश्च क्रमशः प्रयुक्तम् ।
कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम् ॥ २८ ॥
इति स्वसुर्भोजकुलप्रदीपः संपाद्य पाणिग्रहणं स राजा ।
महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः ॥ २९
लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाछलेन ॥ ३० ॥
स राजलोकः कृतपूर्वसंविदारम्भसिद्धौ समयोपलभ्यम् ।
आदास्यमानः प्रमदामिषं तदावृत्य पन्थानमजस्य तस्थौ ॥ ३१ ॥

इति विश्वः ) । एव कर्णपूरोऽवतंसो यस्य तत्पाटलगण्डलेखं । [ पाटला गण्डलेखा गण्डभित्तिर्यस्य तत् —चा०सु० ]। अरुणगण्डस्थलं च बभूव ।

२८. कनकासनस्थौ ( सुवर्णपीठस्थितौ ) । तौ कन्याकुमारौ ( वधूवरौ ) स्नातकैर्गृहस्थविशेषैः [ कृतसमावर्तनैः । त्रिविधाः स्नातकाः । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति । तथा हि याज्ञवल्क्यः । " गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा " इति—हे० चा० ] । " स्नातकस्त्वाप्लुतो व्रती " इत्यमरः । बन्धुमता । बन्धुपुरःसरेणेत्यर्थः । राज्ञा च पुरंध्रिभिः पतिपुत्रवतीभिर्नारीभिश्च क्रमशः प्रयुक्तं स्नातकादीनां पूर्वपूर्ववैशिष्ट्यात्क्रमेण कृतमार्द्राक्षतानामारोपणमन्वभूतामनुभूतवन्तौ । [ आर्द्राक्षतारोपणं हि वृद्धाचारः—चा० ] ।

२९. अधिश्रीः ( अधिगता प्राप्ता श्रीः संपत्तिः येन सः ) अधिकसंपन्नो भोजकुलप्रदीपः स राजा । इति स्वसुः इन्दुमत्याः पाणिग्रहणं विवाहं संपाद्य कारयित्वा । ( स्वयंवरागतानाम् ) महीपतीनां राज्ञां पृथगेकैकशोऽर्हणार्थं पूजार्थमधिकृतानधिकारिणः । (राजपुरुषानित्यर्थः) । समादिदेशाज्ञापयामास ।

३०. मुदः संतोषस्य । ( मोदते इति मुद् तस्य । क्विप् ) । लिङ्गैश्चिह्नैः कपटहासादिभिः । संवृतविक्रिया निगूहितमत्सराः । अत एव प्रसन्ना बहिर्निर्मला गूढनक्रा अन्तर्लीनग्राहाः । [ गूढनक्रा हि बहिः प्रसन्नाः—चा० ] । ह्रदा इव स्थितास्ते नृपा वैदर्भं भोजमामन्त्र्यापृच्छ्य तदीयां वैदर्भीयां पूजां [ वस्त्रतुरंगमादिकां—चा० ] उपदाछलेनोपायनमिषेण प्रत्यर्प्य ययुः गतवन्तः ।

३१. आरम्भसिद्धौ [ वधूहरणारंभरूपायां—हे० ] कार्यसिद्धौ विषये । पूर्वं कृता कृतपूर्वा । सुप्सुपेति

28 The prince and princess seated on a seat of gold received on their heads the showers of the wet Akshatas thrown in regular order by the householders, the king with relatives and the matrons ( having their husbands and sons alive ).

29. At last that excessively prosperous king, the light of the Bhoja family, having thus completed the marriage of his sister, gave orders to his officers for separate reception of the other kings.

30. Those kings who had suppressed all outward feeling of dissatisfaction under the garb of joy, like pleasant and clear lakes with alligators lurking in them, bade goodbye to the Lord of the Vidarbha, and went away, having repaid the ( same kind of ) honour under the pretext of marriage presents.

31. That multitude of kings, who had previously formed a plot for the accomplishment of

29. D. E and Su. इत्थं for इति ; D. and Su., अधिकृतां for अधिकृतान्.

31. H. has कृतपूर्वसंधिः सरम्भसिद्धौ for कृतपूर्वसंविदारम्भसिद्धौ; A. E. He. Va. Cha. Din. and Vija , आरम्भसिद्धौ. B. C. आरंभसिद्धौ. D2. Va. and Su., प्रारंभसिद्धौ D. उदारसिद्धौ, so also noticed by Chà. and Din.; A. Chà. Din. and Vija., समयोपलभ्यं. B. C. E. He. and Va., समाप लभ्यं. so also noticed by Chà. and Din. D. H. and Su., समयोपलभ्यं, this too is noticed by Chà and Malli: the latter who says " समयोपलभ्यम् " इति पाठे युद्धसाध्यमित्यर्थः.

भर्तापि तावत्क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।
सत्त्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥
तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा ।
तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः ॥ ३३ ॥
प्रमन्यवः प्रागपि कोशलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।
अतो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥

समासः । कृतपूर्वा संवित्संकेतः [ प्रतिज्ञा वा—चा० ] मार्गावरोधरूप विषयो येन स तथोक्तः । " संवित्युद्धे प्रतिज्ञायां संकेताचारनामसु " इति केशवः । स राजलोकः समयोपलभ्यमजप्रस्थानकाले लभ्यम् । [ समयेन शपथेन प्रयाणकालेन वोपलभ्यं—चा० ] । [ " नचोपलेभे वणिजापणायाः " इति भट्टिकाव्यप्रयोगात्—चा० ] । तदा तस्यैकाकित्वादिति भावः । तत्प्रमदैवामिषं भोग्यवस्तु [ रन्ध्रोपहार्यं वस्तु—चा०सु० ] । " आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि " इति केशवः । आदास्यमानो ग्रहीष्यमाणः सबलस्य पन्थानमावृत्यावरुध्य तस्थौ ।

३२. अनुष्ठितः संपादितोऽनन्तरजाया अनुजाया विवाहो येन स तथोक्तः । ( कृतस्वसृविवाहः ) । क्रथकैशिकानां देशानां भर्ता स्वामी भोजोऽपि तावत्तदा सत्त्वानुरूपमुत्साहानुरूपं यथा तथा । आ समन्तात् । अनेनानियतवस्तुदानमित्यर्थः । हरणं कन्यायै देयं धनम् । [ अत्र कात्यायनः । " ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा । भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतं " इति हे० ] । " यौतुकादि तु यद्देयं सुदायो हरणं च तत् " इत्यमरः । आहरणीकृता श्रीः ( लक्ष्मीः ) येन तथोक्तः सन्राघवमजं प्रास्थापयत्प्रस्थापितवान्स्वयमन्वगादनुजगाम च । [ सुपुत्रं लभस्वेत्यत्र व्याख्यातं—हे० ] ।

३३. कुण्डिनं विदर्भनगरम् । तस्येशो भोजस्त्रिषु लोकेषु प्रथितेन ( विश्वत्रयप्रसिद्धेन ) अजेन सार्धं ( साकं ) मार्गे पथि तिस्रो वसती रात्रीरुषित्वा स्थित्वा । " वसती रात्रिवेश्मनोः " इत्यमरः । " कालाध्वनोरत्यन्तसंयोगे " इति द्वितीया । पर्वात्यये दर्शान्त उष्णरश्मेः सूर्यात्सोमश्चन्द्र इव । [ अजस्य तिग्मरश्मित्वं ध्वन्यते—हे० ] । तस्मादजादपावर्तत ( पश्चाज्जगाम ) । तं विसृज्य निवृत्त इत्यर्थः ।

३४. नृपा राजानः प्रागपि ( आदावेव ) प्रत्येकमात्तस्वतया ( गृहीतधनत्वेन । आत्तं गृहीतं स्वं धनं येभ्यस्तेषां भावस्तया ) दिग्विजये गृहीतधनत्वेन कोशलेन्द्रे रघौ प्रमन्यवः क्रुद्धरोषा बभूवुः । ( " मन्युर्दै-

their object, and who were thus bent on snatching away that bait of a young damsel obtainable at the time ( of his departure ), stood obstructing the way of Aja.

32. Meanwhile the Lord of the Krathakais'ikas too who had performed the marriage of his younger sister and who had presented him his wealth as a dowery according to his own position, dismissed Raghava and accompanied him.

33. Having halted at three stages on the way with Aja renowned in three worlds, the Lord of Kundina turned back from him, as at the end of the conjunction, the moon departs from the sun.

34. Every one of them had already become irritated against the Lord of the Kos'alas ( i. e. Raghu ) on account of having been deprived of his wealth ( by Raghu ), and hence the kings

32. D. न्तरजो विवाहः for °न्तरजाविवाहः so also Chá. and Su., notice it. A. He. Chà. and Vija., सत्त्वानुरूपाहरिणीकृतश्रीः. D. Va. Din. and Dhar., सत्त्वानुरूपाभरणीकृतश्रीः. B. C. and Su. शक्त्यानुरूपाभरणीकृतश्रीः. So also one of the Mss. of वर्धन adopts this reading. E. has शक्त्यानुरूपाहरणीकृतश्रीः.

33. D. त्रिलोको° for त्रिलोक°.

तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।
बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥३५॥

तस्याः स रक्षार्थमनल्पयोधमादिश्य पित्र्यं सचिवं कुमारः ।
प्रत्यग्रहीत्पार्थिववाहिनीं तां ज्योतीरथां शोण इवोत्तरंगः ॥ ३६ ॥

पत्तिः पदातिं रथिनं रथेशस्तुरंगसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७ ॥

न्ये कृती कुधि ” इत्यमरः ) । अतो हेतोः ( स्वयंवरार्थं ) समेताः संगताः सन्तस्तदात्मजस्य रघुसूनोः स्त्रीरत्नलाभं । ( “ रत्नं श्रेष्ठे मणावपि ” इति वैजयन्ती । “ रत्नं स्वजाति श्रेष्ठेऽपि” इत्यमरः ) । न चक्षमिरे न सेहिरे । [ इन्दुमतीमादायैनं कुमारं मारयाम इति भावः–सु० ] ।

३५. दृप्त उद्धतः स राजन्यगणो राजसंघातः । भोजकन्यां ( इन्दुमतीं ) उद्वहन्तं नयन्तं तमजम् । बलिना वैरोचनिना प्रदिष्टां दत्तां श्रियमाददानं स्वीकुर्वाणम् । त्रिविक्रमस्येमं त्रैविक्रमम् । पादमिन्द्रशत्रुः प्रह्लादः [ वृत्रासुरो वा–हे०नमुचिः–व०सु० ] इव । पथि ( मार्गे ) रुरोध । तथा च वामनपुराणे– “ विरोचनविरोधेऽपि प्रह्लादः प्राक्तनं [ प्राग्वरं–हे० ] स्मरन् । विष्णोस्तु क्रममाणस्य पादाम्भोजं रुरोध ह इति ” ।

३६. स कुमारोऽजस्तस्या इन्दुमत्या रक्षार्थमनल्पयोधं बहुसुभटम् । पितुरागतं पित्र्यम् । आप्तमित्यर्थः। सचिवमादिश्याज्ञाप्य तां पार्थिववाहिनीं राजसेनाम् । “ ध्वजिनी वाहिनी सेना ” इत्यमरः । ज्योतीरथां भागीरथीं [ महानदीं–सु० रेवां । यस्मात्तस्याः पुनर्निर्गमनाभावः–हे० ज्योतीरथानाम्नी स्रोतस्विनी तां—चा० ] उत्तरंगः ( उच्चैस्तरंगैः ) शोणः शोणाख्यो नद इव [ “ शोणः शोणाकनदयोः शोणः कोकनदाकृतौ ” इति विश्वः–हे० ] । प्रत्यग्रहीदभियुक्तवान् ।

३७. पत्तिः पादचारी योद्धा पदातिं पादचारमभ्यपतत् । पदाभ्यामततीति पदातिः । पादस्य पदिस्यादिना पदादेशः। “पदातिपत्तिपदगपादातिकपदाजय.” इत्यमरः । रथेशो रथिको रथिनं रथारोहमभ्यपतत् । तुरंगसाद्यश्वारोहस्तुरगाधिरूढमश्वारोहमभ्यपतत् । “ रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ” इत्यमरः । गजस्य यन्ता हस्त्यारोहो गजस्थं पुरुषमभ्यपतत् । इत्थमनेन प्रकारेण तुल्यप्रतिद्वन्द्व्येकजातीयप्रतिभटं युद्धं बभूव । [ तथा चतुर्वर्गचिन्तामणौ व्रतखण्डे । “ रथी च रथिना सार्द्धं पदातिश्च पदातिना । कुंजरस्थो गजस्थेन योद्धव्यो भृगुनन्दन ” इति–हे० ] । अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनो योधाः । “ द्वन्द्वं कलहयुग्मयोः ” इत्यमरः । [ यथायोग्य युद्धं समभूदित्यर्थः–चा० ] ।

---

who were assembled there for conspiracy could not endure the acquisition of that jewel-of-a woman by his son

35 That haughty host of kings arrested him ( i. e. Aja ) on his way as he was taking with him the Bhoja princess, as the enemy of Indra had intercepted the third foot of Trivikrama receiving the wealth granted to him by Bali

*36 That prince first ordered his hereditary minister to keep guard over her with an army consisting of innumerable host of warlike soldiers*, and then himself received that army of kings in a hostile spirit, as the Śona with its swollen waves receives the contents of Jyotiratha.

37 Then the infantry fell on foot-soldiers, the warrior in the chariot on one fighting in the car, the horse-man on the rider on horse, and the elephant-driver on one on elephant, thus the battle ensued between the warriors of equal-footing.

---

35. D. °प्रतिष्ठां for °प्रदिष्टां. So also He. notices this reading.

36. A. B. D. E H. with. He. Châ. Din. and Vija., ज्योतिरथां. C. भागीरथीं. Châ. notices this reading and says “ क्वापि भागीरथीं ” इति पाठः.

नदत्सु तूर्येष्वविभाव्यवाचो नोदीरयन्ति स्म कुलोपदेशान् ।
बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृतः शशंसुः ॥ ३८ ॥
उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः ।
विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥ ३९ ॥
मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि ॥ ४० ॥

३८. तूर्येषु नदत्सु सत्स्वविभाव्यवाचोऽनवधार्यगिरश्चापभृतो धानुष्काः । कुलमुपदिश्यते प्रख्याप्यते यैस्ते कुलोपदेशास्तान्कुलनामानि नोदीरयन्ति स्म नोच्चारयामासुः । श्रोतुमशक्यत्वाद्वाचो नाब्रुवन्नित्यर्थः । किं तु बाणाक्षरैर्बाणेषु [ स्वप्रभाः-सु० ] लिखिताक्षरैरेव परस्परस्यान्योन्यस्योर्जितं । [ कठाहंकारं-चा० ] । प्रख्यातं नाम ( अभिधानं ) शशंसुरूचुः ।

३९. संयति संग्रामेऽश्वैः ( तुरगैः ) उत्थापितः । स्यन्दनवंशानां रथसमूहानां चक्रै रथाङ्गैः । ( " चक्रं सैन्ये जलावर्ते रथावयवराष्ट्रयोः । संसारे मण्डले वृते धर्मभेदास्त्रभेदयोः " इति वैजयन्ती ) । सान्द्रीकृतो घनीकृतः । " वंशः पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणे कुले " इति केशवः । कुञ्जरकर्णानां तालैः [ उभयोरैक्यत्वात्-हे० ] ताडनैः [ चपेटैः-चा० ] विस्तारितः प्रसारितः । ( " तालः कालक्रियामाने तृणराजाख्यपादपे । अंगुष्ठमध्यमाने च चपेटत्सरुमपि च " इति केशवः ) । रेणु. ( धूलिः ) नेत्रक्रमेणांशुकपरिपाट्या । अंशुकेनेवेत्यर्थः [ चक्षुर्निरोधप्रकारेण वा-चा० ] । " स्याज्जटांशुकयोर्नेत्रम् " इति । " क्रमोऽङ्घ्रौ परिपाट्यां च " इति च केशवः । ( नेत्रग्रन्थिगुणे वस्त्रे तन्तुमूले विलोचने नेत्रं रथे च नद्यां च नेत्रो नेतरिमंपि च " इति विश्वः ) । सूर्यमुपरुरोधाच्छादयामास । [ यथांशुकेन निरोधः क्रियते तथा रेणुनापि कृत इत्यर्थः-चा० ] ।

४०. वायुवशात् विदीर्णैर्विवृतैर्मुखैः प्रवृद्धानि ध्वजिनीरजांसि सैन्यरेणून्पिबन्तो गृह्णन्तो ( योद्धणां ) मत्स्यध्वजा मत्स्याकारा ध्वजाः । पर्याविलानि परितः कलुषाणि ( मेघेन परित्यक्तानि ) नवोदकानि । [ नवोदकत्वं रजःसामर्थ्य-चा० ] । पिबन्तः परमार्थमत्स्याः सत्यमत्स्या इव । बभुर्भान्ति स्म । [ कृत्रिमवस्त्रमत्स्यं दृष्ट्वेत्युत्प्रेक्षा क्रियते किमु एते कलुषाणि नवोदकानि पिबन्तीति भाव. सु० ] ।

38. While the martial drums were resounding, the bowmen whose voices were made inaudible in the din of battle did not utter the names of their families but they simply pronounced the high names of each other only by means of letters engraven on their arrows.

39. The dust, raised in the battle by horses, thickened by the wheels of a number of chariots and spread around by the flapping ears of elephants, covered the sun as if with a cloth.

40 The fish-banners with their mouths opened by the force of the wind, and receiving in the increased dust of the army, looked like real fishes drinking the new turbid waters.

38. D. He. Va., Dhar. Chà. Din. and Su., कुलापदेशान् for कुलोपदेशान्. Between 38-32 H. reads ललाटबद्धभ्रुकुटीतरंगैस्तनुत्यजां दन्तनिपीडिताधैः । आतस्तरे भक्तिकृन्तकंठैर्हुंकारगर्भैर्द्विषतां शिरोभिः " ।

39. C. E. He. Chà. Va. and Vija.; स्यन्दनवशचक्रैः, B. स्यन्दनवृन्दचक्रैः. A. स्यंदनवंशतालैः. H. स्यन्दनचक्रचक्रैः. D. Su. and Dhar., स्यन्दनपुञ्जचक्रैः, D2. संयति नेमिचक्रैः; A. and Chà., नेत्रक्रमेण. E. B. C. He. Va. and Su. अनुक्रमेण D. H. इति क्रमेण. So also noticed by Chà.

40. D. वनोदकानि for नवोदकानि.

रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः ।
स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥
आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ ४२ ॥
स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ॥ ४३ ॥
प्रहारमूर्छापगमे रथस्था यन्तॄनुपालभ्य निवर्तिताश्वान् ।
यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

४१. सान्द्रे प्रवृद्धे रजसि ( रेणौ ) रथो रथाङ्गध्वनिना चक्रस्वनेन विजज्ञे ज्ञातः । नागो हस्ती विलोलानां घण्टानां क्वणितेन नादेन विजज्ञे । [ विलोलेति युद्धगामिकता—हे० ] । आत्मपरावबोधः स्वपरविवेकः । योधानामिति शेषः । स्वभर्तृणां स्वस्वामिनां नामग्रहणान्नामोच्चारणाद्बभूव । रजोऽन्धतया सर्वे स्वं परं च शब्दादेवानुमाय प्रजह्रुरित्यर्थः । [ आत्मशब्देन आत्मीयाः उच्यन्ते—हे० ] ।

४२. लोचनमार्गमावृण्वतो दृष्टिपथमुपरुन्धतः । आजौ युद्धे विजृम्भितस्य व्याप्तस्य [ विस्तृतस्य—हे० चा० ]। रज एवान्धकारं तस्य । शस्त्रक्षतेभ्योऽश्वद्विपवीरेभ्यो जन्म यस्य स तथोक्तो रुधिरप्रवाहः ( रक्तसंघः ) बालारुणो बालार्कोऽभूत् । [ अर्कोऽनुरुयाताभ्यां तमो हि निवार्यते—हे० । यथा बालारुणेनान्धकारो ध्वस्यते तथा रुधिरप्रवाहेण सङ्ग्रामरेणुः ध्वस्तः इत्यर्थः—चा०सु० ] । " अरुणो भास्करेऽपि स्यात्" इत्यमरः । बालविशेषणं रुधिरसावर्ण्यार्थम् ।

४३. क्षतजेन रुधिरेण छिन्नमूलः । त्याजितभूतलसंबन्ध इत्यर्थः । तस्य क्षतजस्योपरिष्टात् । [ उपर्युपरिष्टादिति साधु—हे० ] । पवनावधूतो वाताहतः स रेणुः । अङ्गारशेषस्य ( अंगारः निर्धूतोल्मुकं शेषः अवशिष्टं यस्य तथोक्तस्य ) हुताशनस्याग्नेः पूर्वोत्थितो धूम इव । आबभासे दिदीपे । [ रक्तावलिप्तस्य रेणोः अंगारसादृश्यम् । ऊर्ध्वं वातेनावधूतस्य धूलेर्धूमसाम्यम् । इह धूम इवेत्युक्त्या धूमकालिदासः इति विख्यातिः—चा० ] ।

४४. रथस्था रथिनः प्रहारेण या मूर्छा तस्या अपगमे सति । मूर्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्म इति मत्वा । निवर्तिताश्वान् ( निवर्तिताः पश्चाद्वलिताः अश्वाः तुरगाः यैः तान् ) यन्तॄन्सारथीन् [ भव-

---

41 The chariot was recognized by the rattling of its wheels, the elephant by the tinkling sound of his moving bells, while the distinct knowledge of one's own party and that of his enemy was, in the thick dust, made only by uttering the names of their respective masters.

42. The stream of blood gushing out from the wounds made by weapons on the bodies of warriors, elephants and horses proved ( lit. became ) as it were the newly risen sun to the all-pervading darkness consisting of dust that obstructed the range of sight in the battle-field.

43 That column of dust separated from the surface of the earth ( lit. cut asunder from its root ) by blood and wafted by the current of the wind over it, looked like the smoke, that is raised before, of the fire which has now embers remaining.

44. When the swoon caused by the blows was over the warriors in chariots severely reproved the charioteers who had turned the horses back from the battle field, and killed those enemies alone who had wounded them before, and whose flags they had previously marked, through excessive rage.

---

42. H. reads विकम्भितस्य for विजृंभितस्य.

44. B. C. रथस्थान् for रथस्थाः. D. नियमिताश्वान्, E. H. विवर्तिताश्वान्. for. निवर्तिताश्वान्. B. C. read विनिर्तिताश्वान्.

अप्यर्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।
संप्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥
आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः ।
हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥
पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।
तुरंगमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥
तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः
उद्यन्तमग्निं शमयांबभूवुर्गजा विविग्नाः करसीकरेण ॥ ४८ ॥

द्भिरयं पराभवो नीतः इति--हे० ] उपालभ्यासाधु कृतमित्यधिक्षिप्य । पूर्वं यैः स्वयं सादिता हताः । लाक्षितपूर्वकेतून् । [ पूर्वं प्रहारसमये लक्षिताः लक्षितपूर्वाः तादृशाः केतवो येषां तान् तथोक्तान्–चा० ]। पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञातानित्यर्थः । तानेव सामर्षतया सकोपत्वेन हेतुना निजघ्नुः प्रजह्रुः ।

४५. अर्धश्चासौ मार्गश्च तस्मिन्नर्धमार्गे परेषां बाणैर्लूनाश्छिन्ना अपि हस्तवतां । ( प्रशस्तौ अभ्यासयुक्तौ हस्तौ येषां तेषां । इति प्रशंसायां मतुप् ) । कृतहस्तानां [ लघुहस्तानां–चा० ] धनुर्भृतां पृषत्काः शरा आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिर्लोहाग्रवद्भिः । " सस्यबाणाग्रयोः फलम् " इति विश्वः । पूर्वार्धभागैः । शृणातीति शरुः । तस्मै हितं शरव्यं लक्ष्यम् । " उगवादिभ्यो यत् " इति यत्प्रत्ययः । " लक्षं लक्ष्यं शरव्यं च " इत्यमरः । संप्रापुरेव । न तु मध्ये पतिता इत्यर्थः । [ यदवोचि भगवता काश्यपेन । " नोदनाद्यमिषोः कर्म कर्मकारित्वाच्च संस्कारादुत्तरं तथोत्तरं कर्म" इति–चा०]।

४६. गजसंनिपाते गजयुद्धे निशितैरत एव क्षुराग्रैः क्षुरस्याग्रमिवाग्रं येषां तैश्चक्रैरायुधविशेषैर्हृतानि छिन्नान्यपि । श्येनानां ( शशादनानां ) पक्षिविशेषाणाम् । " पक्षी श्येनः " इत्यमरः । नखाग्रकोटिषु व्यासक्ताः केशा येषां तानि । आधोरणानां हस्त्यारोहाणाम् । " आधोरणा हस्तिपका हस्त्यारोहा निषादिनः " इत्यमरः । शिरांसि चिरेण पेतुः पतितानि । शिरःपातात्प्रागेवारुह्य पश्चादुत्पततां पक्षिणां नखेषु केशसङ्गश्चिरपातहेतुरिति भावः । [ कृत्तानि मस्तकानि यावद्भूमौ निपतन्ति तावत्प्रथमत एव श्येनैर्गृहीतानीत्यर्थः–चा० ] ।

४७. पूर्वं प्रथमं प्रहर्ताश्वसादी तौरंगिकः [ अश्ववारः–चा० ] प्रतिप्रहारेऽक्षममशक्तं तुरंगमस्कंधे निषण्णदेहम् । मूर्च्छितमित्यर्थः । रिपुं भूयो न जघान पुनर्न प्रजहार । किं तु प्रत्याश्वसन्तं पुनरुज्जीवन्तमाचकाङ्क्ष । [ जीवत्वयं वराक इति पुनर्मारयितुं नोत्सुकोऽभूत्–चा० यथा प्राणिति तथाचकाङ्क्ष येन पुनर्युद्धं भवेदिति भावः–हे० ] । " न युध्यमानं प्राप्तं नार्तं नातिपरिक्षतम् " इति निषेधादिति भावः ।

४८. तनुत्यजाम् । तनुं निस्पृहाणामित्यर्थः [ देहमुत्सृज्य गजैः सह योद्धृणां–हे० ] । वर्मभृतां कव-

45. The arrows of dexterous warriors though cut down in half the way by the arrows of enemies, reached their very marks ( aims ) with their iron-headed fore halves, by following their own speed.

46. In the elephant fight the heads of their drivers though severed off by the sharp discuses ( the sharp circular missile weapons ) with razor like edges fell down after a long time, because the hair on them being stuck to the sharp points of the nails of hawks

47. The warrior on horse who had first dealt a blow at his enemy who had his body reclining on the shoulder-joint of his horse and who was unable to strike at his enemy in return, did not strike him again, but wished that he would revive

48. The terrified elephants quenched, with the watery drops thrown out of their trunks, the

46. D. मुक्तैः for चक्रैः. B. C. D. He. Va. Su. and Vija., क्षुरप्रैः for क्षुराग्रैः. H. निशिताग्रधारैः for निशितैः क्षुराग्रैः; D. हतानि for हृतानि.

48. B. वर्मवतां for वर्मभृतां; D. उद्भूतं for उद्यन्तं.

शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैःशिरस्त्रैश्चषकोत्तरेव ।
रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ ४९ ॥
उपान्तयोर्निष्कुषितं विहंगैराक्षिप्य तेभ्यः पिशितप्रियापि ।
केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार ॥ ५० ॥
कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥ ५१ ॥

भिन्नै संबन्धिभिर्वहत्सु दन्तेषु पतद्भिरत एव विकोशैः पिधानादुद्धृतैः । "कोशोऽस्त्री कुड्मले खड्गपिधाने" इत्यमरः। असिभिः खड्गैरुदन्तमुत्थितमग्निं विविग्ना भीता गजाः करसीकरेण शुण्डादण्डजलकणेन शमयांबभूवुः शान्तं चक्रुः ।

४९. शिलीमुखैर्बाणैरुत्कृत्तानि शिरांस्येव फलानि [ बीजपूरादीनि—हे० ] तैराढ्या संपन्ना । च्युतैर्भ्रष्टैः । शिरांसि त्रायन्त इति शिरस्त्राणि शीर्षण्यानि । "शीर्षण्यं च शिरस्त्रे च" इत्यमरः । तैः [ टोपैः—हे० ] । चषकोत्तरा चषकः पानपात्रमुत्तरं ( श्रेष्ठ ) यस्यां सेव । "चषकोऽस्त्री पानपात्रम्" इत्यमरः । शोणितान्येव मद्यं तस्य कुल्याः प्रवाहा यस्यां सा । "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः । रणक्षितिर्युद्धभूमिर्मृत्योः [ यमस्य । "तपनात्मभवो मृत्युः" इत्यमरशेषे—हे० ] । पानभूमिरिव रराज । [ अन्यापि पानभूमिः फलाढ्या चषकयुक्ता मद्यवती च स्यात्—चा० ] ।

५०. उपान्तयोः प्रान्तयोर्विहंगैः पक्षिभिर्निष्कुषितं खण्डितम् [ निःसारीकृतं—हे०चा० ]। "इणिष्ठायाम्" इतीडागमः। भुजच्छेदं भुजखण्डं तेभ्यो विहंगेभ्य आक्षिप्याच्छिद्य पिशितप्रिया ( प्रियं पिशितं यस्याः सा । पूर्वनिपातः ) मांसप्रियापि शिवा क्रोष्ट्री । शिवा झाटामलोषध्यो । अभयाऽमलकी गौरी क्रोष्ट्री सक्तुफलासु च" इति विश्वः । "शिवः कीलः शिवः क्रोष्टा भवेदामलकी शिवा" इत्यनेकार्थध्वनिमञ्जरीः । केयूरकोट्याङ्गदाग्रेण क्षतस्तालुदेशो यस्याः सा सती । अपाचकारापसारयामास । किरतेः करोतेर्वा लिट् । [ पक्षिभिर्गृहीतमारत्वात् केयूरधारया क्षततालुत्वाच्च मांसलोलुपापि शृगाली बाहुखण्डं तत्याजेत्यर्थः—चा० ] ।

५१. द्विषतः ( वैरिणः ) खड्गेन हृतोत्तमाङ्गश्छिन्नशिराः । ( "उत्तमाङ्गं शिरः प्रोक्तं" इत्यमरः ) । कश्चिद्वीरः सद्यः ( शीघ्रं ) विमानप्रभुतां विमानाधिपत्यम् । देवत्वमित्यर्थः । उपेत्य प्राप्य वामाङ्गसंसक्ता वामोत्सङ्गसङ्गिनी । [ पुरुषस्य वामभागे स्त्रीणां स्थितिरिति वृद्धाचारः—चा० ] । सुराङ्गना यस्य स तथोक्तः सन् । [ चतुर्वर्गचिन्तामणौ व्रतखण्डे अग्निपुराणात् । "वराप्सरः सहस्राणि भूपमायोधने हतं ।

---

fire that arose from the unsheathed swords of the desperate warriors in armour falling directly on their formidable tusks

49. There the battle-field appeared like the drinking room of Death rich in fruits made of the heads of warriors severed by arrows, abounding in drinking cups made of the dropped helmets and flowing with liquor of blood

50. There a female jackal, though she was very fond of eating flesh, but being wounded in the roof of her palate by the points of the armlet, threw away a piece of a severed arm previously snatched away from vultures and which was torn off all around the edge by them.

51. A certain warrior whose head was severed off by the sword of his enemy, having instantly obtained the mastery of a celestial vehicle with a heavenly damsel clung to him on his left side saw his own trunk dancing in the battle field.

---

49. He. reads चषकोत्तरा for चषकोत्तरा.
50. D. निर्लुषितं for निष्कुषितं.
51. H. reads °सुराङ्गनः for °सुराङ्गनः.

अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसंप्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ ॥ ५२ ॥
परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ५३ ॥
व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरव्यवस्थम् ।
पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ॥ ५४ ॥

त्वरितान्युपधावन्ति मम भर्तायमेति च " इति–हे० ] । समरे ( संग्रामे ) नृत्यत् ( नृत्यं कुर्वाणं ) स्वं निजं कबन्धं विशिरस्कं कलेवरं ददर्श ।[यस्मिन्युद्धे भटानां सहस्र हन्यते तत्रैव कबंधो नृत्यतीत्यागमः । एतेनाभ तादृशं युद्धं जातमिति द्योत्यते इति–चा० ] । " कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् " इत्यमरः ।

५२. कौचिद्वीरावन्योन्यस्य सूतयोः सारथ्योरुन्मथनान्निधनात् ( हेतोः ) तावेव सूतौ रथिनौ योद्धारौ चाभूताम् । [ स्वरथचोदनात्–हे० ] । तावेव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतो दीर्घः संप्रहारो युद्धं ययोस्तावभूताम् । ततो भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्दे निष्ठा नाशः [ अवसानं–हे० ] ययोस्तौ बाहुयुद्धसक्तावभूताम् । [ अत्राखिलयुद्धवेदित्वमुक्तं–व० ] । " निष्ठा निष्पत्तिनाशान्ता " इत्यमरः । ( " निष्ठोत्कर्षे व्यवस्थायां नाशान्ते व्रतयज्ञयोः " इति च वैजयन्ती ) ।

५३. परस्परेणान्योन्यं क्षतयोः क्षततन्वोः समकालमेककालं यथा तथोत्क्रान्तवाय्वोर्युगपदुद्गतप्राणयोः । एकैवाप्सराः प्रार्थिता याभ्यां तयोरेकाप्सरःप्रार्थितयोः । प्रार्थितैकाप्सरसोरित्यर्थः । "वाहिताग्न्यादिषु" इति परनिपातः । अथ वा । एकस्यामप्सरसि प्रार्थितं प्रार्थना ययोरिति विग्रहः। "स्त्रियां बहुष्वप्सरसः" इति बहुत्वाभिधानं प्रायिकम् । [ एकया अप्सरसा प्रार्थितयोः । यद्वा । प्रार्थितैकाप्सरसोः। "वाहिताग्न्यादिषु" इतिपरनिपातः । "स्त्रियां बहुष्वप्सरसः" इत्यमरः । एकस्यामपि राजदंतादित्वादबहुवचनमस्तीति ज्ञापयितुं बहुष्वित्युक्तं । न नियमार्थं अप्सरा इत्येकवचनान्तस्यापि प्रयोगदर्शनादिति सुबोधिनीकारः । यथा नलोदये । "तुल्योप्सरसा देहि प्रभवो भग्नाप्सरः प्रसरसा देहि । तानभिसरसा देहि स्रजं च नाकात्सुखं च सरसा देहि" इति । एकवचनान्तोप्यस्तीति क्षीरस्वामी । नाविराजश्चैतदेव मन्मति निधायाह । तथा प्रतापमार्तण्डे । "स्त्रियामप्सरसःस्वर्गगणिका मेनकादयः" इति । कृष्णोप्युक्तवानबहुष्विति । "अप्सरःस्वप्सराः प्रोक्ताः सुमनाः सुमनःसु च" इति शब्दभेदेपि । तथा । "आपः सुमनसो वर्षाः अप्सरस्सिकताः समाः एतं स्त्रियां बहुत्वे स्युः एकत्वेप्युत्तरत्रयं" इति–हे० चा० । तथाहि । "काचिदप्सरा भूत्वा प्रांजलिर्व्यजिज्ञपत्" इति दशकुमारे–चा०]। कयोश्चित्प्रहर्त्रोर्योधयोरमर्त्यभावेऽपि देवत्वेऽपि विवादः कलह आसीत् । एकामिषाभिलाषो हि महद्वैरबीजमिति भावः । [ यस्तु संग्रामे हन्यते स्वर्गामिनं देवत्वमुपगत तमनुगृहीतुमप्सरसः समायान्ति इह तु समकाल मरणमुपगतयोः एकस्यामेव समायातायां देवांगनायां कामुकयोरनयोरिदिवि रणमभूदित्यर्थः–चा० ] ।

५४. तावुभौ व्यूहौ सेनासंघातौ । " व्यूहस्तु बलविन्यासः " इत्यमरः । पश्चात्पुरश्च यो मारुतौ ।

52. Two other chariot-warriors, on account of their killing each other's charioteers, became themselves the charioteers and being both without horses maintained a prolonged contest with their maces, and those weapons too when broken down resumed at once the hand fighting that would bring on them inevitable destruction

53 There arose a quarrel between two other combatants even in their immortal state of soul, who, on earth, were wounded by each other and who had thus given up their breath at one and the same time in the battlefield, for both of them being asked for by one and the same celestial damsel

54 Both the armies arrayed together for battle suffered defeats from and obtained victories

52. E. reads °विमर्दनष्टौ for °विमर्दनिष्ठौ.
54. B. C. E. इतरेतरत्वं for इतरेतरस्मात्.

परेण भग्नेऽपि बले महौजा ययावजः प्रत्यरिसैन्यमेव ।
धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥
रथी निषङ्गी कवची धनुष्मान्दृप्तः स राजन्यकमेकवीरः ।
निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ५६ ॥

[ दृष्टान्ते श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यते इति न्यायान्मारुतशब्दस्योभयत्र प्रवृत्तिः—चा० ] । तयोः पर्यायवृत्त्या क्रमव्यापारेण प्रवृद्धौ महार्णवोर्मी इव ( तरङ्गाविव ) । इतरेतरस्मादन्योन्यस्मादव्यवस्थं व्यवस्थारहितमनियतं जयं भङ्गं पराजयं चापतुः प्राप्तवन्तौ । [ यदा प्रतीच्यो वायुर्वर्धते तदा वीचिकल्लोलाः प्रवर्धन्ते यदा च पौरस्त्यो वायुर्वर्धते तदा प्रतीच्या भङ्गं प्राप्नुवन्तीति भावः—सु० ] ।

५५. बले स्वसैन्ये परेण परबलेन । [ इति जातावेकवचनं—चा० ] । भग्नेऽपि ( पराजिते सत्यपि ) महौजा महाबलोऽजोऽरिसैन्य प्रत्येव ( अभिमुखमेव ) । ययौ । तथा हि । समीरणेन वायुना धूमो निवर्त्येत कक्षादपसार्येत । वर्ततेर्ण्यन्तात्कर्मणि संभावनायां लिङ् । वह्निस्तु यतो यत्र कक्षस्तृणम् [ तृणकाष्ठादिसमूहः—चा० ] । " कक्षौ तु तृणवीरुधौ " इत्यमरः । तत एव तत्रैव । [ सैन्यस्य तृणसाम्येन अजस्य महाशक्तिर्घोतिता—हे० ] । प्रवर्तत इति शेषः । [ यथाग्नेः कक्षज्वालने निरालस्यता तथा कुमारस्य वैरिसेनायामित्यर्थः—चा० । वह्निसदृशोऽजः शत्रुकक्षं त्यक्त्वा न क्वापि यातीति भावः—सु० ] । सार्वविभक्तिकस्तसिः ।

५६. रथी रथारूढो निषङ्गी तूणीरवान् ( परिहितबाणवारः ) । " तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः " इत्यमरः । कवची वर्मधरो धनुष्मान् ( प्रशस्तं धनुरस्यास्तीति धनुष्मान् ) धनुर्धरो दृप्तो रणदृप्त एकवीरोऽसहायशूरः । [ पूर्वापरप्रथमचरमजघन्येति कर्मधारयः । राजदन्तादित्वात् परनिपातः पूर्वकालैकेति समासः इति कश्चित् तत्र विप्रतिपत्त्या न—हे० ] । सोऽजो राजन्यकं राजसमूहम् । " गोत्रोक्ष—" इत्यादिना वुञ्प्रत्ययः । [ पर्यायविशेषणैः सावधानताच्यते—हे० ] । महावराहो वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तमुद्गतमर्णवाम्भः ( जलं ) इव । ( " संवर्तः प्रलयः कल्पः " इत्यमरः ) । निवारयामास ।

over each other consequent on mutual [illegible], like two waves of the great ocean swollen by two winds [illegible]

55 Though [illegible] army was [illegible] by [illegible] enemy the most powerful Aja fell directly on the enemy's army, [illegible] driven away by the wind but the fire remains in that spot only where [illegible]

56 He, the sole warrior [illegible] own famous martial spirit, riding on a chariot equipped with a quiver, putting [illegible] armour and wielding a bow kept off the host of the kings, as the Great Boar did the waters of the ocean swollen at the end of the Kalpa.

---

55. B. C. E. H. He. Va Chà. Din. and Dhar., निवर्तेत for निवर्त्येत; B. C. E. H. He. Chà. Din. Va and Vija. हि for तु.

56. B. C. E. H. He. Chà. Din. Va. Su. Dhar. and Vija., दृप्तं for दृप्तः; B. C. E. He. Chà Din. Va. Su. Dhar. and Vija., विलोडयामास, H. विलोलयामास for निवारयामास; D. कल्पक्षयोद्धूतं for कल्पक्षयोद्वृत्तं.

स दक्षिणं तूणमुखेन वामं व्यापारयन्हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान्सुषुवे रिपुघ्नान् ॥ ५७ ॥
स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैर्हूंकारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥
सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।
सर्वप्रयत्नेन च भूमिपालास्तस्मिन्प्रजह्रुर्युधि सर्व एव ॥ ५९ ॥

५७. सोऽजः । आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वाममतिसुन्दरम् । " वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरं " इति विश्वः । व्यापारयन्नलक्ष्यत । शरसंधानादयस्तु दुर्लक्ष्या इत्यर्थः । सकृत् ( एकवारं ) आकर्णकृष्टा ( कर्णपर्यन्तं कृष्टा ) योद्धुरस्याजस्य मौर्वी ज्या । रिपून्घ्नन्तीति रिपुघ्नाः ( शत्रुमारणचतुराः ) । तान् । " अमनुष्यकर्तृके च " इति टक्प्रत्ययः । बाणान्सुषुव इव सुषुवे किमु । इत्युत्प्रेक्षा । [ किं तूणीराद्बाणानादत्त उत धनुराकृष्य मुञ्चतीति हस्तलाघवं दृढप्रहारत्वं चोक्तं–चा० ] ।

५८. सोऽजः । रोषेण दष्टा अतएवाधिकलोहिता ओष्ठा येषां तानि तैः । व्यक्ताः ( प्रकटाः ) ऊर्ध्वा रेखा यासां ताः । [ अनेन छिन्नमस्तकारवात्रयं सपद्यन्ते इत्युक्त–चा० ] । भ्रुकुटीर्भ्रूभङ्गान्वहद्भिः ( बिभ्राणैः ) । भल्लनिकृत्ता बाणविशेषच्छिन्नाः कण्ठा येषां तैः । हूंकारगर्भैः सहूंकारैः । हूंकुर्वद्भिरित्यर्थः । द्विषतां ( रिपूणां ) शिरोभिर्गां भूमिं तस्तार छादयामास ।

५९. द्विरदप्रधानैर्गजमुख्यैः सर्वैर्बलाङ्गैः सेनाङ्गैः । " हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् " इत्यमरः । कङ्कटभेदिभिः कवचभेदिभिः । " उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् " इत्यमरः । सर्वायुधैश्च । बा

57 The prince was seen in the battle beautifully moving his right hand about the mouth of the quiver ( so great was his agility ), but it seemed that the warrior's bow-string drawn up to his ear at once produced as it were arrows destructive of his enemies.

58 He strewed the ground with the heads of his enemies which were cut at the throats by the Bhalla arrows, which had their lips still more reddened when bitten with rage, which had their frowning eye-brows with visible lines rising upwards and which were full of defiant sounds ( or war-cries ).

59. With all the constituents of their armies of which elephants formed the chief element and

57. B. E with He. Chà Din. Va Su. Dhar. and Vija. तूणमुखे न for तूणमुखेन. Hemadri's expl सोऽजः आजौ रणे दक्षिणं वामं च हस्तं तूणमुखे निषंगवक्त्रे व्यापारयन् नालक्ष्यत। Cháritravardhana's expl:-सोऽजः आजौ संग्रामे दक्षिणं हस्तं व्यापारयन्नालक्ष्यत न दृष्टः । न च वामं प्रसारयन् दृष्टः । Such is also Dinakara's expl.; Sumativijaya too explains in very much the same way. सोऽजः दक्षिणं च वामं च हस्तं तूणमुखं शरासनद्वारे व्यापारयन्नालक्ष्यत न दृष्टः । The interpretation of the first half of this stanza as given by so many commentators certainly appears to be more logical than that of Malli., since it chimes so well with the second half. And hence this might be the original reading of Kalidasa.

58. C. H. E. and He. रोषदष्टाग्रलोहिताक्षैः, Va. and Su. रोषदष्टाधरलोहितोष्ठैः, D. Dharm. रोषदष्टाधरलोहिताक्षैः for रोषदष्टाधिकलोहितोष्ठैः. D. Vija and Su., भल्लनिकृत्तकण्ठैः for भल्लनिकृत्तकण्ठैः; B. E. H. He. Chà. Din. Va. Dharm. and Su. हुंकारगर्भैः for हूंकारगर्भैः.

59. D. बलौघैः for बलाङ्गैः.

सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्वभागः किंचित्प्रकाशेन विवस्वतेव ॥ ६० ॥
प्रियंवदात्प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः ।
गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥
ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।
तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥

च्चवल्यमुक्त्वान्तरमाह—सर्वप्रयत्नेन च सर्व एव भूमिपाला युधि ( रणे ) तस्मिन्नजे प्रजह्रुः । तं प्रजह्रुरित्यर्थः । सर्वत्र सर्वकारकशक्तिसंभवात्कर्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तं—"अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वथाभावात्क्वचित्किंचिद्विवक्ष्यते " इति ।

६०. परेषां द्विषामस्त्रव्रजैः (आयुधसमूहैः) छन्नरथः (आच्छादितस्यन्दनः) सोऽजः । नीहारैर्हिमैः । ( "अवश्यायस्तु नीहारः " इत्यमरः । " नीहारो हिमशीतयोः " इति अनेकार्थप्रकाशः ) । मग्नो दिनपूर्वभागः प्रातःकालः किंचित्प्रकाशेनाल्पलक्ष्येण विवस्वतेव ( सूर्येणेव ) । ध्वजाग्रमात्रेण ( ध्वजाग्रमेव ध्वजाग्रमात्रं तेन ) लक्ष्यः ( दृश्यः ) बभूव । ध्वजाग्रादन्यत्र किंचिल्लक्ष्यते स्मेत्यर्थः ।

६१. अधिराजसूनुः ( अधिकं राजते इति अधिराजो रघुस्तस्य सूनुः पुत्रः ) महाराजपुत्रः कुसुमास्त्रकान्तो मदनसुन्दरः स्वप्ननिवृत्तलौल्यः स्वप्नवितृष्ण । जागरूक इत्यर्थः । असौ कुमारोऽजः प्रियंवदात्पूर्वोक्ताद्गन्धर्वात्प्राप्तं गान्धर्वं गन्धर्वदेवताकम् । " सास्य देवता " इत्यण् । प्रस्वापयतीति प्रस्वापनं निद्राजनकमस्त्रं राजसु प्रायुङ्क्त प्रयुक्तवान् ।

६२ ततः ( अस्त्रप्रयोगानन्तरं ) धनुष्कर्षणे चापाकर्षणे मूढहस्तमव्यापृतहस्तम् । एकस्मिन्नंसे पर्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूहो यस्य तत् । ध्वजस्तम्भेषु निषण्णा अवष्टब्धा देहा यस्य तत् । [ एभिर्विशेषणैर्निद्रिसजातिकथन–चा० ] । [ अस्त्रसामर्थ्यात्–हे० ] नरदेवानां राज्ञां सैन्यमेव सैन्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । निद्राविधेयं निद्रापरतन्त्रं तस्थौ ।

---

with all the weapons piercing through even armour, and with every possible effort, even all the kings ( even all of them ) fell upon him in the fight

60 He whose car was covered with multitudes of missiles of the enemies could only be distinguished by the uppermost top of his banner as the early part of the day ( the dawn ) obscured by the mist is discovered by the sun with its partial light

61. That prince the son of the Emperor, who was as handsome as the flower armed god ( Kama ) and who was disinclined to sleep ( who was awake ) employed against the kings, the Gandharva missile which he had previously obtained from Priyamvada and which had the quality of causing slumber

62 Then that army of the kings whose hands were incapacitated for drawing in the bow-string whose clusters of helmets slipped on one of their shoulders, stood with the bodies of its soldiers leaning upon the staffs of their banners being greatly overpowered by sleep

60. D. छिन्नरथः for छन्नरथः, D. लक्ष्यं for लक्ष्यः

61. E. प्रियंवदादाप्तम् for प्रियंवदात्प्राप्तम् ; A असौ कुमारः. D. H. Din. and Cha., असौ कुमारः. B. E and Su. अथ प्रियाहैः C. and Vija., अथ प्रियार्हैः. D2. He. and Dhar., अथ प्रियार्थैः; D. स्वप्ननिवृत्तलौल्यः for स्वप्ननिवृत्तलौल्यः. So also noticed by He.

ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः ।
तेन स्वहस्तार्जितमेकवीरः पिबन्यशो मूर्तमिवाबभासे ॥ ६३ ॥
शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः ।
निमीलितानामिव पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥
सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम् ।
यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥
स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ।
ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥

६३. ततः कुमारोऽजः प्रियया इन्दुमत्योपात्तरसे आस्वादितमाधुर्ये । अतिश्लाघ्य इति भावः । अधरोष्ठे जलजं शङ्खं निवेश्य ( संस्थाप्य ) । " जलजं शङ्खपद्मयोः " इति विश्वः । दध्मौ मुखमारुतेन पूरयामास । तेनौष्ठनिविष्टेन शङ्खेनैकवीरः स स्वहस्तार्जितं ( निजभुजजनितं ) मूर्तं मूर्तिमद्यशः पिबन्निवाबभासे । [ शङ्खधमने श्वेतत्वाद्यशःपानोत्प्रेक्षा युक्ता—चा० ] । यशसः शुभ्रत्वादिति भावः । [ इति शृङ्गारिकत्वोक्तिः । " ऊर्ध्वं त्रिरात्रमथवा द्वादशाहं भवेद्व्रती " इति ब्रह्मचर्यविधानात् । विशेषतोऽप्रगल्भया नवोढया कुतोऽधरपानं । अत्राभूतमप्यधरपानं भूतत्वेन विवक्षितं । यथा । " वृष्टश्चेदेव संपन्नाः शालयः " इति । यद्वा । नाम्ना भूतपूर्वा प्रिया ज्ञेया—हे० एतेन अनुरागातिशयः सूचितः । " विवाहानन्तरं द्वादशरात्रमन्ततः " इति वचनं । त्रिरात्रानन्तरं अपि रतसंभवात्प्रियोपात्तरसेति युक्तायतं ननु । नूतनपरिणीतायाः कथं स्वयमधरपानं संभवेत् । उच्यते । चिरकालाभिकांक्षितकान्तनवसंगमोहनरसनिमग्नतया विगतलज्जत्वात्स्वयंवरेण प्राप्तप्रौढित्वाच्च कोकामन्दप्रमुखकन्दर्पशास्त्रप्रावीण्याच्च नवपरिणीताया अपि युक्त—चा० ] ।

६४. शंखस्वनस्याजशङ्खध्वनेरभिज्ञतया प्रत्यभिज्ञानत्वान्निवृत्ताः प्राक्पलाय्य संप्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं [ नष्टरिपु—हे० ] तमजम् । निमीलितानां मुकुलितानां पङ्कजानां ( सरसि स्थितानां तथोक्तानां ) मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रमिव । ददृशुः ।

६५ संप्रति राघवेण रघुपुत्रेण [ राघवपदेनाभिजात्या कृपावत्त्व—चा० ] । पूर्वं रघुणेति भावः । हे राजानो वो युष्माकं यशो हृतं जीवितं तु कृपया न हृतम् । न त्वशक्त्येति भावः । इत्येवंरूपा वर्णाः । एतदर्थप्रतिपादकं वाक्यमित्यर्थः । सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैर्बाणाग्रैः सार्थेस्तेनाजेन । प्रयोजककर्त्रा । पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैरन्यैर्निवेशिताः । लेखिता इत्यर्थः । क्षिपतेर्ण्यन्तात्कर्मणि क्तः ।

६६. चापकोट्यां निहित एकबाहुर्येन सः [ इति धनुर्धरजातिः—चा० ] । शिरस्त्रस्य ( शीर्षण्यस्य )

63 At last that prince having put the conch to his lips the flavour of which has been tasted by his beloved blew it and he appeared thereby a sole hero drinking as it were, fame embodied, obtained by his own hands.

64 By the recognition of the sound of his conch his warriors returned and saw him with his enemies overwhelmed with sleep like the tremulous reflection of the moon in the midst of lotuses that are closed.

65 By him were impressed on the banners of the kings by means of the points of his arrows besmeared with blood the following letters — "Your glory has once more been taken away by the son of Raghu but not your life through mercy."

66 He, who had rested one of his hands on the extreme point of his bow and whose hair-band

63. A. D. H. अधरोष्ठे for अधरोष्ठे ; D. येन for तेन; D. वीरशब्दः for एकवीरः.
64. D. शान्तशत्रुं for सन्नशत्रुं. So also noticed by Chá.
65. B. C. E. H. with He. Chá. Va. Su. and Dhar. संयति for संप्रति.
66. D. चापकोटि for चापकोटी.

इतः परानर्भकहार्यशस्त्रान्वैदर्भि पश्यानुमता मयासि ।
एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥

तस्याः प्रतिद्वन्द्विभवाद्विषादात्सद्यो विमुक्तं मुखमाबभासे ।
निःश्वासबाष्पापगमात्प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥

हृष्टापि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् ।
स्थली नवाम्भःपृषताभिवृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९ ॥

निष्कर्षणेनापनयनेन भिन्नमौलिः श्लथकेशबन्धः । "चूडाकिरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः । ललाटे बद्धाः श्रमवारिबिन्दवो यस्य सः । सोऽत्रां भीतां (भयत्रस्तां) प्रियामिन्दुमतीमेत्य आसाद्य वचो बभाषे [जगाद । संक्षेपानादर इति वचोग्रहणं । तथा दण्डी । "अलंकृतं न संक्षिप्तं" इति–हे० । इति पौनरुक्त्यः–चा० ] । किमित्याह—

६७. हे वैदर्भि इन्दुमति, इत इदानीमर्भकहार्यशस्त्रान्बालकापहार्यायुधान्परान्शत्रून्पश्य (विलोकय)। [अननुज्ञाता कथमहमन्यान् पश्यामीति चेत्–हे० चा० सु० ] । मयानुमतासि । द्रष्टुमिति शेषः । एभिर्वैरिभिरेवंविधेन निद्रारूपेणाहवचेष्टितेन रणकर्मणा मम हस्तगता । हस्तगतत्वद्ग्रहेत्यर्थः । त्वं प्रार्थ्यसे । [अद्य किमेते करिष्यन्तीति तात्पर्यार्थः–चा० ] । अपजिहीर्ष्यसे इत्यर्थः । एवंविधेनेत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति द्रष्टव्यम् ।

६८. प्रतिद्वन्द्विभवात्प्रतिपक्षोत्पन्नाद्विषादाद्दैन्यात्सद्यो विमुक्तम् तस्या मुखं । निःश्वासस्य यो बाष्प ऊष्मा । "बाष्पो नेत्रजलोष्मणोः" इति विश्वः । तस्यापगमात् (नाशात्) हेतोरात्मीयं प्रसादं नैर्मल्यं प्रपन्नः प्राप्तः । आत्मस्वरूपं दृश्यतेऽनेनेत्यात्मदर्शः । दर्पण इव । आबभासे (शुशुभे) ।

६९. सेन्दुमती हृष्टापि पत्युः पौरुषेण प्रमुदितापि ह्रिया (लज्जया) विजिता (परवशीभूता) यतोऽतः प्रियमग्रं साक्षात्स्वयं नाभ्यनन्दन्न प्रशशंस । किंतु नवैरम्भःपृषतैः पयोबिन्दुभिरभिवृष्टाभिषिक्ता स्थली कृत्रिमा भूमिः । "जानपदकुण्डगोणस्थल"—इत्यादिनाकृत्रिमार्थे ङीष् । अभ्रवृन्दं मेघसंघं मयूरकेकाभिरिव । [केकाग्रहणे सिद्धे मयूरग्रहणं प्रशमार्थं । लोध्रद्रुमवत्–हे० यद्यपि केकाशब्देनैव मयूरध्वनिर्लभ्यते तथापि मयूरशब्दस्य करिकलभादिवद्व्यक्तिपोषकत्वात् न दोषोऽत्र–चा० सु० ] । सखीनां वाग्भिः (स्तुतिवाक्यैः) अभ्यनन्दत् (अस्तौषीत्) ।

---

was loosened as he dropped his helmet and on whose forehead were formed drops of perspiration arising from fatigue, having come to his terrified beloved spoke thus to her —

67. "I can permit you, dear princess of Vidarbha, to look here at these enemies whose weapons may now easily be snatched away even by a child by *such* warlike deeds you, secure as you are in my possession, are sought after by these."

68. Suddenly her face shone bright being at once relieved from the fear arising from the enemies, as a looking-glass (mirror) which by the removal of the moisture produced by the breath, restores its natural clearness.

69. Being overcome by bashfulness that princess, though exceedingly delighted, could not herself openly congratulate her beloved lord upon his success, but through the mouth (lit. words) of her female friends, as a dry land showered with fresh drops of water does the assemblage of clouds through the medium of the notes of peacocks.

---

67. H. reads मयैतास्त्व for मयासि.

68. D. प्रपन्नं for प्रपन्नः; H. बाष्पापगमे for बाष्पापगमात्; D. स्वरूपं for प्रसादं.

69. D. H. °पृषताभिषिक्ता for पृषताभिवृष्टा.; B. C. E. H. with He. and Va., अभ्रजालं for अभ्रवृन्दं.

इति शिरसि स वामं पादमाधाय राज्ञा मुदवहदनवद्यां तामवद्यादपेतः ।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा समरविजयलक्ष्मीः सैव मूर्ता बभूव ॥ ७० ॥
प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शांतिमार्गोत्सुकोऽभून्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ७१

## अष्टमः सर्गः ।

अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।
वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥ १ ॥

७०. नोद्यते नोच्यत इत्यवद्यं गर्ह्यम् । " अवद्यपण्य " इत्यादिना निपातः । " कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः " इत्यमरः । तस्मादपेतः । निर्दोष इत्यर्थः । सोऽज इति राज्ञां शिरसि ( मौलौ ) वामं पाद ( चरणं ) आधाय ( संस्थाप्य ) अनवद्यामदोषां तामिन्दुमतीमुदवहदुपानयत् । आत्मसाच्चकारेत्यर्थः । अयमर्थः—" तमुद्वहन्तं पथि भोजकन्याम् " इत्यत्र न श्लिष्टः । तस्याजस्य रथतुरगाणां रजोभी रूक्षाणि परुषाण्यलकाग्राणि यस्याः सा सेन्दुमत्येव मूर्ता मूर्तिमती समरविजयलक्ष्मीर्बभूव । एतल्लाभादन्यः को विजयलक्ष्मीलाभ इत्यर्थः । [ ननु विवाहस्य पूर्वमेव निष्पन्नत्वात्कथमिदानीं उदवहदिति प्रयोगः कथ्यते । अत्यर्थप्रबलारिवर्गविजयात्सांप्रतमिवेन्दुमतीलाभाद्विवाहोऽभवत् । यदि तान् प्रत्यर्थिनो न व्यजेष्यत् तदा तैरिन्दुमत्यपहारे कृते करग्रहणमपि अकृतमेव भवेदिति—चा० सु० ] ।

७१. प्रथममजागमनात्प्रागेव परिगतो ज्ञातोऽर्थो विवाहविजयरूपो येन स प्रथमपरिगतार्थो रघुर्विजयिनं विजययुक्तं श्लाघ्यजायासमेतं ( योग्यपत्न्या समेतं ) संनिवृत्तं प्रत्यागतं तमजमभिनन्द्य । तस्मिन्नज उपहितकुटुम्बः ( आरोपितराज्यभारः ) सन् । " सुतविन्यस्तपत्नीकः " इति याज्ञवल्क्यस्मरणादिति भावः । शान्तिमार्गे मोक्षमार्ग उत्सुकोऽभूत् । तथा हि । कुलधुर्ये कुलधुरंधरे सति सूर्यवंश्या गृहाय गृहस्थाश्रमाय न भवन्ति । [ अर्थान्तरन्यासः—हे ] ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये अजपाणिग्रहणो नाम सप्तमः सर्गः ।

१. अथ ( अनन्तर ) पार्थिवो रघुर्ललितं सुभगं विवाहकौतुकं विवाहमङ्गल [ कङ्कणसूत्र—चा० सु० ] विवाहहस्तसूत्रं वा बिभ्रत एव ( धारयतः एव ) । " कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले " इति शाश्वतः । तस्याजस्य । अपरामिन्दुमतीमिव । [ इति अनन्यसाधारणत्वेन सार्वभौमत्वं सूचितं—हे० । अनेन साधारणभोग्यत्वमुक्तं—चा० ] । वसुधामपि ( भुवमपि ) हस्तगामिनीं ( हस्तायत्तां ) अकरोत् । [ राज्ये तमभ्यषिचदित्यर्थः—हे०चा०सु० ] । अस्मिन्सर्गे वैतालीयं छन्दः ।

---

70 At last the prince himself free from fault, having in this manner placed his left foot on the heads of the kings conducted that faultless one. And so indeed became the goddess of martial victory incarnate with the curls of her hair soiled with the dust raised by his horses and chariots.

71. Raghu, who already knew all what had happened on the way, having greeted him who had come back a victor united to a worthy wife and having devolved the cares of the family on him, became eager to lead a peaceful life, for when there is one able to bear the yoke of the family the descendants of the solar race do not long remain at *home*.

1. After this the king Raghu delivered the earth too into his hands, as if it were another Indumatî even while he wore the elegant marriage-thread.

70. D. रूक्षालकाग्रा, C. He. and Va., रुक्षालकान्ता, E. रूक्षालकान्ता, for रूक्षालकाग्रा.
71. D. चरिमाधातुमैच्छत् for शान्तिमार्गोत्सुकोऽभूत्. So also noticed by He.

दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २ ॥
अनुभूय वशिष्ठसंभृतैः सलिलैस्तेन सहाभिषेचनम् ।
विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३ ॥
स बभूव दुरासदः परैर्गुरुणाथर्वविदा कृतक्रियः ।
पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥

हेरम्बमवलम्ब्येऽहयस्मिन्पातालकेलिषु ।
दन्तेनोदस्यति क्षोणीं विश्राम्यन्ति फणीश्वराः ॥

२. नृपसूनवो राजपुत्रा यद्राज्यं दुरितैरपि । [ अपि शब्दो निषिद्धसूचकः—हे० ] । विषप्रयोगादिनिषिद्धोपायैरप्यात्मसात्स्वाधीनम् । "तदधीनवचने" इति सातिप्रत्ययः । कर्तुं प्रयतन्ते हि । प्रवर्तन्त एवेत्यर्थः । [ तथाहि कामन्दके । " राजपुत्रा मदावृत्ता गजा इव निरंकुशाः । भ्रातरं पितरं वापि निघ्नन्त्येवाभिमानिनः " इति—हे० ] । हिशब्दोऽवधारणे [ प्रातिकूल्येऽत्र—हे० ] । " हि हेतावबधारणे " इत्यमरः । उपस्थितं स्वतःप्राप्तं तद्राज्यमजः पितुराज्ञेति हेतोरग्रहीत्स्वीचकार । भोगतृष्णया तु नाग्रहीत् ।

३. मेदिनी भूमिः । मोहर्षा च ध्वन्यते । वशिष्ठेन संभृतैः [ प्रगुणीकृतैस्तीर्थेभ्य आनीतैः—चा० ] । सलिलैस्तेनाजेन सहाभिषेचनमनुभूय विशदोच्छ्वसितेन स्फुटमुद्गमेन । आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते । [ अन्यापि रमणी प्रियसंगमनभयानन्दोच्छ्वसितेन संभोगनिर्वृतिं कथयति—हे० चा० ] । कृतार्थतां गुणवद्भर्तृलाभकृतं साफल्यं कथयामासेव । न चैतावता पूर्वेषामपकर्षः । [ एतेन पूर्वेभ्यो नृपेभ्योऽस्य महत्त्वमुक्तं—चा० ] । प्रशंसापरत्वात् । " सर्वत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम् " इत्यङ्गीकृतत्वाच्च । [ वशिष्ठमंत्रजलाभिषेके क्रियमाणे मही सिक्ता सती उच्छ्वसितच्छलेन कृतार्था जातेवेति भावः—सु० ] ।

४. अथर्वविदाथर्ववेदाभिज्ञेन गुरुणा वशिष्ठेन कृतक्रियः । ( कृता अभिषेकक्रिया यस्य ) । अथर्वोक्तविधिना कृताभिषेकसंस्कार इत्यर्थः । सोऽजः परैः शत्रुभिर्दुरासदो दुर्धर्षो बभूव । तथा हि । अस्त्रतेजसा क्षत्रतेजसा सहितं युक्तं यद्ब्रह्म ब्रह्मतेजोऽयं पवनाग्निसमागमो हि । तत्कल्प इत्यर्थः । पवनाग्नीत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् " द्वन्द्वे घि " इति नाग्निशब्दस्य पूर्वनिपातः । तथा च काशिकायाम् । " अयमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम् " इति । क्षात्रेणैवायं दुर्धर्षः किमयं पुनर्वसिष्ठमन्त्रप्रभावे सतीत्यर्थः । अत्र मनुः—" नाक्षत्रं ब्रह्म भवति क्षत्रं नाब्रह्म वर्धते । ब्रह्मक्षत्रे तु संयुक्ते इहामुत्र च वर्धते " इति ।

---

2. Aja accepted the kingdom which descended to him, not out of thirst for enjoyment but out of regard to the command of his father—the kingdom which the sons of kings indeed strive to come by even by foul means.

3. Having enjoyed the bath of coronation in his company with holy waters brought together and poured by the priest Vasishtha, the Earth as it were expressed her complete satisfaction by her manifest (or white because vapourous) exhalation.

4. Now the prince Aja, the ceremony of whose coronation was duly performed by his preceptor versed in the knowledge of the Atharva Veda became unassailable to his enemies, for it is like the union of fire and wind that the Brahmanical power is associated with that of missiles.

---

3. D. H. Din. and Chà., तस्य for तेन H. Din. and Chà. महाभिषेचनं for सहाभिषेचनं.; Chà. also notices the reading तेन । क्वापि " तेन " इति पाठः तत्र तेन अजेन सहेति व्याख्या.

4. H. reads दुरासदोऽरिभिः for दुरासदः परैः.

रघुमेव निवृत्तयौवनं तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान्गुणानपि ॥ ५ ॥
अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव संगतम् ।
पदमृद्धमजेन पैतृकं विनयेनास्य नवं च यौवनम् ॥ ६ ॥
सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ७ ॥
अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥

५. प्रजा नवेश्वरं तमजं निवृत्तयौवनं प्रत्यावृत्तयौवन रघुमेवामन्यन्त ( अज्ञासिषुः ) । न किंचिद्भेदकमस्तीत्यर्थः । कुतः । हि यस्मात्सोऽजस्तस्य रघोः केवलामेकां श्रियं ( राजराजलक्ष्मीं ) न प्रतिपेदे । किं तु सकलान् ( समस्तान् ) गुणाञ्छौर्यदाक्षिण्यादीनपि प्रतिपेदे । [ तथा हि । " प्रोक्षितायां व्रजत्यस्तं प्रजाधर्मो यशः सुखं । निवृत्तं च निवृत्तायां महाबन्धु ( र्घुः ) कुलाङ्गना " इति (?)—हे० ] । अतस्तद्गुणयोगात्तद्बुद्धिर्युक्तेत्यर्थः । [ यथा प्रजा रघौ प्रीतिमत्योऽभूवन् तथाजेऽपि आसन्निति तात्पर्यार्थः—चा० सु० ] ।

६. द्वयमेव । [ एवकारेण तु शुभंयुविशेषणमाकृष्टं । यथा विदुषा देवदत्तेन यज्ञदत्त एव संगत इति यज्ञदत्तस्यापि विद्वत्ता प्रतीयते । अन्ययोगव्यवच्छेदार्थो वा । नैवत्यन्यः—हे० ] । शुभंयुना ( शुभं मङ्गलं विद्यते यस्य तत् शुभंयु तेन ) शुभवता । " शुभंयुस्तु शुभान्वितः " इत्यमरः । " अहंशुभमोर्युस् " इति युस्प्रत्ययः । [ अनुनासिकाभावात् युवोरनाकाविति न भवति । तत्राह पदमंजरीकारः । उदितोर्युवाग्रहणात् अस्य उदितत्वं नास्तीति कृत्वा तत्रापि दूषण । नन्दनेत्यत्र ङीष् प्राप्नोति । अयमेव सिद्धान्तः अनुनासिक इति—हे० ]। द्वितयेन संगतं युतं सदधिकं शुशुभे । किं केनेत्याह—पदमिति । पैतृकं पितुरागतम् । " ऋतष्ठञ् " इति ठञ्प्रत्ययः । ऋद्धं समृद्धं पदं राज्यमजेन । अस्याजस्य नवं यौवनं विनयेनेन्द्रियजयेन च । [ यौवने विनयः सुदुर्लभः । अयं तु प्राप्तविभवो यौवनेऽपि विनयवानभूत्—चा० । प्राप्तराज्यलक्ष्मीकोऽप्यजो विनयवान्—सु० ] । " विजयो ह्रीन्द्रियजयस्तद्युक्तः शास्त्रमर्हति " इति कामन्दकः । राज्यस्थोऽपि प्राकृतवन्न दृप्तोऽभूदित्यर्थः ।

७. महाभुजः । [ इति सम्राड्लक्षण तारुण्यं चोक्तं—हे० ] । सोऽजोऽचिरोपनतां नवोपगतां मेदिनीं भुवम् । नवं पाणिग्रहणं विवाहो यस्यास्तां नवोढां वधूमिव । [ " मुग्धामर्जयत्येष मृदूपायेन सान्त्वयन् " इति रुद्रटः । रतिरहस्येऽपि । " मार्गैरालिंगनैर्वाक्यैश्चुम्बनैश्चापि सान्त्वयेत् " इति—हे० चा० ] । सहसा बलात्कारेण चेत् । " सहो बलं सहो मार्गः " इत्यमरः । इयं मेदिनी वधूर्वोद्वेगं भयं । ( वैरस्यमित्यर्थः) । व्रजेदिति हेतोः । सदयं सकृपं बुभुजे भुक्तवान् । " भुजोऽनवने " इत्यात्मनेपदम् ।

८. प्रकृतिषु प्रजासु । [ अमात्यादिषु—चा० सु० ] । मध्ये सर्वोऽपि जनः । अथ वा प्रकृतिष्वित्यस्याह-

5 The subjects looked upon him their new lord as Raghu himself returned to youth, for he inherited not only his (Raghu's) royal fortune but also all his good qualities

6 In this way only two things being joined to two other things respectively looked more beautiful by their combination viz the prosperous kingdom inherited from his father, by its union with Aja, and his youth by its union with moral discipline.

7 Then like a newly married bride, that king, though powerful, enjoyed the Earth, lately brought under his sway, with kindness, lest through violence she would fall into a state of terror.

8. "I alone am favoured by the lord of the earth," so thought every one of his subjects

5. A. B. C. E. H. He. Chá., Din. Va. Su. Vija. and Dhar., नरेश्वरं for नवेश्वरं.

6. H. reads शुभंयुना for शुभंयुना.

8. D. and Chá., अस्य भूपतेः for महीपतेः.

न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।
स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ ९ ॥
अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवित्तया ।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥ १० ॥
गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।
पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥

मित्यनेनान्वयः । व्यवधानं तु सह्यम् । सर्वोऽपि जनः प्रकृतिष्वहमेव महीपतेर्मतो महीपतिना मन्यमानः । " मतिबुद्धिपूजार्थेभ्यश्च " इति वर्तमाने क्तः । " क्तस्य च वर्तमाने " इति षष्ठी । इत्यचिन्तयदमन्यत । उदधेर्निम्नगाशतेष्विव । [ नदीषु सिन्धोः समवर्तित्वं प्रसिद्धं–हे० ] । अस्य नृपस्य । कर्तुः । " कर्तृकर्मणोः कृति " इति कर्तरि षष्ठी । क्वचिदपि जनविषये विमाननावगणनातिरस्कारो नाभवत् । यतो न कंचिदवमन्यतेऽतः सर्वोऽप्यहमेवास्य मत इत्यमन्यतेत्यर्थः । [ अयं ममायत्त इति उक्त्या सर्वस्य लोकस्य प्रियमतिरासीदिति भाव इति–चा० ] ।

९ स नृपो भूयसा बाहुल्येन खरस्तीक्ष्णो न । भूयसा मृदुरतिमृदुरपि न । किं तु पुरस्कृतमध्यमक्रमः (पुरस्कृतोऽङ्गीकृतो मध्यमः तीव्रत्वान्मृदुत्वरूपः क्रमो येन सः ) सन् । मध्यमपरिपाटीमवलम्ब्येत्यर्थः । पवमानो वायुः पृथिवीरुहांस्तरूनिव । नृपाननुद्धरन्ननुत्पाटयन्नेव नमयामास । अत्र कामन्दकः—" मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः । तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च संमतः " इति । [ तथा भारते । "तीक्ष्णादुद्विजते लोको मृदुं सर्वत्र बाधते । एवं वृद्धा महाराज मा तीक्ष्णो मा मृदुर्भव " इति–हे० चा० ] ।

१०. अथ रघुरात्मजं पुत्रं प्रकृतिष्वमात्यादिषु । [ प्रजासु–म० नु० चा० ] । प्रतिष्ठितं रूढमूलं वीक्ष्य ज्ञात्वा विनाशो धर्मो येषां तेषु विनाशधर्मसु । अनित्येष्वित्यर्थः । " धर्मादनिच्केवलात् " इत्यनिच्प्रत्ययः समासान्तः । त्रिदिवस्थेषु स्वर्गस्थेष्वपि विषयेषु शब्दादिषु आत्मवित्तया आत्मज्ञत्वेन । ( ब्रह्मज्ञत्वेन इति यावत् ) । निःस्पृहो निर्गततृष्णोऽभवत् । कुलधर्मश्चायमेवेत्याह—

११. दिलीपवंशजाः परिणामे वार्धके गुणवत्सुतेषु । [ गुणाः शौर्यधैर्यादय आभिगामिका वा ते विद्यन्ते येषां ते गुणवन्तः तेषु सुतेषु–चा० ] । रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः । तरुवल्कान्येव वासां-

There was no disrespect from him to any of his subjects, as among hundreds of rivers there is no disrespect to any from the ocean.

9 Neither too severe nor yet too mild he who had adopted a middle course of policy, subdued the kings without rooting them out of their thrones and so resembled the wind that simply bends down the trees without rooting them up.

10 Then having seen his son firmly established among his ministry and his subjects, became indifferent even to the heavenly objects of sense perishable by nature in consequence of his knowledge of the soul.

11 For, the descendants of Dilîpa having transferred their royal fortune to their qualified

9. D. मध्यमश्रिय for मध्यमक्रम ; A. B. C. E. He. Va. and Su.., अमन्तराव for अनुद्धरन्. Between 9-10, B. H. read the following verse and call it a मूलपाठः । " अथ वीक्ष्य गुणैः प्रतिष्ठितं । प्रकृतिष्वात्मजमात्मवित्तया (?) । पदवीं परिणामदर्शिनी । रघुरादत्तवनान्तगामिनी. H. om. 9 th stanza

10. B. C. E. Va Chà. Din. Dharm Su. and Vija , आत्मवत्तया for आत्मवित्तया. So also Malli., who says आत्मवत्तया इति पाठे निर्विकारमनस्कतयेत्यर्थः । उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते । " आत्मवान् सत्त्ववानकः " इत्युत्पलमालायां; A. C. He. Chà. Din Su. and Vija , विनाशधर्मसु, B. विनाशिधर्मिषु, D. E. and Va. विनाशधर्मिषु.

11. D. E. ककुत्स्थ for दिलीप; B. E. with Chà. Din and Su., यमिनः संयमिनां, D. यमिनः समित्यया for प्रयताः संयमिनो.

तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः ।
पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ १२ ॥
रघुरश्रुमुखस्य तस्य तत्कृतवानीप्सितमात्मजप्रियः ।
न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् ॥ १३ ॥
स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।
समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥

सि येषां तेषां संयमिनां यतीनां पदवीं । [ वनाश्रमं–चा० मार्ग–हे० ] । प्रपेदिरे । [ वानप्रस्थो जटिलश्चीराजिनवासा इत्यत्र चीरं वस्त्रखण्डो वल्कलं वेति विज्ञानेश्वरः–हे० ] । यस्मात्तस्मादस्यापीदमुचितमित्यर्थः ।

१२. अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं । [ " गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । सापत्यो निरपत्यो वा तदारण्यं समाश्रयेत् " इत्याह मनुरिति–हे० ] । पितरं तं रघुं सुतोऽजः । वेष्टनशोभिनोष्णीषमनोहरेण । [ पट्टबन्धेन वा–हे० ] । शिरसा पादयोः प्रणिपत्य । आत्मनोऽपरित्यागमयाचत । मां परित्यज्य न गन्तव्यमिति प्रार्थितवानित्यर्थः । [ अवेष्टनशोभिनेत्यकारप्रश्लेषो वा । उष्णीषं त्यक्त्वा नतामेत्यर्थः–हे० ] ।

१३. आत्मजप्रियः । ( प्रियोऽभीष्ट आत्मजः पुत्रः यस्य सः । " वा प्रियस्य " इति परनिपातः ) । पुत्रवत्सलो रघुः । अश्रूणि मुखे यस्य तस्याश्रुमुखस्य अजस्य तदपरित्यागरूपमीप्सितमभिलषितं कृतवान् । किं तु सर्पस्त्वचमिव ( कञ्चुलिकामिव । यथोरगस्त्यक्तं कंचुकं न गृह्णाति तद्वत् ) व्यपवर्जितां त्यक्तां श्रियं पुनर्न प्रतिपेदे न प्राप । [ औदासीन्यत्वेन स्थितः इत्यर्थः–हे० ] ।

१४. स रघुः किलान्त्यमाश्रमं प्रव्रज्यामाश्रितः पुरान्नगराद्बहिरावसथे स्थाने निवसन्नविकृतेन्द्रियः । जितेन्द्रियः सन्नित्यर्थः । [ इति निरभिलाषता–हे० ] । अत एव स्नुषयेव वध्वेव पुत्रभोग्यया । न स्वभोग्यया । श्रिया समुपास्यत शुश्रूषितः । जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किंचिदपेक्षितमासीदित्यर्थः । अत्र यद्यपि " ब्राह्मणाः प्रव्रजन्ति " इति श्रुतेः । " आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् " इति मनुस्मरणात् । " मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते " इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुः । तथापि " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इत्यादि श्रुतेस्त्रैवर्णिकसाधारण्यात् । " त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः " इति सूत्रकारवचनात् । " ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात् " इति स्मरणात् । "मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च । कुत्रचिद्ब्राह्मणस्यैवाश्रमाचक्षाणाः केचित्त्रैवर्णिकाधिकारं प्रतिपेदिरे । तथा सति " स किलाश्रममन्त्यमाश्रितः " इत्यत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः । अन्य-

sons, and themselves becoming self-controlled betook themselves in their old age to the life of ascetics whose garments are the barks of trees.

12 The son, with his head adorned with the royal tiara, having fallen at his father's feet who was eager to betake himself to a forest abode, implored him not to abandon him.

13 Raghu who was fond of his son acted up to the desire of him ( Aja ) whose face was streaming with tears, but did not resume the royal fortune which he had once abandoned, as a snake does not wear the slough ( skin ) which it had once cast.

14 It is said that Raghu whose senses were unaffected and who had betaken himself to the last stage in life ( fourth order ), took his abode in a place outside the city and was served by

---

14. H. reads:–स किल क्षितिपालपुङ्गवो निवसन्नावसथे [illegible] for स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।

प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम्
नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥ १५ ॥
यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।
अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ ॥ १६ ॥
अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः
अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः ॥ १७ ॥

था वानप्रस्थाश्रमतया व्याख्यायते "त्रिदशं विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्" इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् । अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात् । इत्यलं प्रासङ्गिकेन ।

१५. प्रशमे (परमशान्तौ) स्थितः पूर्वपार्थिवो रघुर्यस्य तत् । अभ्युद्यतोऽभ्युदितो नूतनेश्वरोऽजो यस्य तत् । प्रसिद्धं कुलं निभृतेन्दुनास्तमयासन्नचन्द्रेणोदितार्केण प्रकटितसूर्येण च नभसा (आकाशेन) तुलां सादृश्यं समारुरोह प्राप । न च नभसा तुलामित्यत्र "तुल्यार्थैः–" इत्यादिना प्रतिषेधस्तृतीयायाः । तस्य सदृशवाचितुलाशब्दविषयत्वात् । "कृष्णस्य तुला नास्ति" इति प्रयोगात् । अस्य च सादृश्यवाचित्वात् ।

१६. यतिर्भिक्षुः । [जितेन्द्रियत्वेनात्र यतिशब्दप्रयोगः–हे०] । पार्थिवो राजा तयोर्लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ । अपवर्गमहोदयार्थयोर्मोक्षाभ्युदयफलयोर्धर्मयोः । [धर्मादेव मोक्षोऽर्थश्चेति प्रसिद्धं–हे० चा० ] । निवर्तकप्रवर्तकरूपयोरित्यर्थः । [यदाह कात्यायनः । "यतोऽभ्युदयो निःश्रेयसहेतुः स धर्मः" इति–हे० ] । भुवं गतौ भूलोकमवतीर्णावंशाविव । जनैर्ददृशाते दृष्टौ । [यदाह कणभक्षः । "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति । ननु "आत्मन्यग्नीन्समाधाय ब्राह्मणः प्रव्रजेद्गृहात्" इति वाक्यतो ब्राह्मणस्यैव संन्यासकथनात्क्षत्रियस्य रघोर्यतिलिङ्गधारित्वं । अत्र समाधीयते । "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणं । बाहुजातोरुजातानां नैष धर्मः सनातनः" इति प्रकाशनाय ब्राह्मण इत्युपलक्षणं वा । ब्राह्मणस्यैव किंवा संन्यासः इति श्रुत्या विरुद्ध्यते । "लिङ्गमन्यासमरहितं प्रमाणं नावकल्पते" इति सुरेश्वराचार्यैः संन्यासस्य त्रैवर्णिकाधिकारस्य दर्शितत्वाद्रघावपि संभवति–चा० ] ।

१७. अजोऽजितस्याधिगमाय अजितपदलाभाय । [अजितानामरीणां अधिगमाय जयाय अभिमुखप्रस्थानाय ज्ञानाय वा–हे० चा०] । नीतिविशारदैर्नीतिज्ञैर्मन्त्रिभिर्युयुजे सङ्गतः । रघुरप्यनपायिपदस्योपलब्धये मोक्षस्य

Royal Fortune, as by a daughter in law who was every way worthy to be enjoyed only by his son.

15 That illustrious race of which the former king was in tranquillity imaginable, and which had a new lord risen to his place, resembled (lit. got to a footing of equality with) the sky in which the moon is almost set and the sun newly risen.

16. Raghu and his son wearing (respectively) a mark of asceticism and royalty appeared to the people like portions of two kinds of धर्म descended to the earth whose final ends were salvation and great rise.

17. In order to obtain what was (yet) unconquered Aja held a consultation with ministers

15. D. H. पूर्णपार्थिव for पूर्वपार्थिव, D. H. with He. Va. Cha. Din. and Dhar., ऊर्जस्वल नूतनेश्वर for अभ्युद्यतनूतनेश्वर.

16. C. with He. Cha. Su. Dhar. and Vija., अपवर्गमहोदयार्थयोः, A अपवर्गमहोदयार्थिनी, B. विनिवृत्तमहोदयार्थयोः, D. E. H. Val. and Din. अपवृत्तिमहोदयार्थयोः.

17. D. नीतिविचक्षणैः for नीतिविशारदैः, D. E. with Su. Vija. and Dhar., अनपाय° for अनपायि°; H. लब्धये for लब्धये; Between 17-18. B. H. D2. with Cha. He. Din. and Su., read the following:- "समपृच्छ्यत भूपतिर्युवा सचिवैः प्रत्यहमर्थसिद्धये । अपुनर्जननोपपत्तये प्रवणः संयमिभिर्मनीषिभिः" ; [ D2. समदृश्यत for समपृच्छ्यत So also noticed by Ha. ] H. om. the 18 th stanza.

नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा ।
परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम् ॥१८॥
अनयत्प्रभुशक्तिसंपदा वशमेको नृपतीननन्तरान् ।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥ १९ ॥

प्राप्तये । [ आत्मसाक्षात्काराय–चा० ] । यथार्थदर्शिनो यथार्थवादिनश्चाप्ताः । ( आप्तस्तु यथार्थवक्ता ) । तैर्योगिभिः समियाय संगतः । उभयत्राप्युपायचिन्तार्थमिति शेषः ।

१८. युवा नृपतिरजः प्रकृतीः प्रजाः कार्यार्थिनीरवेक्षितुम् । दुष्टादुष्टपरिज्ञानार्थमित्यर्थः । व्यवहारासनं धर्मासनमाददे स्वीचकार । [ तथा हि धर्मशास्त्रे । "विना नार्थेन संदेहे हरणं हार उच्यते । नानासंदेहहरणाद् व्यवहारः प्रकीर्तितः" इति–हे० उक्तं च याज्ञवल्क्येन । "व्यवहारान्नृपः पश्येत्" इति–चा० ] । प्रवयाः स्थविरो नृपती रघुस्तु । "प्रवयाः स्थविरो वृद्धः" इत्यमरः । [ योगशास्त्रनिर्दिष्टां–हे० ] धारणां चित्तस्यैकाग्रतां । [ योगविशेषं–हे० ] । परिचेतुमभ्यसितुमुपांशु विजने । "उपांशु विजनं प्रोक्तम्" इति हलायुधः । कुशैः पूतं विष्टरमासनमाददे । [ योगयाज्ञवल्क्यस्तु–हे० ] "यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इति वशिष्ठः । [ धारणालक्षणं विज्ञानेश्वरेणोक्तं । "संभ्राम्य छोटिकां दद्यात्कराग्रं जानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः । मध्यमो द्विगुणः श्रेष्ठः त्रिगुणो धारणा तथा" इति–हे० ] ।

१९. एकोऽन्यतरः । अज इत्यर्थः । अनन्तरान्स्वभूम्यनन्तरान्नृपतीन्यातव्यपार्ष्णिग्राहादीन्प्रभुशक्तिसंपदा कोशदण्डमहिम्ना वशं स्वायत्ततामनयत् । [ कोशदुर्गदण्डसंपत्प्रभुशक्तिः । विज्ञानसंपन्मन्त्रशक्तिः । पराक्रमसंपदुत्साहशक्तिः इति शक्तित्रयं–हे० ] । "कोशो दण्डो बलं चैव प्रभुशक्तिः प्रकीर्तिता" इति मिताक्षरायाम् । अपरो रघुः प्रणिधानयोग्यया समाध्यभ्यासेन । [ साध्यात्माभ्यासेन–हे० ] । "योग्याभ्यासार्कयोषितोः" इति विश्वः । शरीरगोचराञ्छरीराश्रयान्पञ्च । [ पञ्चग्रहणं प्राणादीनामर्थसूचकं–हे० ] । मरुतः प्राणादीन्वशमनयत् । [ उक्तश्च योगवासिष्ठे । "मारुतान्मरुतां स्थाने मनसैव समन्विते । धारयेत् पञ्चघटिका वशगास्तेन्तरानिलाः" इति । तथा नैषधेपि । "योग्यामुपास्मनुयुञ्जते ( वा ) मुमुक्षुः–हे० चा० ] । "प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । शरीरस्थाः" इत्यमरः । [ नागः कृकरकूर्मौ च देवदत्तो धनंजयः इत्यादयः । "हृदि प्राणः गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः । घोषे धनंजयो ज्ञेयः क्रंदने कृकरः स्मृतः । जृंभायां देवदत्तः स्यादुद्गारे नागनामकः । उन्मीलने भवेत्कूर्मो दशैवं मरुतो मताः" इत्यमरशेषे–हे० ] ।

---

well-versed in politics,—while Raghu, for obtaining imperishable position ( salvation ), kept company with adepts in Yoga philosophy who never spoke but the truth

18. The young king took the judgment seat in order to look into the cases of his subjects, but the aged king sat, in solitude, on a seat made holy by the Kus'a-grass to practise the abstract concentration of the mind

19 The one ( Aja ) by the excellence of his sovereign power brought under his sway the neighbouring kings while the other ( Raghu ), by the practice of profound meditation subdued the five vital airs existing in the body

---

Between 18-19. B, E with He Chr. Din. Su. and Dhar., read the following:–" नयचक्षुरजो दिदृक्षया पररन्ध्रस्य ततान मण्डलं । हृदये समरोपयन्मनः परमं ज्योतिरवेक्षितुं रघुः " । [ B. मडलं. Dhar. मंचं for मण्डलं ]. Between 19-20. B. H. read:–" अनुरंजयितुं प्रजाः प्रभुर्व्यवहारासनमाददे नवः । अपरः शुचिविष्टराश्रयः परिचेतुं यतते स्म धारणाः " । [ H. reads धारणां for धारणाः ]

19. H. om. the 19 th stanza.

अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ॥
अपरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥ २० ॥
पणबन्धमुखान्गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥ २१ ॥
न नवः प्रभुरा फलोदयात्स्थिरकर्मा विरराम कर्मणः ।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥ २२ ॥

२०. अचिरेश्वरः ( नूतनः प्रभुः ) अजः । [ चिरशब्दो नाव्ययं–हे० ] । क्षितौ ( भुवि ) द्विषताम् ( शत्रूणां ) आरम्भाः कर्माणि तेषां फलानि भस्मसादकरोत्कार्त्स्न्येन भस्मीकृतवान् । ( कार्त्स्न्येन भस्म संपद्यते इति भस्मसात् ) । " विभाषा साति कार्त्स्न्ये " इति सातिप्रत्ययः । [ कर्मशब्देन लक्षणतस्तदुपार्जितौ धर्मौ गृह्येते–चा० सु० ] । अपरो रघुर्ज्ञानमयेन तत्त्वज्ञानप्रचुरेण वह्निना पावकेन । करणेन । स्वकर्मणां भवबीजभूतानां । [ पुण्यपापानां–हे० ] । दहने भस्मीकरणे ववृते । स्वकर्माणि दग्धुं प्रवृत्त इत्यर्थः । " यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा " इति गीतावचनात् । [ उक्तं च वाशिष्ठेन । " ज्ञानमात्मस्वरूपस्य वेदनं मनसैव हि " इति–हे० चा० ] ।

२१ " पणबन्धः संधिः " इति कौटिल्यः । अजः पणबन्धमुखान्संध्यादीन्षड्गुणान् । " संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः " इत्यमरः । तत्फलं तेषां गुणानां फलं समीक्ष्यालोच्योपायुङ्क्त । फलिष्यन्तमेव गुणं प्रायुङ्क्तेत्यर्थः । " प्रोपाभ्यां युजेरयज्ञपात्रेषु " इत्यात्मनेपदम् । समं तुल्यतया भावितं लोष्टं मृत्पिण्डः काञ्चनं सुवर्णं च येन स समलोष्टकाञ्चनः । निस्पृह इत्यर्थः । " लोष्टानि लेष्टवः पुंसि " इत्यमरः । रघुरपि गुणत्रयं सत्त्वादिकम् । " गुणाः सत्त्वं रजस्तमः " इत्यमरः । प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्रकृतिस्थं पुनरविकारशून्यं यथा तथाजयत् । [ सांख्यमतं हि । प्रधानाश्रिताः गुणाः पुरुषस्तु निर्गुणः ज्ञानमपवर्ग इति–चा० ] ।

२२. स्थिरकर्मा फलोदयकर्मकारी नवः प्रभुरज आफलोदयात् फलोदयसिद्धिपर्यन्तं कर्मण आरम्भाद्विरराम न निवृत्तः । [ अनेन महापुरुषलक्षण–हे० ] । " जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् " इत्य-

20 The new king completely [illegible] the effects consequent on the enemy's undertakings on the earth, while the other was bent on the destruction (lit. burning) of his own actions by the fire consisting of knowledge.

21 Aja employed the six expedients beginning with peace after having scrutinized their results, Raghu too, with whom a clod and gold were of equal value, overcame the three qualities (the Gunas or attributes) [illegible] Prakriti (or nature).

22 Neither the new king, who was steadfast in actions, ceased from his undertakings until

20. C. D. H. with He. Chi. Din Va. Sa. Dhar. and Vija., इतरः for अपरः; E. reads ववृतः for ववृते, B. ज्ञानमयेन तेजसा, D. and Va. ध्यानमयेन चक्षुषा, E. H. ध्यानमयेन वह्निना for ज्ञानमयेन वह्निना.

21. B. षड्गुणायुङ्क्त for षडुपायुङ्क्त. A. C. अप्यजयत. So also noticed by He. B. अध्यगमत् D. E. with H. He. Chà. Va. Su. Dhar. and Vija., अप्यगमत्.

22 D. and He. स्थिरबुद्धि for स्थिरधीरा . So also noticed by He.; D. परमार्थदर्शनात् for परमात्मदर्शनात्.

इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥ २३ ॥
अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः ।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥ २४ ॥
श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनाग्निमग्निचित् ॥ २५ ॥

पादानात्पञ्चमी । "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । स्थिरधीर्निश्चलचित्तः [ "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते" इति गीतासु । स्थिता: प्रतिष्ठिताः अहमस्मि परं ब्रह्मेति धीर्यस्य " इति गीताभाष्ये–हे० ] । नवेतरो रघुश्च परमात्मदर्शनात्परमात्मसाक्षात्कारपर्यन्तं योगविधेरैक्यानुसंधानान्न विरराम । [ संयोगो योग इत्युक्तेर्जीवात्मपरमात्मनोर्दर्शनात् इति योगवासिष्ठः । योगश्चित्तवृत्तिनिरोधः इति वा–हे० चा० ] ।

२३. इत्येव प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः । [ दिशानिष्क्रमणं विषयासंगश्च–हे० चा० सु० ] । येषां तेषु शत्रुषु चेन्द्रियेषु च जाग्रतावप्रमत्तावुदयापवर्गयोरभ्युदयमोक्षयोः प्रसितावासक्तौ । "तत्परे प्रसितासक्तौ" इत्यमरः । उभावजरघू उभयीं द्विविधामभ्युदयमोक्षरूपाम् । "उभादुदात्तो नित्यम्" इति तयप्प्रत्ययस्यायजादेशः । "टिड्ढा–" इति ङीप् । सिद्धिं फलमवापतुः । उभावुभे सिद्धी यथासंख्यमवापतुरित्यर्थः ।

२४. अथ रघुः । [ मानापमानयोः सुखदुःखयोश्च–हे० ] । समदर्शनः सर्वभूतेषु समदृष्टिः सन्नजव्यपेक्षयाजाकाङ्क्षानुरोधेन । ( न तु स्वेच्छया ) । काश्चित्समाः कतिचिद्वर्षाणि । "समा वर्षे समं तुल्यं" इति विश्वः । [ समाशब्दो बहुवचनान्तः एकवचनान्तो वा । तथा प्रतापमार्तण्डः । "शरत्स्त्रियां समाः स्त्रीत्वे भूम्न्येकत्वे च दृश्यते"–हे० ] । गमयित्वा नीत्वा योगसमाधिनैक्यानुसंधानेन । [ जीवात्मपरमात्मनोर्योगविषयेण–हे० ] । "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वसिष्ठः । अव्ययमविनाशिनं तमसः परमविद्यायाः परम् । मायातीतमित्यर्थः । [ अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिविपरीतज्ञानमविद्या–हे० ] । पुरुषं परमात्मानमापत्प्राप । सायुज्यं प्राप्त इत्यर्थः । [ "महान्तस्तमसः परं पुरुषं ज्वलनप्रभं । ज्ञात्वा मृत्युमुपेत्यंति"–हे० ] ।

२५. अग्निचिदग्निं चितवानाहितवान् । "अग्नौ चेः" इति क्विप्प्रत्ययः । राघवोऽजः पितुः श्रुतदेह-

---

the rise ( attainment ) of their results, nor [illegible] from the practice of profound meditation until the visitation ( or vision ) of the Supreme Soul

23 In this way both of them, the one who was watchful of the enemies who were baffled in their hostile attempt and the other against the organs of sense, whose cravings were totally curbed, being devoted the one to worldly prosperity and the other to the final beatitude ( i. e. the liberation of the soul from the body and exemption from further transmigration ), obtained respectively the complete attainment of their desired objects

24 Then Raghu who looked upon all beings with an equal eye, having passed some years with regard to the wishes of Aja, attained by means of the profound meditation the eternal spirit that is beyond ( or free from ) darkness (ignorance)

25. The son of Raghu who had consecrated the sacrificial fire and who had then heard of

---

23. B. C. E. H. with Cha Va. and Su., प्रसृतौ for प्रसितौ; D. E. and Su., उभयां for उभयीं.

25. B. C. E. H. With. Châ. Din. Val. Su. and Vija., विसृज्य for विमुच्य; B. अग्निचित् for अग्निचित्. Châ. says—" यतिभिः सार्धमनग्निमग्निविद् " इति कविपाठः । H. reads " विततान समं पुरोधसा क्रतुमन्त्यं पृथिवीशतक्रतोः for विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्.

अकरोत्स तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्यकल्पवित् ।
न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥ २६ ॥
स परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।
शमिताधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥ २७ ॥

विसर्जनं आकर्णितपितृतनुत्यागः । संश्रितमश्रूणि बाष्पाणि विमुच्य विसृज्यास्य पितुरनग्निम् । अग्निसंस्काररहितमित्यर्थः । नैष्ठिकं निष्ठायामन्ते भव । [ वसुधातलस्थापनरूपं–चा० ] । विधिविधाज्ञामन्तेषि यतिभिः सन्यासिभिः सार्धं सह विदधे चक्रे । [ यथा संन्यासिनामन्तेष्टिरभिहिता तथा तैरेव समं विहितवानिति भावः–चा० ] । अनग्निं विधिमित्यत्र शौनकः—" सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया । निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् " इति ( एतदर्थं हेमाद्रिचारित्रवर्धनदिनकरसुमतिविजयादिभिर्व्याख्यातं ) ।

२६. पितृकार्यस्य तातश्राद्धस्य कल्पवित् । ( कल्पाः प्रतिपादनग्रन्थाः तान् वेत्तीति ) । विधानज्ञः सोऽजः पितृभक्त्या पितरि प्रेम्णा । कारणेन । न पितुः परलोकसुखापेक्षया । मुक्तत्वादिति भावः । तस्य रघोरौर्ध्वदेहिकम् । देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकमकरोत् । [ " मृतार्थं यद्देहे दानं त्रिषु स्यादौर्ध्वदेहिकम् "–हे० ] । " ऊर्ध्वं देहाच्च " इति वक्तव्यादकप्रत्ययः । अनुशतिकादित्वादुभयपदवृद्धिः । ननु कथं भक्त्यैव श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशंक्याह—न हीति । तेन पथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषास्तनयेनावर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ता न हि भवन्ति । ( पुत्रदत्तग्रासाभिलाषिणो न हि भवन्ति इत्यर्थः ) ।

२७. [ मोक्षगामित्वात्–हे० ] । परार्ध्यगतेः प्रशस्तगतेः प्राप्तमोक्षस्य पितुरशोच्यतामशोचनीयत्वमुद्दिश्याभिसंधाय । शोको न कर्तव्य इत्युपदिश्येत्यर्थः । [ " परिव्राजि विपन्ने तु पतिते चात्मवेश्मनि । कार्यो न शोको ज्ञातीनामन्यथा दोषभागिनः " इति सुमन्तुः–हे० चा० ] । सदर्थवेदिभिः परमार्थज्ञैर्विद्वद्भिः । ( वसिष्ठादिशास्त्रिभिः इति यावत् ) । शमिताधिः । ( शमिता शान्तीकृता आधिर्मानसी पीडा यस्य सः ) । निवारितमनोव्यथः । " पुंस्याधिर्मानसी व्यथा " इत्यमरः । सोऽजोऽधिज्यकार्मुकः । अधिज्यमारोपितमौर्वीकं कार्मुकं यस्य स तथोक्तः सन् । जगत्कर्मभूतमप्रतिशासनं । ( न विद्यते प्रतिशासनं प्रतिनृपतेराज्ञा यत्र तत् ) । द्वितीयाज्ञारहितम् । आत्माज्ञाविधेयमित्यर्थः । कृतवांश्चकार ।

his father's resignation of body shed tears for a long time and celebrated his obsequies without fire, in company with recluses.

26 He who knew the procedures of the religious rites due to manes, performed the obsequies through filial devotion to his father for those who quit the body in that way are not desirous of the rice-balls offered by their sons.

27. Then that king, whose bow was strung and whose mental grief was soothed by men versed in the knowledge of the highest truth (i.e. philosophers) on the ground of the unlamentable condition of his father who had attained the highest bliss, rendered the world destitute of a rival-command (ruled the sole master of the world).

26 D. H. with Din. and Chā., विदधे for अकरोत्; A. B. C. E. with He. Va. Su. Dhar. and Vija., च for सः.

क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।
प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत्सुतम् ॥ २८ ॥
दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥
ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥

२८. क्षितिर्मही भामिनी कामिनीन्दुमती च । " भामिनी कामिनी च " इति हलायुधः । अग्र्यपौरुषं महापराक्रममुत्कृष्टभोगशक्तिं च तमजं पतिमासाद्य प्राप्य । तत्र प्रथमा क्षितिः । बहूनि रत्नानि श्रेष्ठवस्तूनि सूत इति बहुरत्नसूरभूत् । " रत्नं स्वजातिश्रेष्ठेऽपि " इत्यमरः । अपरेन्दुमती वीरं । ( विशेषेण शत्रून् ईरयति कम्पयति इति वीरस्त )। सुतमजीजनज्जनयामास । जायतेर्णौ लुङि रूपम् । सहोक्त्या सादृश्यमुच्यते। [ भामिनीशब्देन भुवः सापत्न्यात् स्पर्धया इव पुत्रमसूतेति भावः-हे० ] । किंनामकोऽसावत आह—

२९. दश रश्मिशतानि यस्य स दशरश्मिशतः सूर्यः । स उपमा यस्याः सा दशरश्मिशतोपमा द्युतिर्यस्य तम् । यशसा । करणेन । दशस्वपि दिक्ष्वाशासु श्रुत प्रसिद्धम् । दशकण्ठारे रावणारे रामचन्द्रस्य गुरुं पितरं यं सुतम् । आख्यया नाम्ना दशपूर्वो दशशब्दपूर्वो रथो रथशब्दस्तम् । दशरथमित्यर्थः । बहुव्रीहिरत्र नेष्टः । तदर्थानुपपत्तेः । अनेककोटिरथत्वाच्च दशरथस्य । इत्याशयेन नामैव पूर्वपदं व्यवहितं प्रयुक्तम् । एतदनुसारान्माघेऽपि—" हिरण्यपूर्वं कशिपुं प्रचक्षते " इति प्रयुक्तम् । [ दशरथस्यार्थपरत्वे वा । विवक्षितस्यार्थस्य कष्टकल्पनायाः प्रतीतेः अलंकारज्ञा नानुमन्यन्ते । प्रयोगश्च । " हिरण्यपूर्वं कशिपुं प्रचक्षते " इति माघे । " धनुरुपपदमस्मै वेदमभ्यादिदेश" इति किरातार्जुनीये । यमाख्ययेति ग्राम्य यमप्रतीतेः-हे० कविः स्वसमयापेक्षया दशकण्ठेत्यादि प्रायुङ्क्त । अथ वा प्रवाहरूपत्वाज्जगतोऽनादित्वाद्रामपरम्परया अप्यनादित्वान्न दोषः । अस्मिन् श्लोके दशरथेति प्रयोक्तुमशक्यत्वाद्दशपूर्वरथेत्यादिप्रयोगे कविभिरादृतत्वान्न दोषः—चा० सु० ]। बुधा विद्वांसो विदुर्वदन्ति । " विदो लटो वा " इति झेरुसादेशः । [ अनुप्रासः-हे० ] ।

३०. श्रुतयागप्रसवैरध्ययनयज्ञसंतानैः । करणैः । यथासंख्यमृषीणां देवगणानामिन्द्रादीनां स्वधाभुजां । [ स्वधापूर्वं यद्दत्तं कव्यादि तद्भुञ्जत इति स्वधाभुजस्तेषां--चा०] । पितॄणामनृणत्वमृणविमुक्तत्वमुपेयिवान्प्राप्तवान् । [ " ऋणं देवस्य यज्ञेन पितॄणां दानकर्मणा। संतत्या पितृलोकानां धारयित्वा परिव्रजेत्"—चा०]। " एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा " इति श्रुतेः । स पार्थिवोऽजः परिधेः परिवेशात् । " परिवेशस्तु परिधिः " इत्यमरः । मुक्तो निर्गतः। कर्मकर्ता । उष्णदीधितिः सूर्य इव । बभौ दिदीपे । इत्युपमा ।

---

28. Thus the earth and his wife Indumati, having obtained him for their husband who possessed the greatest valour, the former became the producer of many invaluable things and the latter gave birth to a brave son.

29. Whom wise men know by the name of "Ratha" with "Daśa" as its prefix and as the father of the enemy of the ten-necked demon whose personal lustre was comparable to that of the thousand-rayed luminary (sun) and who was known by his bright renown even in the ten quarters.

30. That king, having freed himself from the debts due to the sages, gods and the Svadha eaters (i. e. manes) by means of the study of the Vedas, performance of sacrificial ceremonies and

---

28. D. H. भाविनी for भामिनी. So also He. and Chà., notice it; D. आजग्मतुः for आसाद्य त. So also noticed by Chà.; A. D. उग्रपौरुषं for अग्र्यपौरुष; A. D. बहुरत्नभूः for बहुरत्नसूः; A. इतरा for अपरा; H. धीरं for वीरं.

30. E. reads °गणस्तदाभुजां for °गणस्वधाभुजां.

बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ ३१ ॥

स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥ ३२ ॥

अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥ ३३ ॥

३१. तस्य विभोरजस्य केवलं वसु धनमेव परप्रयोजनं परोपकारकं नाभूत् । किं तु गुणवत्तापि (गुणानां शौर्यादीनां भावः) गुणित्वमपि परप्रयोजना परेषामन्येषां प्रयोजनं यस्याः सा । परप्रधाना । [ उक्तञ्च कुमारसंभवे । " अकालसंध्यामिव धातुमत्ता "—हे० ] । विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणं वस्त्वित्यत्र तृहनीयम् । तथा हि । बलं पौरुषमार्तानामापन्नानां भयस्योपशान्तये निषेधाय । न तु स्वार्थं परपीडनाय वा । बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय । न तूत्सेकाय । बभूव । तस्य धनं परोपयोगीति किं वक्तव्यम् । बलश्रुतादयोऽपि गुणाः परोपयोगिन इत्यर्थः ।

३२. अवेक्षितप्रजोऽकृतानवधानत्वेनानुसंहितप्रजः । " नित्यमसिच्प्रजामेधयोः " इत्यच्प्रत्ययः । न केवलं [illegible]ण इति भावः । शोभना प्रजा यस्यासौ सुप्रजाः । सुपुत्रवान् । पुत्रस्यासभार इति भावः । सोऽजः कदाचित् ( कस्मिंश्चित्प्रस्तावे ) देव्या । ( " देवी कृताभिषेकायां " इत्यमरः ) । महिष्यन्तुमत्या सह नगरोपवनं नगरस्य पुरस्योपवनं । [ उपवनलक्षणं प्रकारेऽपि । " उद्यानोपवनारामा वनं प्रमदपूर्वकं । पञ्चधा निष्कुटं चेति वृक्षवाटी प्रशस्यते । गृहासंनिधिमाश्रित्य यद् उद्यानं तदुदाहृतं । पुरबाह्ये तु सामान्यं भवेदुपवनं नृणां । आरामस्त्वंगभोग्योऽपि वनं प्रमदपूर्वकं । अन्तःपुरोपभोग्यं स्यान्निष्कुटं तु गृहे कृतं । अमात्यगणिकादीनां सर्वं नानानकल्पकं । आरामं त्रिविधा द्रुमं शाकं पौष्पं विदुर्बुधाः इति हे० ] । नन्दने नन्दनाख्येऽमरावत्युपकण्ठवने शचीसखः । शच्या सहचरः । मरुतां देवानां । [ कर्तृकर्मणोः कृति नित्यमिति कर्तरि षष्ठी—चा० ] । पालयितेन्द्र इव । विजहार चिक्रीड ।

३३. अथ दक्षिणस्योदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतमाश्रितगोकर्णाख्यस्थानमीश्वरं महा-

issue (respectively) [illegible] like the [illegible] (the sun) freed from his misty halo (or circle).

31 Thus his bodily strength as well as his profound knowledge were equally devoted to allay the fears of the oppressed and to pay respect to the learned, so that not only the wealth of that [illegible] but his possession of virtues was everyway useful for others.

32. Once upon a time the king who had regard to his subjects and who had an excellent son, sported with his queen in the city garden as does the lord of शची, the protector of the gods, in the नंदन [illegible].

33 At this time the [illegible] Narada was [illegible] by the [illegible] of the sun's return from the north

31. A. सत्कृतय, B. C. E. H. with He. Va. Chi. Din. Su. Dhar and Vija., संनतये. also Malli. सनतय नामस्कारय D ममतय; D. E. न केवलं विभोः for विभोर्न केवलं; B. C. E. H. with He. Va. Su. and Vija., परप्रयोजन for परप्रयोजना.

32. D. नन्दन for नन्दन.

33. D. He. and Va. श्रुत for श्रित. A उपवर्णयितुं, E उपवेणयितुं for उपवीणयितुं; B. C. E. H. Va. and Su., उदयावृत्ति for उदगावृत्ति. So also Malli., who says " उदयावृत्तिपथेन " इति पाठे सूर्यस्य संबोधनावयावृत्तिपथेन आकाशमार्गेण. On this reading Chā. says " उपवीणयितुं रवयंयानुदगावृत्तिपथेन नारदः " इत्येव मुख्यः पाठः and notices " उपवीणयितुं मुनिः पथा पवमानस्य जगाम नारदः " also supported by D. This reading is also noticed by He.

कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत्किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४ ॥
भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।
ददृशे पावनावलेपजं सृजती बाष्पमिवाञ्जनाविलम् ॥ ३५ ॥

देवमुपवीणयितुं वीणयोपसमीपे गातुम् । " सत्यापपाश "—इत्यादिना वीणाशब्दादुपगानार्थे णिच्प्रत्ययः । ततस्तुमुन् । नारदः । [ नराणां समूहो नारं तद् द्यति खण्डयति कलिदानात् इति नारदः–हे० ] । देवर्षी रवेः सूर्यस्य उदीच उत्तरस्या दिश आकाश आवृत्तिर्निवर्तनम् ( उदगावृत्तिः ) तस्याः पन्थाः गतिप्रकारस्तेन । [ स्तिमितत्वभयेन घनपथं परित्यज्य सूर्यमार्गेण गमनमित्यर्थः–चा० ] । यथा रविरुत्तरस्या दिशो व्यावृत्त दक्षिणायनमागच्छति तद्वदित्यर्थः । ययौ जगाम । सूर्योपमामेनास्यातितेजस्त्वमुच्यते ।

३४. अपार्थिवैरभौमैः । दिव्यैरित्यर्थः । कुसुमैर्ग्रथितां गुम्फितां । तस्य नारदस्यातोद्यस्य वाद्यस्य वीणायाः । [ यदाह भरतः । " ततं चैवानुविद्धं च घनं शुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यलक्षणान्वितं । ततं तन्त्रिगतं ज्ञेयं अनुविद्धं च पुष्करं । घनं कांस्यमयं ज्ञेयं शुषिरं वंश उच्यते " । आतोद्यशब्दो यद्यपि अविशेषेण वाद्यमात्राभिधायी तथाप्यत्रोपवीणयितुमित्युक्तत्वात् वीणैव । यद्वा । समुदायेषु हि प्रवृत्ताः शब्दाः अवयवेष्वपि वर्तन्ते इति–हे० । यद्यपि आतोद्यपदं चतुष्टये वाद्ये विद्यते तदप्यत्रप्रकरणाद्वीणावाची तदुक्तं । " शब्दात्प्रकरणाल्लिंगादौचित्याद्देशकालयोः । शब्दादर्थं विजानीयान्न शब्दादेव केवलात् " इति–चा० ] । शिरस्यग्रे निवेशिताम् । " चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् " इत्यमरः । स्रजं मालां वेगवान्मारुतः । अधिवासं संस्कारं । [ अधिवासो गन्धपुष्पादिकृतः संस्कारः तद्वाञ्छयेव । अनया स्रजा अहमपि संस्कृतो भवामीत्याशयेनेत्यादि–चा० ] । स्पृहयेव वासनयेव । स्रजा स्वाङ्गं संस्कर्तुमित्यर्थः । [ इत्युत्प्रेक्षा–हे० ] । " संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् " इत्यमरः । अहरत्किल । किलेत्यैतिह्ये ।

३५. कुसुमानुसारिभिः पुष्पानुयायिभिर्भ्रमरैरलिभिः परिकीर्णा परिवृता मुनेर्नारदस्य परिवादिनी वीणा । [ " विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी । शिवस्य वीणा नालम्बी गणानां तु प्रभावती " इति हेमचन्द्रः । " महती शततन्त्री " इति क्षीरस्वामी–हे० ] । " वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी " इत्यमरः । पवनस्य वायोरवलेपोऽधिक्षेपस्तज्जम् हरणरूपगर्वजातं । अञ्जनेन कज्जलेनाविलं कलुषं । [ कज्जलनील–हे० ] । बाष्पमश्रु सृजती मुञ्चतीव । [ इत्युत्प्रेक्षा–हे० ] । ददृशे दृष्टा । ( लोकैरिति शेषः ) । भ्रमराणां साञ्जनबाष्पबिन्दुसादृश्यं विवक्षितम् । [ अन्याप्यवमानिता साञ्जनं अश्रु त्यजति—हे० सु० ] । " वा नपुंसकस्य " इति वर्तमाने । " आच्छीनद्योर्नुम् " इति नुम्विकल्पः । [ कुसुमानुसारिभिरिति तच्छीलको " णि-

---

to sing in harmony with his lute unto Is'vara who had taken his abode in the temple of Gokarna on the shores of the southern ocean.

34 It is said that a violent gust of wind took away a garland hung on the top of the वीणा, and was strung together with celestial flowers ( lit not produced on earth ), as if with the desire of fragrance.

35. The वीणा of the sage, which was surrounded by black bees moving after the flowers, was seen, as it were, to shed tears caused by the insult given by the Wind, and soiled with collyrium.

35. A. B. C. E. H. with He. Châ. Din. Va Su. Dhar. and Vija., विनिकीर्णा for परिकीर्णा.

अभिभूय विभूतिमार्तवीं मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम् ॥ ३६
क्षणमात्रसखीं सुजाततयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ३७ ॥
वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ ३८ ॥

नि ” । “ सुपि च ” इत्यनुवर्तमाने पुनः सुपग्रहणं उपसर्गस्य निवृत्त्यर्थम् । केवलस्योपसर्गस्य निवृत्त्यर्थं इष्यमिति जयमङ्गलाकारः । तथा भट्टिकाव्ये । “ सकर्मकः कर्मसुतानुबन्धि ” इति । तथात्रैव । “ तामभ्यगच्छद्रुदितानुसारी ” इति—हे० ] ।

३६. सा अमरस्रग्दिव्यमाला । मधुगन्धयोर्मकरन्दसौरभयोरतिशयेनाधिक्येन । करणेन । वीरुधां लतानाम् । “ लता प्रतानिनी वीरुत् ” इत्यमरः । ऋतोः प्राप्तामार्तवीमृतुसंबन्धिनीं । वसंततुसंभवामित्यर्थः । विभूतिं समृद्धिम् । अभिभूय तिरस्कृत्य नृपतेरजस्य दयितायाः इन्दुमत्या उर्वोर्विशालयोः स्तनयोर्ये कोटी चूचुकौ तयोः सुस्थितिं । सोऽप्यस्थाने पतितत्वात् । प्रशस्तां स्थितिं स्थानं आप प्राप्ता ।

३७. सुजातयोः सुजन्मनोः । सुन्दरयोरित्यर्थः । [ “ सुजातं सुन्दरं प्रोक्तं सम्यग्जाते च वस्तुनि ” इति त्रिविक्रमः—हे० ] । स्तनयोः । [ सखीकुचालिङ्गनात् स्तनयोरिति षष्ठी सप्तमी वा—हे० ] । क्षणमात्रसखीं सखीमिव स्थिताम् । सजातत्वसाधर्म्यात्स्रजः स्तनसखीत्वमिति भावः । तां स्रजमवलोक्यैव दृष्ट्वा विह्वला परवशा नरोत्तमप्रियेन्दुमती । तमसा राहुणा । “ तमस्तु राहुः स्वर्भानुः ” इत्यमरः । हृतचन्द्रा कौमुदी चन्द्रिकेव । निमिमील मुमोह । ममारेत्यर्थः । “ निमीलनं दीर्घनिद्रा च ” इति हलायुधः । [ “ दीर्घनिद्रा निमीलनम् ” इत्यभिधानचिन्तामणिः—चा० ] । कौमुद्या निमीलनं प्रतिसंहारः ।

३८. करणैरिन्द्रियैरुज्झितेन मुक्तेन । “ करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ” इत्यमरः । वपुषा निपतन्ती सेन्दुमती पतिमजमप्यपातयत्पातयति स्म । [ नन्वेकस्य पाते कथमन्यस्य पात इत्याह—हे० सु० ] । तथा हि । निषिच्यत इति निषेकः । तैलस्य निषेकस्तैलनिषेकः । अरत्तैलमित्यर्थः । तस्य बिन्दुना सह दीपार्चि-

36. That celestial garland which [illegible] of honey eclipsed [illegible] vernal [illegible] of creepers [illegible] the nipples of the expansive [illegible] of the King's beloved wife.

37. That beloved wife of the best [illegible] of men [illegible] that garland the momentary companion of her well-formed breasts [illegible] with like moonlight in which the moon is totally eclipsed [illegible]

38. She falling down with her body [illegible]

36. A. दयितोरुस्तनकोटिसुस्थिति B. with He. Cha. Va. Su. Dha. and Vija., दयितोरःस्थलकोटिसुस्थिति. C. दयितोरःस्तनकोटिसुस्थिति D. दयितोरुस्तनकोटिषु स्थि-. So also noticed by He. D2. दयितोरस्तनकोटिरत्नता So also Cha. & Su., notice it. E दयितोरुस्थलकोटि [illegible] H. दयितोरःस्थलरत्नकोटिषु.; A2. H. and Cha. [illegible] सा महीपतेः for नृपतेरमरस्रगाप सा So also noticed by He., Cha. also notices अन्यत्र । “ नृपतेरमरस्रगाप सा ” इति पठ्यते ।

37. D. E. with He. and Va., नरेन्द्रप्रिया for नरोत्तमप्रिया; D2. समनन्तरं निमिमील [illegible] for हृतचन्द्रा तमसेव कौमुदी. H. reads पुनरप्रतिबद्धलम्भना निमिमीलोज्झितदीपसुन्दरा for निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी. Between 37-39 B. E. and Su., read “ समसेव मरालिपेन सा गुरुसंमोहविलुप्तचेतना । अगमत्सह तैलबिन्दुना ननु दीपार्चिरिव क्षितेस्तलं ” ।

उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः ।
विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥ ३९ ॥
नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता ।
प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ४० ॥
प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥ ४१ ॥

दीपज्वाला मेदिनीं भुवमुपैति ननु पतत्येव । नन्वित्यवधारणे । "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः । [ "प्रश्नावधारणेनित्यमर्मीहानुमते ननु" इति यादवः—हे० ] । इन्दुमत्या दीपार्चिरुपमानम् । अजस्य तैलबिन्दुः । तत एव तस्या जीवितसमाप्तिरस्य जीवितशेषश्च सूच्यते ।

३९. उभयोर्दम्पत्योः । ( अजेन्दुमत्योः ) । पार्श्ववर्तिनां परिजनानां तुमुलेन संकुलेन आर्तरवेण करुणस्वनेन । ( "तुमुलं सकुलं रणे" इति हलायुधः ) । वेजिता भीताः कमलाकरालयाः । ( कमलानां आकर एव आलयः एषां ते तथोक्ताः ) । सरःस्थिता विहगा हंसादयोऽपि तत्रोपवने समदुःखा इव । तत्पार्श्ववर्तिनां समानशोका इव । चुक्रुशुः क्रोशन्ति स्म । [ तद्दीनस्वरं श्रुत्वा पक्षिणोऽपि रुरुदुरिति भावः—सु० ] ।

४०. नृपतेरजस्य तमोऽज्ञानं । मूर्च्छा इत्यर्थः । व्यजनादिभिः सान्त्वनमनुनदऽपसारितम् । आदिशब्देन जलसेककर्पूरक्षोदादयो गृह्यन्ते । सा त्विन्दुमती तथैव तेन मूर्च्छाप्रकारेणैव संस्थिता मृता । [ तुल्येपि कारणे अजः कथं बुद्धः सा मृतेति हेतुमाह—हे० चा० सु० ] । तथा हि । प्रतिकारविधानं चिकित्साकरणं । ( कर्तृ ) । आयुषो जीवितकालस्य शेषे सति विद्यमाने । "आयुर्जीवितकालो ना" इत्यमरः । फलाय सिद्धये कल्पते समर्थं भवति । ( "क्लृपि सम्पद्यमाने च" इति चतुर्थी ) । नान्यथा नृपतेरायुःशेषसद्भावात्प्रतीकारस्य साफल्यम् । तस्यास्तु तदभावाद्वैफल्यमित्यर्थः ।

४१. अथ ( अनंतरं ) सत्त्वस्य चैतन्यस्य विप्लवाद्विनाशाद्धेतोः । "द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः । प्रतियोजयितव्या तन्त्रिभिर्योजनीया । न तु योजिततन्त्रीत्यर्थः । या वल्लकी वीणा । तस्याः समावस्था दशा । [ "संपाभ्यां समर्थाभ्याम्" इत्यत्र संशब्दस्य समानार्थत्वं तद्वत्समावस्थामिति । यद्वा । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति अकारलोपः—हे० चा० ] । यस्यास्ताम् ( अपशब्दां ) अङ्गनां

drop down for does not the flame of [illegible] to the ground together with the flaming drops of [illegible]

39 [illegible] by the confused shouts of lamentation of the attendant [illegible] of both, the birds living in the repository of lotuses began to cry there as if they were equally grieved

40 Then the swoon of the king was removed by fanning and other artificial means, but she remained in the same state of lifelessness for the medical treatment produces some effect when there is a residue of life

41 The king who was exceedingly devoted to his [illegible] held her up who through loss of consciousness was in a state similar to that of a वीणा the [illegible] of which are to be put in tune [illegible]

39. B. C. and Chá., परिपार्श्ववर्तिना, H. परिपार्श्ववर्तिभिः for अपि पार्श्ववर्तिना. B. C. E. H with He. Chá., Dm. Va. Su. Dhar. and Vija., कमलाकराश्रयाः for कमलाकरालयाः.

40. E. reads न for तु.

41. D. विह्वलां पुनः for सत्त्वविप्लवात्; H. सत्त्वयात for विप्लवात्; D. अङ्ग for अङ्क. Between 41-42 B. D2. Chá. Dm. He. Va. and Su. read "स निनाय नितान्तवत्सलः । परिपीडितपद्मकान्ति अनाम । मल्लिकाद्धनपरिम्लानमिभा । दयितांसदुमुदर्श्नलोचनः" [ D2. तथा for निभा, D2 ज्ञान for अनाम ] Hemadri and Charitravardhana call it a spurious stanza.

पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥ ४२ ॥
विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ ४३ ॥
कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥ ४४ ॥
अथ वा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ४५ ॥

वनितां नितान्तवत्सलोऽतिप्रेमवान्सोऽजः परिगृह्य हस्ताभ्यां गृहीत्वोचितं योग्यं परिचितं चाङ्कमुत्सङ्गं निनाय नीतवान् । वल्लकीपक्षे तु सत्त्वं तन्त्रीणामवष्टम्भकः शलाकाविशेषः ।

४२. पतिरजोऽङ्कनिषण्णयोत्सङ्गस्थितया करणानामिन्द्रियाणाम् । तदुपलक्षितस्य चैतन्यस्य वा । अपायेनापगमेन । ( नाशेन इति यावत् ) । हेतुना विभिन्नवर्णया विच्छायया तया । [ " इत्थंभूतलक्षणे ". इति तृतीया—हे० ] । उषसि प्रातःकाल आविलां मलिनां मृगलेखां लाञ्छनं मृगरेखारूपं बिभ्रद्धारयंश्चन्द्रमा इव । समलक्ष्यतादृश्यत । इत्युपमा ।

४३. सोऽजः सहजां स्वाभाविकीमपि धीरतां धैर्यमपहाय विप्रकीर्य बाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा तथा ध्वनिमात्रानुकारिगद्गदशब्दैर्विललाप परिदेवितवान् । " विलापः परिदेवनम् " इत्यमरः । धैर्यापहारे दुःखातिशयः कारणमित्याशयेनाह । [ धीरस्य कुतः शोक इति चेत् अत आह—हे०चा ] । अभितप्तमग्निना संतप्तमयो लोहमचेतनमपि मार्दवं मृदुत्वमधैरत्वं च भजते प्राप्नोति । शरीरिषु देहिषु अभिसंतप्तेष्विति शेषः । विषये कैव कथा वार्ता । अनुक्तसिद्धमित्यर्थः ।

४४. कुसुमानि पुष्पाण्यपि । ( कर्तॄणि ) । अपिशब्दो नितान्तमार्दवद्योतनार्थः । गात्रसंगमाद्देहसंसर्गादायुरपोहितुमपहर्तुं प्रभवन्ति समर्थानि भवन्ति यदि । हन्त विषादे । " हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः " इत्यमरः । तर्हि प्रहरिष्यतो हन्तुमिच्छतो विधेर्दैवस्यान्यत्कुसुमातिरिक्तं किमिव वस्तु । इवशब्दो वाक्यालंकारे कीदृशमित्यर्थः । साधनं प्रहरणं न भविष्यति न भवेत् । सर्वमपि साधनं भविष्यत्येवेत्यर्थः । [ असाधनं पुष्पमपि साधनं जातं अन्यत् किमुतेत्यर्थः—हे० चा० सु० ] ।

४५. अथ वा पक्षान्तरे प्रजान्तकः यमः मृदु कोमलं वस्तु मृदुनैव वस्तुना हिंसितुं हन्तुमारभत

---

42. There the husband appeared, on account of her lying on his lap with her complexion totally faded by the loss of the organs of sense, like the moon at dawn wearing on the disc the dim streak of the deer.

43. Then the king having given up even his natural fortitude, began to lament in accents choked with tears even iron when heated by fire gets softness, what then need be said of those that have ( frail ) bodies ?

44. If even flowers by their contact with the human body have the power of taking away life, then, alas ! what other thing will not be an instrument to Fate when it is bent upon striking.

45. Or perhaps the destroyer of men ( i. e. the god of death ) undertakes to destroy a soft

---

42. D. बिभ्रमाविलां for बिभ्रदाविलां.

43. E. सहसा for सहजां; B. C. D. E शरीरिणां for शरीरिषु. So also noticed by He.

45. C. D. E. with He. Va. and Su. गता for मता.

**स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।**
**विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥**
**अथ वा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।**
**यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥ ४७ ॥**

उपक्रमते । [ प्रजाग्रहणं कृतान्तस्य समस्तसाधारण्येन जीवनापहर्तृत्वसूचनार्थं प्रकटार्थं वा—चा० प्रजाग्रहणं विस्पष्टार्थं—हे० ] । अत्रार्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिर्मृत्युर्यस्याः सा तथा नलीनी पद्मिनी । [ अत्रार्थे—हे० ] । मे [ मया । तेमेशब्दौ निपातेषु द्रष्टव्यौ । " त्वया मयेत्यस्मिन्नर्थे " इति वामनः—हे० ] । पूर्वं प्रथमं निदर्शनमुदाहरणं मता संमता । द्वितीयं निदर्शनं पुष्पमृत्युरिन्दुमतीति भावः ।

४६. इयं ( कोमला ) स्रग्जीवितमपहन्तीति जीवितापहा । ( जीवनापहारिणी इत्यर्थः ) । यदि । हृदये वक्षसि । " हृदयं वक्षसि स्वान्ते " इत्यमरः । निहिता ( निक्षिप्ता ) सती मां किं न हन्ति । ईश्वरेच्छया [ दैवस्येच्छया—हे० ] । क्वचित्प्रदेशे विषमप्यमृतं भवेत्क्वचिदमृतं वा विषं भवेत् । [ अत्रेन्दुमतीनाशत्वादमृतरूपायाः मालायाः विषत्वं । सिद्धविषत्वायाश्च तस्या नृपाहननादमृतत्वं—हे० ] । दैवमेवात्र कारणमित्यर्थः । [ जीवितापहेत्यत्र शब्दः चिन्त्यः । " अपे: क्लेशतमसोः"—इति डस्य विधानात् । क्लेशशब्दतमोदुःखरोगज्वरादिषु डः । कर्मस्वपहन्तेः स्याद्वातः "पापापहः शिव" इति गणदर्पणोक्तेः घटते । यथात्र सप्तदशसर्गे । " परकर्मापहः सोऽभवत् " १७-६१ । एकोनविंशे सर्गेऽपि । "अन्वभुंक्त सुरतश्रमापहाम्" १९-३१ इति—हे० । जीवितापहेति चिन्त्यं । कथं । " आशिषि हनः " इत्यस्याप्राप्तेर्डप्रत्ययस्य । एके तु । " अपे क्लेशतमसोः"—इति नियमाद्यपि डप्रत्ययाभावस्तथाप्यन्यत्रापि दृश्यते इति प्रयोगानुसरणाद्दृशि ग्रहणाच्च साधुत्वं ब्रुवते—चा० ] ।

४७. अथ वा । [ इति पूर्वापेक्षायाः पक्षान्तरे—हे० चा० सु० ] । मम भाग्यस्य विप्लवाद्विपर्ययादेषः । स्रगित्यर्थः । विधेः प्राधान्यात्पुल्लिङ्गनिर्देशः । वेधसा विधात्रा । [ दैवेन—चा० ] । कर्त्रा । कुसुमावलिरूपोऽशनिर्वैद्युतोऽग्निः । [ वज्र—हे० चा० सु० ] । कल्पितः । " दम्भोलिरशनिर्द्वयोः " इत्यमरः । अपूर्वः कृत इत्यभिसन्धिः । अपूर्वत्वमेव स्पष्टयति । यद्यस्मात्कारणादनेन पुरोवर्तिनापि पुष्पाशनिना प्रसिद्धाशनिनेव तरुस्तरुस्थानीयः स्वयमेव । [ तरुरजो लतेन्दुमती—हे० ] । न पातितः न प्रध्वंसितः । किंतु तस्य तरोर्विटपाश्रिता शाखाधारा लता वल्ली क्षपिता नाशिता । [ अशनेः प्रायेणैषः स्वभावः यदुपरि शाखातरौ नाशयति न स्तम्भं—हे० ] । तच्छब्देनात्मा ध्वन्यते लताशब्देनेन्दुमती । लोके प्रसिद्धोऽशनिस्तरुं लतां च क्षपयति । अयं च लतामेव न तरुमित्यनेन प्रकारेणास्यापूर्वत्वमित्यभिप्रायः ।

---

thing only by means of a soft instrument, and herein the first instance observed by *me* is the lotus-plant being subject to destruction by the showers of dew.

46. If this wreath of flowers has the power of destroying life then why does it not kill me, when it is placed on my bosom? By the will of God even poison may sometimes turn out nectar and nectar poison.

47. Or perhaps through the evil turn of my fate this has been turned into the fire of lightning by the creator, since the tree has not been struck down by it, but the creeper clung to its branches been consumed.

---

46. D. सन्निहिता for किं निहिता.

47. D. H. He. Cha. Din. Va. Dhar. and Vija. सुरमाल्यरूपभाक् for मम भाग्यविप्लवात्.; D. H. He. Châ. Din. Va. Su. Dhar. and Vija., निर्मितः for कल्पितः; D. कर्मणा for वेधसा.; B. C. D. E. न पातितस्तरुः for तरुर्न पातितः.; Su. निहता. for क्षपिता; B. C. D. E. He. Châ. Din. Va. Su. Dhar. and Vija., तद्विटपाश्रया for तद्विटपाश्रिता.

कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ४८ ॥
ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसंनिवृत्तये यदनापृच्छ्य गतासि मामितः ॥ ४९ ॥
दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥

४८. ( हे प्रिये)। मयि विषये चिरं भूरिशोऽपराद्धेऽप्यपराधं कृतवत्यपि। ( अपराध्यत्यस्मिन्निति अपराद्धः तस्मिन् )। राधेः कर्तरि क्तः। यदा यस्माद्धेतोः। यदेति हेत्वर्थः। " स्वरादौ पठ्यते यदेति हेतौ " इति गणव्याख्यानात्। अवधीरणामवज्ञां न कृतवत्यसि नाकार्षीः। [ अव्ययानामनेकार्थत्वादसि इत्यव्ययं। पाणिनिमतदर्पणे। " अस्त्यस्मिमन्ये शङ्के ब्रूमहे कथंकौ ( बलार्थकौ )" इति। अथ वा। असीति वर्तमानसामीप्यभूतार्थे लट्–हे० ]। तत्कथमेकपदं तत्क्षणे। " एकपदं स्यात्तत्क्षणे पदव्यामेकपद्यपि " इति विश्वः। निरागसं नितरामनपराधमिमं जनम्। इममिति स्वात्मनिर्देशः। मामित्यर्थः। आभाष्यं संभाष्यं न मन्यसे न चिन्तयसि। [ कथं प्रलपतो मम वचनं न ददासीत्यर्थः–हे० एवं विलापं कुर्वाणं मल्लक्षणं जनं कथं न संभावयसि–चा० ]।

४९. हे शुचिस्मिते धवलहसिते शठो गूढविप्रियकारी [ धूर्तः। "प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् " इत्यादिधूर्तलक्षणं रुद्रटालंकारादध्यवसेय–चा०। " गूढविप्रियकृत् शठः " इति रूपके–हे० ]। कैतवेन कपटेन वत्सलः कैतववत्सल इति ध्रुवं सत्यं। [ निश्चये उत्प्रेक्षायां वा–चा० ]। तव विदितस्त्वया विज्ञातोऽस्मि। "मतिबुद्धि–" इत्यादिना कर्तरि क्तः। "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। कुतः। यद्यस्मान्मामनापृच्छ्यानामन्त्र्येतोऽस्माल्लोकात्परलोकमसंनिवृत्तयेऽपुनरावृत्तये गतासि। [अभिज्ञो ह्यपेक्ष्यते–हे०]।

५०. इदं मम हतजीवितं कुत्सितं जीवितं। [ " मारितं कुत्सिते हतं " इति हलायुधः–हे० ]। तावत्पादौ दयितामिन्दुमतीमन्वगादन्वगच्छद्यदि। अन्वगादेव। यद्यत्रावधारणे। पूर्वं मूर्छितत्वादिति भावः। तर्हि तया दयितया विना किं किमर्थं विनिवृत्तं प्रत्यागतम्। प्रत्यागमनं न युक्तमित्यर्थः। अत एवात्मकृतेन स्वदुश्चेष्टितेन निवृत्तिरूपेण प्रबलामधिकां वेदनां दुःखं सहतां क्षमताम्। स्वयंकृतापराधेषु सहिष्णुतैव शरणमिति भावः।

---

48. If you did not show disregard towards me even when I was exceedingly guilty, then, why dont you instantly consider this innocent person as one everyway worthy of being spoken to?

49. It is certain, O lady of pure smiles, that I am known to thee as a false husband with insincere love, since thou hast departed without bidding me adieu from this world to the next with an intention not to come here again!

50. Let therefore this wretched life of mine endure the overwhelming torments brought on by its own evil deeds! For why has it returned without her if it then went after my beloved?

48. B. D. H. with. Su. Dhar. and Vija., अपराधे for अपराद्धे. D. with He. and Va., प्रिये for यदा; H. अमुं for इमं.

49. D. Din. and Chá., अनामन्त्र्य for अनापृच्छ्य.

50. A., with Chá. Din. and Vija., आत्मकृतेन, B. E. H. with He. and Va., आत्मकृतां तु, C आत्मकृतां नु, D. आत्मकृतामन्, D2. with Su. and Dhar., आत्मकृतां च.

सुरतश्रमसंभृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।
अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ॥ ५१ ॥
मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥५२ ॥
कुसुमोत्खचितान्वलीभृतश्चलयन्भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः ॥ ५३ ॥
तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ५४ ॥

५१. सुरतश्रमेण । ( मोहनक्रीडाश्रमेण इति यावत् ) । संभृतो जनितः स्वेदलवोद्गमोऽपि ते तव मुखे ध्रियते वर्तते । [ अपिशब्देन लवस्य क्षणविनाशित्वं सूचितं–हे० ] । अथानन्तरं च त्वमात्मना स्वरूपेणास्तं नाशमिता प्राप्ता । अतः कारणाद्देहभृतां प्राणिनामिमां प्रत्यक्षामसारतामस्थिरतां धिक् । [ असारताशब्देन यद्यपि निन्दा प्रतीयते तथापि धिग्जाल्ममितिवत् न पौनरुक्त्यं । "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इति द्वितीया–हे० ] ।

५२. मया कर्त्रा मनसापि करणेनापि तव विप्रियं अनभीष्टं न कृतपूर्वम् । [ पूर्वं कृतं इति कृतपूर्वं "वाहिताग्न्यादिषु"–हे० ] । पूर्वं न कृतमित्यर्थः । सुप्सुपेति समासः । किं केन निमित्तेन मां जहासि त्यजसि । ननु मेदिनीपतिस्त्वं नातो विप्रियमस्तीत्याशंक्याह । नन्वहं क्षितेः शब्दपतिः शब्दत एव पतिः। नत्वर्थत इत्यर्थः । पालयिता प्रियश्च पतिः । अतः शब्दशक्त्या पतित्वं नार्थशक्त्या इत्याशयः । तर्हि कुतस्त-वार्थतः पतित्वमित्याकांक्षायामाह । भावनिबन्धनाभिप्रायनिबन्धना स्वभावहेतुका मे रतिः प्रेम तु त्वय्येव। अस्तीति शेषः । अत एव मनसापि विप्रियकरणमकारणमित्यभिसंधिः ।

५३. कुसुमैरुत्खचितानुत्कर्षेण रचितान् वलीभृतो भङ्गीयुक्तान् । कुटिलानित्यर्थः । भृङ्गरुचो भ्रमरव-र्णान् । नीलानित्यर्थः । तवालकान् चलयन्कम्पयन्मारुतः ( वायुः ) । हे करभोरु करभसदृशोरु । "म-णिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । मे मनस्त्वदुपावर्तनशङ्कि तव पुनरागमनं शङ्कावत्करो-ति । त्वदुज्जीवने शङ्कां कारयतीत्यर्थः । उपावर्तनं परिवर्तनं वा ।

५४. हे प्रिये तत्तस्मात्कारणादाशु ( शीघ्रं ) मे विषादं दुःखम् । नक्तं रात्रावोषधिस्तृणज्योतिराख्या-लता ज्वलितेन प्रकाशेन तुहिनाद्रेर्हिमाचलस्य गुहागतं ( कंदरान्तःप्रविष्टं ) तमोऽन्धकारमिव । [ हिमाद्रौ

51. The rise of the drops of perspiration brought on ( lit brought together ) by सुरत labour still exists on thy face, while thou thyself art dead Oh fie upon the frailty of human beings !

52 Dearest इन्दुमति, hitherto I have done nothing unpleasant to thee even in thought, why then dost thou abandon me in this way ? In sooth I am lord of the earth only in name while my love fettered by deep emotional feeling is centered only in thee

53 The breeze, Oh beautiful thighed lady, shaking the curled hair dark as black bees and adorned with flowers makes my mind hopeful of thy revival

54 For this reason, O my beloved queen, you ought quickly to dispel my sorrow by con-

51. B. C. D. E. Su., and Dhar., अथ वा for अथ च. Between 51-52 B. H. read " सुरतश्रमवारिबिन्दवो न तु तावद्विरमन्ति ते मुखं । स्वयमस्तमितास्यहो बत क्षयिणां देहवतामसा-रता" । [ H. देहभृतां for देहवतां; H. अमारतां for असारतां ]. H. om the 51 st stanza.

53. A. C. Chà. Din. Su. and Vija , कुसुमोत्खचितान्, B. E. He. Va. and Malli. कुसुमोत्कचितान्, the latter who says कुसुमोत्कचितान् पुष्पानुविद्धान्, D. कुसु-मोत्कलितान्.; B. C. D. E. H. with He. Chà. Din. Va. Su. Dhar. and Vija., वलीमतः for वलीभृतः. so also Malli: who says वलीमतस्तरंगितान्.

54. E. ओषधि: for औषधिः.

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ५६ ॥

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥ ५७ ॥

नक्तमोषधयः सप्रकाशा भवन्तीति प्रसिद्धिः–चा० ] । प्रतिबोधेन ज्ञानेनापोहितुं निरसितुमर्हसि ।

५५. इदमुच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं विगतसंलापं तव मुखम् । निशि रात्रौ । [ निशीत्यनेनालकस्थानं तमःसम्बन्धः सूचितः–हे० ] । सुप्तं निमीलितं विरतोऽभ्यन्तराणामन्तर्वर्तिनां षट्पदानां ( भृङ्गाणां ) स्वनः ( शब्दः ) यत्र तत् । निःशब्दभृङ्गमित्यर्थः । एकपङ्कजमद्वितीयं पद्ममिव । मां दुनोति परितापयति । [ प्राणिनां संयोगवियोगौ विलोक्यैतं तत्त्वया किमर्थमेवं संतप्यते इत्याशंक्याह–हे० चा० सु० ] ।

५६. शर्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति । द्वन्द्वीभूय चरतीति द्वन्द्वचरः । तं पतत्रिणं चक्रवाकं दयिता चक्रवाकी पुनरेति । इति हेतोस्तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ विरहावधिसहौ । ( वियोगनिमित्तकालव्यवधानक्षमौ इत्यर्थः ) । " अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये " इत्यमरः । [ व्यतिरेकेणाह–हे० ] । अत्यन्तगता पुनरावृत्तिरहिता त्वं तु कथं न मां दहेर्न संतापयः । [ विरहलक्षणं रसाकरे । " विप्रलम्भस्तु सामान्ये वियोगं विरहोऽन्यथा । यावज्जीवि वियोगः स्यादीर्ष्यारव्योऽहर्निशं भवेत् " इति । " मृतप्रियाणामत्यंतं यावज्जीवार्तिदायिनं । वियोगं विरह प्राहुर्दुस्सहं पूर्वसूरयः " इति शब्दार्णवे । कथमत्र श्लोकयोर्विरहः । " समानधर्मार्थनिर्देशे तद्रूपं " इति साहित्यमीमांसासूत्रात् । " उपमानाद्यदन्यस्य व्यतिरेकः स एव च " इति । काव्यप्रकाशे तु व्यतिरेकः आधिक्य–हे० ] । अपि तु दहेरेवेत्यर्थः । [ पुरा किल दशरथात्मजस्य रामचन्द्रस्य शापात् रात्रौ चक्रवाकयोर्विरहः । रामस्तु तत्पश्चात् । कथमजविलापे चक्रवाकविरहं रचयाञ्चकार । कवेरायतनत्वात् विलोक्यमानस्य वर्णनत्वान्न दूषणमत्र । अथ वा संसारस्यानादित्वाद्रामपरम्पराया अपि अनादित्वात् युक्तमेवोक्तं–चा० ] ।

५७. नवपल्लवसंस्तरे नूतनप्रवालास्तरणेऽप्यर्पितं स्थापितं मृदु ते तव यदङ्गं शरीरं दूयेत परितप्तं भवेत् । [ पल्लवानां नवशब्दोऽतिकोमलत्वसूचनार्थः–चा० ] । वामौ सुन्दरौ ऊरू यस्याः सा हे वामोरु । " वामं स्यात्सुन्दरे सव्ये " इति केशवः । " संहितशफलक्षण–" इत्यादिनोङ्प्रत्ययः । तदिदमङ्गं चितायाः काष्ठसंचयस्याधिरोहणं कथं विषहिष्यते वद । [ तस्य दुःसहत्वात्–हे० ] ।

---

ing to life, as the herbs at night dispel by their light the darkness existing in the caves of the snowy mountain ( the Himalaya ).

55. This face of yours with its dishevelled curly hair and with speech altogether ceased, like a solitary ( or single ) lotus closed at night with the humming of the bees in the inside silenced, torments me, my dear.

56. The night again goes back to the moon, and the Chakravaka-mate joins her consort that wanders about in pair: and in this way are those two able to bear the interval of separation; but how canst thou, gone for ever, not burn me ?

57. O beautiful-thighed-lady, that tender body of thine which when laid even on a bed of fresh sprouts would suffer pain, tell me then how can that same body now suffer the mounting on the funeral pile ?

---

56. E. पतत्रिणो for पतत्रिणं.; E. विरहान्तरक्षमे for विरहान्तरक्षमौ.

इयमप्रतिबोधशायिनीं रसना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥ ५८ ॥
कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ ५९ ॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ ६० ॥
मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्रतम् ॥ ६१

५८ इयं प्रथमाद्या । [ प्रवरा वा–हे० ]। रहःसखी । [ रहस्येकान्ते सखी । सुरतेपि निबन्धनात् रहःसखी–हे० ] सुरतसमयेऽप्यनुयानादिति भावः। गतिविभ्रमसादेन नीरवा विलासोपरमेण निःशब्दा रसना मेखलाप्रतिबोधमपुनरुद्बोधं यथा तथा शायिनीम् । मृतामित्यर्थः । त्वामनु त्वया सह । तृतीयार्थ इत्यनुशब्दस्य कर्मप्रवचनीययुक्ते द्वितीया । शुचा शोकेन मृतेव न लक्ष्यत इति न । लक्ष्यत एवेत्यर्थः । संभाव्यनिषेधनिवर्तनाय द्वौ प्रतिषेधौ ।

५९.—६०. युग्मेनाह । उभयोरेकान्वयः । अन्यभृतासु परभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम् । [ " वनप्रियः परभृतः कोकिलः पिक इत्यपि " इत्यमरः–हे०] । कलहंसीषु विशिष्टहंसीषु मदालसं मन्थरं गतं गमनम् । पृषतीषु हरिणीषु विलोलमीक्षितं चञ्चला दृष्टिः। पवनेन वायुनाधूतलतास्वीषत्कम्पितलतासु विभ्रमा विलासाः इत्यमी पूर्वोक्ताः कलभाषणादयो गुणाः। एषु कोकिलादिस्थानेष्विति शेषः। त्रिदिवोत्सुकयापीह जीवन्त्येव स्वर्गं प्रति प्रस्थितयापि त्वया मामवेक्ष्य विरहासह विचार्य सत्यं निहिताः स्थापिताः । [गुणगणकलितां मामन्तरेणामावजं दुःखवशात् कथं भविष्यतीति मामाश्वासयितुं परपुष्टादिषु स्वगुणा निहिता इत्यर्थः । परं ते गुणाः–चा० ] । मत्प्राणधारणोपायतया स्थापिता इत्यर्थः । तव विरहे गुरुव्यथमतिदुःखं मे हृदयं मनोऽवलम्बितुं स्थापयितुं न क्षमा न शक्ताः । ते तु तत्सगमे एव सुखकारिणः । नान्यथा । [ अतस्तत्रोपरि वांछा नास्ति–हे० ] । प्रत्युत प्राणानपहरन्तीति भावः ।

६१. ननु हे प्रिये । सहकारश्चूतविशेषः फलिनी प्रियंगुलता चेमौ त्वया मिथुनं परिकल्पितं मि-

58. This girdle thy first loved-companion in privacy but now made noiseless in consequence of the cessation of thy sportive gait, does not seem, by sorrow, as if not to have died after thee who art sleeping a sleep that knows no waking.

59.—60. Sweet music of words in the cuckoo, gait slow in consequence of youthfulness in female swans, the loving tremulous glances in the hinds and sportiveness in the creepers shaken by the wind,—these qualities have been indeed deposited by thee for my sake though thou wert then eager for heaven, but I think they are not able to bear up my mind against the heavy grief produced from thy separation.

61. The mango tree and the Priyangu creeper have been indeed once designed by you for a marriageable couple; for this reason it is improper for you to depart without having celebrated the auspicious ceremonies of their nuptials.

---

58. B. घनचारुनितम्बसंस्थिता रसना त्वां प्रतिबोधशायिनीं H. घनचारुनितम्बगोचरा रसनेयं मुखरा तवाधुना for इयमप्रतिबोधशायिनीं रसना त्वां प्रथमा रहःसखी. E. रहःसखीं for रहःसखी.

59. B. C. Su. and Vija., गतमदालसं H. गतं मनोहरं for मदालसं गतं., D. and Va., हरिणीषु for पृषतीषु; A. C. with He. Va. Châ. Din. Dhar. and Vija. विभ्रमाः. B. H. and Su., विभ्रमः So also Malli. notices this and says. " विभ्रमः " इति पाठे । विभ्रमो विलासः । D. विभ्रमा. E. om. this stanza.

60. H. om. this stanza.

कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ ६२ ॥
स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ॥ ६३ ॥
तव निःश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किन्नरकण्ठि सुप्यते ॥ ६४ ॥

पुमस्त्वेनाभ्यमानि । ( अयं च इयं चेमौ । " पुमान् स्त्रिया " ) । अनयोः फलिनीसहकारयोर्विवाहसत्क्रियां विवाहमङ्गलमविधायाकृत्वा गम्यत । ( स्वर्लोक इति शेषः ) । इत्यसांप्रतमयुक्तम् । [ विवाहकारणं प्रयोगरत्नावल्यां । " विवाहमंगलाचारा गीतनेपथ्यसयुता । वृक्षणोद्वाहिता श्यामा जायते कुसुमान्विता " इति—हे० ]। मादृशीनां न किंचित्सुखमस्तीतिभावः । ( "सङ्कल्पितं प्रथममेव मया तवार्थे भर्तारमात्मसदृशं सुकृतैर्गता त्वम् । चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च संप्रति वीतचिन्तः" इत्येवं समार्थः संदर्भः )।

६२. वृक्षादिपोषकं दोहदम् । त्वया कृतं दोहदं पादताडनरूप यस्य सोऽयमशोको यत्कुसुममुदीरयिष्यति प्रसविष्यते । [ तथा च प्रयोगरत्नावल्यां । "नूपुरान्वितपादेन तरुण्या ताडितो भृशं । अशोकः केसरो वक्त्रसीधुसिक्तश्च फुल्लति" इति । "तरुगुल्मलतादीनामकाले कुशलैः कृतं । पुष्पाद्युत्पादकं द्रव्यं दोहदः स्यात्तु तत्क्रिया" इति शब्दार्णवे—हे० । स्त्रीणां चरणप्रहारेण अशोकतरुः पुष्प्यतीति प्रसिद्धिः—चा० सु० ] । तत्रालकानामाभरणभूतं तत्कुसुमं कथं नु केन प्रकारेण निवापस्य माल्यतां दाहाञ्जलेरर्घ्यतां नेष्यामि । "निवापः पितृदानं स्यात्" इत्यमरः ।

६३. अन्यदुर्लभम् । किंतु स्मर्तव्यमेवेत्यर्थः । सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं यस्य तं चरणेनानुग्रहं पादेन ताडनरूपं स्मरतेव चिन्तयतेव कुसुमान्येवाश्रूणि तद्वर्षिणा पुष्पबाष्पमुचामुना पुरोवर्तिनाशोकेन । हे सुगात्रि । " अङ्गगात्रकण्ठेभ्यश्च " इति वक्तव्यान्ङीप् । त्वं शोच्यसे । [ यद्वा । अन्येन वृक्षेण दुर्लभं शोच्यसे इत्यत्र इवशब्दसंबन्धो वा०-हे० चा० सु० ] । उत्तमाङ्गे तव चरणताडनेन तरुपोषश्लेषदानेन श्लेषे स्पष्टीकृतः ।

६४. तव निःश्वसितानुकारिभिः ( मुखमारुतानुवादिभिः )। सौरभ्यादिभिरिति भावगतम् । बकुलैर्बकुलकुसुमैर्मया समं सार्धम् अर्धचितामर्ध यथा तथा रचितां विलासमेखलाममसमाप्यापूरयित्वा । ( माधुर्याच )। किन्नरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्यास्तत्संबुद्धिर्हे किन्नरकण्ठि । कण्ठशब्देनात्र तज्जः स्वरो लक्ष्यते । " अङ्गगात्रकण्ठेभ्यश्च " इति ङीप् । किमिदं सुप्यते कस्मै प्रयोजनाय निद्राक्रियते । "वचिस्वपि—" इत्यादिना संप्रसारणम् । अनुचितमिदं स्वपनमित्यर्थः ।

---

**62.** How can I, my dearest love, *use* these flowers which should have, were you living, adorned your hair, *for the funeral offering* !——the flowers which the yonder अशोक tree whose desire before budding had been accomplished by you will soon put forth.

**63.** O thou of lovely form, thou art bewailed by this Asoka tree that sheds tears in the form of flowers remembering as it were the favour of thy feet adorned with ringing anklets, and which is very difficult to be obtained by any other tree.

**64.** O sweet-voiced किन्नरि, ( lit whose song resembling that of the celestial songsters ) why have you closed your eyes in death without having completed the fancy zone which, along with me, was half set with Bakula flowers imitating your breath ?

---

62. C. D. E. कृतदोहद: for कृतदोहद:.

63. E. reads चरणानुग्रहदुर्लभं तव for चरणानुग्रहमन्यदुर्लभं.

64. B. D. E. with He. Va. and Su., °वादिभि: for °कारिभि:; D. विकल्पमेखलां for विलासमेखलां. So also noticed by He.

समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ६५ ॥

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ ६६ ॥

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ ६७ ॥

६५. सखीजनः समदुःखसुखः । त्वद्दुःखेन दुःखी त्वत्सुखेन सुखीत्यर्थः । अयमात्मजो बालः प्रतिपच्चन्द्रनिभः प्रतिपदि शुक्लपक्षे क्षीणचन्द्रस्तन्निभस्तत्सदृशः । दर्शनीयो वर्धिष्णुश्चेत्यर्थः । प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात् । [ यद्यपि प्रतिपदि चन्द्रकलास्ति तथाप्यदृश्यमानत्वान्न युज्यते । तथा चोक्तं । "प्रतिपच्चन्द्रमिव प्रजा नृप" इति–चा० ] । अहमेकरसोऽभिन्नरागः समानप्रेमेत्यर्थः । "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः । तथापि । जीवितसामग्रीसत्त्वेऽपीत्यर्थः । ते तव व्यवसायः [ मरणोद्यमः–हे० चा० ] अस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन आकस्मिकगमनव्यञ्जितेन [ स्वभावेन–व० दुराग्रहेण । इदमेव मयावश्य कार्यमिति प्रतिपत्तिरभ्युपगमः –हे० ]। निष्ठुरः क्रूरः । [ तथापि ते व्यवसायो मरणोद्योगः प्रतिपत्तौ प्रीतौ निष्ठुरः कर्कशः पराङ्मुखः इति भावः–चा० सु० ] । "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च । प्रागल्भ्ये च प्रबोधे च" इति विश्वः । [ "प्रतिपत्तिस्तु प्रागल्भ्ये प्रीतिमज्जनयोरपि" इति केशवः–चा० सु० ] । स्मर्तुं न शक्यः किमुताधिकर्तुमिति भावः । [ अत्रहि हेमाद्रिः । तथापि ते व्यवसायो मरणोद्यमः प्रतिपत्त्या दुराग्रहेण निष्ठुरः कठिनः तेन क्रूरः । तमेवाह– ] ।

६६. अद्य मे धृतिर्धैर्यं प्रतीतिरस्तं नाशमिता । "धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु" इति विश्वः । रतिः क्रीडा [ सुरतं रमणं च–हे० ] च्युता गता । गेयं गानं विरतम् । ऋतुर्वसन्तादिर्निरुत्सवः ( उत्सवरहितोऽभूत् ) । आभरणानां प्रयोजनं [ शृङ्गारादिकं–चा० ] गतमपगतम् । [ "ना कामी मण्डनप्रियः" इत्युक्तत्वात्–चा० ] । शेतेऽस्मिन्निति शयनीयं तल्पम् । "कृत्यल्युटो बहुलम्" इत्यधिकरणार्थेऽनीयर्प्रत्ययः । परिशून्यम् परितः शून्यं जातं । त्वां विना सर्वमपि निष्फलमिति भावः ।

६७. त्वमेव गृहिणी दाराः । अनेन सर्वं कुटुम्बं त्वदाश्रयमिति भावः । सचिवो बुद्धिसहायो मन्त्री । सर्वो हितोपदेशस्त्वदायत्त इत्यनेनोच्यते । मिथो रहसि सखी नर्मसचिवः । सर्वोपभोगस्त्वदाश्रय इत्यमुना प्रकटितम् । ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या । [ गीतनृत्यवादित्रचित्रचुंबनाश्लेषपुष्पसदर्भमालाक्रीडालिपिज्ञानादीनां चतुःषष्ठीसंख्याकानां च विद्याध्ययनं रहःप्रियाभिमता शि-

65 These your friends are partakers of your joys and sorrows; this your son is young and hopeful like the moon of the first day; I love you exclusively, and yet you have made a resolve opposed to all affection.

66 All patience (or love) is at an end, pleasures are no more, music has ceased, the season is now without festivities (or has lost all its charms), there is no use of ornaments and my bed has become all empty to-day.

67 Thou wert my only wife, thou my counsellor, thou my companion in solitude, my beloved pupil in the fine arts in sport; by taking thee away say what things of mine has not death, averse to pity, robbed me of?

65. H. reads व्यवसायप्रतिपत्तिनिष्ठुरम् for व्यवसायः प्रतिपत्तिनिष्ठुरः.

66. D. with Din. and Chá., विशून्यं for परिशून्यं.

67. E. प्रियशिक्षा for प्रियशिष्या

स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः ।
परिवाहमिवावलोकयन्स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥
अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमस्थितः ।
अभिषङ्गजडं विजज्ञिवानिति शिष्येण किलान्वबोधयत् ॥ ७५ ॥
असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६ ॥

होह एतेभ्यः ”–इत्यकारादेशो न । “ न संख्यादेः समाहारे ”–इति निषेधात् । ततस्तसिल् । तस्माद्दशाहतः परे ऊर्ध्वे कर्तव्या महर्द्धयो महासमृद्धयः । [ भूरिदक्षिणाविषय एकादशाहादिश्राद्धादयः–चा० सु० ]। विधयः क्रियाः पुरः पुर्या उपवन उद्यान एव समापिताः संपूर्णमनुष्ठिताः। “ [ विद्वान् क्षत्रियश्चेद्दशाह ” इति विष्णुस्मृतिः–हे० ]। दशाहतः इत्यत्र “ विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शुध्यति ” इति मनुवचनविरोधो नाशङ्कनीयः । तस्य निर्गुणक्षत्रियविषयत्वात् । गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः–“ क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः ” इति । ( एतदेव चारित्रवर्द्धनः ) । सूच्यतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन ।

७४. तयेन्दुमत्या विना । [ निष्प्रभत्वात्–हे० ] । क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कश्चन्द्रः स इव दृश्यत इति क्षणदापायशशांकदर्शनः । प्रातःकालीनचन्द्र इव दृश्यमान इत्यर्थः । दृश्यत इति कर्मार्थे ल्युट् । सोऽजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासमिवावलोकयन् । [ तस्य शोकस्य तत्र भागीकृतत्वात्–हे० ]। “ जलोच्छ्वासाः परीवाहाः ” इत्यमरः । स्वदुःखपूरातिशयमिव पश्यन्पुरीं ( अयोध्यां ) विवेश । वधूग्रहणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखसूचकपरीवाहोक्तिर्निर्वहति ।

७५. अथ सवनाय यागाय दीक्षितो गुरुर्वशिष्ठ आश्रमे स्वकीयाश्रमे स्थितः सन् । तमजमभिषङ्गजडं दुःखमोहितं प्रणिधानाच्चित्तैकाग्र्याद्विजज्ञिवाञ्ज्ञातवान् । “ क्वसुश्च ” इति क्वसुप्रत्ययः । इति वक्ष्यमाणप्रकारेण शिष्येण [ अन्तेवासिना वामदेवेन–हे० ] अन्वबोधयत्किल । बुधेर्ण्यन्ताण्णिचि लङ् । [स्वयं गृहीतदीक्षत्वाद्वशिष्ठः शिष्यं प्राहिणोदित्यर्थः–चा० ]। वशिष्ठशिष्य आह—

७६. यतो हेतोर्मुनिरसमाप्तविधिरसमाप्तक्रतुस्ततो हेतोस्तव तापकारणं दुःखहेतुं कलत्रनाशरूपं विद्वाञ्जानन्न-

---

beautiful queen whose virtues were the only residue, were finished by that learned king in the very garden of his capital.

74. The king looking like the moon at the close of night, entered his capital without her, beholding, as it were, the outburst of his sorrow in the tears streaming on the faces of the city women.

75. It is said that his preceptor who had then undergone an initiative ceremony of a sacrifice and who therefore remained in his hermitage, having known him, by reason of his profound religious meditation, to be stupefied by the overwhelming misfortune, exhorted him through his disciple in the following way.

76. Knowing as he does the cause of your distress, the sage has not come personally to restore

---

74. E. पुरं for पुरीं.

75. D. H. with Chà. Din. and Su., तमवेक्ष्य मखाय for अथ तं सवनाय; B. C. He. and Va., आश्रमाश्रितः for आश्रमस्थितः; D. H. Chà. Din. and Su., have आश्रमाश्रयः; D. H. with Chà. Din. and Su. अभिषङ्गिणमीश्वरं विशां for अभिषङ्गजडं विजज्ञिवान्.

76. H. मुनिर्यतः for यतो मुनिः; A. पथश्च्युतं, D. ततश्च्युतं, also Malli. notices this reading. D2. स्वतश्च्युतं, B. C. E. H. with He. Din. Chà. Va. Su. and Dhar., कृतस्थितिः.

मयि तस्य सुवृत्त वर्तते लघुसंदेशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ॥ ७७ ॥
पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥ ७८ ॥
चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा ।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥ ७९ ॥

पि । "विदेः शतुर्वसुः" इति वस्वादेशः । "न लोक–" इत्यादिना षष्ठीप्रतिषेधः । पथश्च्युतं स्वभावाद्भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुम् । समाश्वासयितुमित्यर्थः । स्वयं नोपस्थितो नागतः । [ दीक्षितेन न किल गन्तव्यमिति– हे० विहितसंकल्पः क्वापि न व्रजेदिति–चा० सु० ] ।

७७. हे सुवृत्त सदाचार । संदिश्यत इति संदेशः संदेष्टव्यार्थः । तस्य पदानि वाचकानि लघूनि संक्षिप्तानि संदेशपदानि यस्यां सा लघुसंदेशपदा तस्य मुनेः सरस्वती वाङ्मयि वर्तते । हे विश्रुतसत्त्वसार प्रख्यात... यातिशय । [ विश्रुतं विख्यातं सत्त्वं सारो यस्य तस्य संबोधनं । हर्षविषादयोरेकरूपा बुद्धिः स... तां सरस्वतीं शृणु । त्वमेनां वांचं हृद्युपधातुं धर्तुं चार्हसि । वक्ष्यमाणार्थानुगुणं मुनेः स...

७८ अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य पदेषु विक्रमेषु । ...व–हे० ... तीतं भूतं च भवद्वर्तमानं च भावि भविष्यच्चेति त्रितयं स मुनिर्निष्प्रतिघे... तावदाह— ...नदृष्ट्या पश्यति हि । अतस्तदुक्तिषु न संशयितव्यमित्यर्थः । [ ... त्रिभुवनेष्वपीत्यर्थः । सम... ...नाप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानेन जानातीति भावः–सु० ] ।

७९. पुरा किल दुश्चरं तीव्रं तपश्चरतः ( तपः कुर्वत... ...भुवनत्रये कालत्रयस्य वार्ता गुरुर्वशिष्ठो वंश्याद्–हे० ] राजर्षेः [ स्वर्गराज्यहरणे–हे० ] ... ...) तृणबिन्दोस्तृणबिन्दुनामकात्कस्माच्चित् [ अ... ...त्यपादानात्पञ्चमी । हरिरिन्द्रः समाधिभे... ...परिशङ्कितो भीतः । कर्तरि क्तः । "भीत्रार्थानां भयहेतुः" इ... समाधिर्नियमे ध्याने " इति विश्वः ) ...नीं तपोविघातिनीं । ( ध्यानप्रत्यूहकारिणीमित्यर्थः ) । ( " स... ...स्विनीमित्यर्थः । " हरिणी ... । हरिणीं नाम सुराङ्गनाम् । [ यद्वा । हरिणीं सुवर्णप्रतिमां । अतितेज... अस्मै तृणबिन्दवे प्र... स्यान्मृगी हेमप्रतिमा हरिता च या । त्रिषु पाण्डौ च हरिणः " इत्यमरः–हे० ] । ...जिघाय प्रेरितवान् ।

you to y... the ri... our natural state from which you have fallen, because he has not yet finished 7... es of the sacrificial ceremony.

77. O virtuous king, his words brief in their message are confided to me. Hear them, O thou of a well known powerful energy, worthy as thou art to treasure them in thy heart.

78. Indeed with his unimpeded eye of knowledge, the sage sees the triad,--the past, the present and the future--in the three strides of the god त्रिविक्रम who knows no birth.

79. In olden times, it is said that Indra being afraid of the sage Tṛṇabindu who was practising the hard religious austerities, sent against him a celestial damsel by name Hariṇi capable of interrupting his profound meditation.

77. A. C. E. with Chà. Din. and Vija., लघुसंदेशपदा, D. लघुसंदेशहरा, B. with He. Va. and Su. स्फुटसंदेशपदा; D. अवधातुं for उपधातुं.

78. E. सह for स हि; D. अवितथं for त्रितयं. H. reads त्रिषु धाम सुशार्ङ्गधन्वनः for पुरुषस्य पदेष्वजन्मनः.

स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ ८० ॥
भगवन्परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।
इति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात् ॥ ८१ ॥
क्रथकैशिकवंशसंभवा तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥
तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥

८०. स मुनिः । शमः शान्तिरेव वेला मर्यादा । तस्याः प्रलयोर्मिणा प्रलयकालतरंगेण । शमविघातकेत्यर्थः । [ कल्पान्तकालकल्लोलसदृशेन—चा० सु० ] । " अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि " इति दवः । तपसः प्रतिबन्धेन विघ्नेन यो मन्युः क्रोधस्तेन हेतुना । प्रमुखेऽग्र आविष्कृतचारुविभ्रमां । [ यद्वा । ख्येन चारुणा मुखेन आविष्कृतः प्रकटीकृतः चारुः मनोहरो विभ्रमो विलासो यया तां तथोक्तां—हे० ] । ...मनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भवेत्यशपच्छशाप ।

८१. हे भ... महर्षे । अयं जनः ( मल्लक्षणो जनः ) । परोऽस्यास्तीति स्वामित्वेन परवान्पराधीनः । ...राधीन इत्यर्थः—... सु० ] । अयमित्यात्मनिर्देशः । अहं पराधीनेत्यर्थः । मे मम प्रतिकूलाचरितम् अ...ं क्षमस्व । इत्यनेन प्रकारेण ...पनतां शरणागतां च हरिणीमा सुरपुष्पदर्शनात्सुरपुष्पदर्शनपर्यन्तम् । क्षितिं स्पृ...ति क्षितिस्पृक्तां क्षितिस्पृशं मानु...ीं कृतवानकरोत् । दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ।

८२. क्रथकैशिकानां ( विदर्भाणां ) रा...ां वंशे ( अन्वये ) संभवः ( जन्म ) यस्याः सा हरिणी तव म...ी अभिषिक्ता स्त्री । [ पट्टराज्ञी—चा० ] । " ...ताभिषेका महिषी " इत्यमरः । भूत्वा चिराय दिवः स्व...ुतं पतितं शापनिवृत्तिकारणं सुरपुष्परूपमुपलब्धवत... विवशा । अभूदिति शेषः । मृतेत्यर्थः ।

८३. तत्तस्मात्तस्या अपायचिन्तयालम् [ नाशचिन्तयालं—... चा० ] । तस्या मरणं न चिन्त्यमित्यर्थः ।

80. That sage, through rage which arose from the obstacle to his asceticism, and which was ...estructive wave breaking down the barriers of the coast of peacefulness, cursed her, who ...nifested before him her bewitching graces of love, in the follow...ng way:— " Be thou a ...rtal famale on earth."

81. " Venerable sir ! this person, you know, is solely dependent on Indra; fo...rgive me there...re my offensive action "; when thus humbled, he made her an earthly bein... until she ...uld see the celestial flowers.

82. Thus born in the family of the Krathakais'ikas, she having become your crowned queen ...tained at last the cause of the cessation of her curse fallen after a long time from the sky ...d subjected herself to death.

83. Cease, therefore, any further, to think of her death, because the beings that have been

80. B. C. with He. Chà. Din. Va. Dhar. and Vija., स तपःप्रतिबन्धमन्युना, A. ...सा प्रतिघातमन्युना, D. and Su., स तपःप्रतिघातमन्युना. A. D. शमवेलाप्रलयोर्मिवान् for शमवे...प्रलयोर्मिणा; B. C. E. H. with He. Chá. Din. Va. Su. Dhar. and Vija., मुनिः ...r भुवि; D2. and Su., मदना° for प्रमुखा°.

81. D. E. with Din. and Chà., °चरणं for °चरितं; D. and Va. सहस्व for ...मस्व. D. H. with Din. and Chà. °माल्यदर्शनात् for °पुष्पदर्शनात्.

82. D. and He. उपलब्धवती तनुं जहौ सुरतः शापनिवृत्तिकारणं for the last Pàda. ...He. also notices the reading of our text. H. reads मुनिशापनिवृत्तिकारणं ध्रुवमा...... जहौ for उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणं.

उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्तया।
मनसस्तदुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम् ॥ ८४ ॥
रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ ८५ ॥
अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः।
स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥

निषेधक्रियां प्रति करणत्वाच्चिन्त्येति तृतीया। कुतो न चिन्त्यमत आह—उत्पत्तिमतां जन्मवतां (प्राणिनां) विपद्विपत्तिः (मृतिरूपा) उपस्थिता सिद्धा [नित्या—हे० चा० सु०]। जातस्यहि ध्रुवो मृत्युरेवेत्यर्थः। तथापि कलत्ररहितस्य किं जीवितेन। तत्राह—त्वयेयं वसुधा भूमिरवेक्ष्यतां पाल्यताम्। हि यस्मान्नृपा वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः। [राज्ञां भूरेव प्रिया—चा०]। अतो न शोचितव्यमित्यर्थः।

८४. उदयेऽभ्युदये सति मदेन यद्वाच्यं निन्दादुःखं तदुज्झता परिहरता सत्यपि मदहेतावमाद्यता त्वया यदात्मवत्तयाविकृतचित्ततया लिङ्गेन श्रुतं शास्त्रम्। तज्जनितं ज्ञानमिति यावत्। आविष्कृतं प्रकाशितम्। तच्छ्रुतं मनसो ज्वरे संताप उपस्थिते प्राप्तेऽक्लीबतया धैर्येण लिङ्गेन पुनः प्रकाश्यताम्। [राज्याभिगमेन यत्तवापयशो नासीत्तेन तच्छ्रुतं प्रादुर्भूतं। संप्रति त्वदधिगतदुःखपरित्यागेन तच्छ्रुतमत्यंतं प्रकटय—चा० सु०]। विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यमित्यर्थः। इतोऽपि न रोदितव्यमित्याह—

८५. रुदता भवता सा कुत एव लभ्यते। न लभ्यत एव। अनुम्रियत इत्यनुमृत्। क्विप्। तेनानुमृतानुमृतवतापि भवता पुनर्न लभ्यते। नन्वनुमृतेन परत्र लभ्यते। तदपि न इत्याह—परलोकजुषां लोकान्तरभाजां देहिनाम्। गम्यन्त इति गतयो गम्यस्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गा हि। [केचिन्मर्त्याः केचित्पशवः केचिद्देवाः केचिद्रक्षांसीति—चा० सु०]। परत्रापि स्वस्वधर्मानुरूपफलभोगाय भिन्नदेहगमनान्न मृतेनापि लभ्यत इत्यर्थः।

८६. किंत्वपशोकमनाः (अपगतः शोकः यस्मात्तदपशोकं गतदुःखं मनः यस्य सः) नि-

born have death near at hand. Let this Earth be now protected by you, for kings have a wife in the Earth.

84. Good Fortune having fallen to your lot, you avoided the censure of becoming and being called self--conceited and thus by your self--restraint exhibited the effects of your sacred knowledge; now that (instead of good fortune) Distress has befallen your soul, boldly exhibit the same again.

85. How can you, thus weeping for her, obtain her now? You will not be able to reclaim her again, even if you die after her. For the ways of those who enjoy the other world lie along different roads according to their respective actions.

86. Relieving your mind of sorrow do you favour your wife with offerings of water. For it is

84. A. D. मदवाच्यं, B. E. H. with He. Châ. Din. Va. Su. Dhar. and Vija., यदवाच्यं, C वद वाक्यं; D. आत्मवत्त्वया. So also Malli., who says, "आत्मवत् अध्यात्मप्रचुरं;" B. C. E H. with He. Châ. Din. Va. Su. Dhar. and Vija., आत्मनस्त्वया for आत्मवत्तया; A. D. समुपस्थिते for तदुपस्थिते; this our reading is also supported by all other commentators.

85. C. E. H. with He. Va. Châ. Din. Dhar. and Vija., नानुमृतापि, A. and Su., नानुमृतेन, B. नानुमृतेः, D. नानुमृते च; B. अवाप्यते for लभ्यते; D2. and Su., देहिना for देहिनां. H. शरीरिणां for हि देहिनां. Between 85-86. D2. and Su., read, "रुदितेन न सा निवर्तते। नृप तत्तावदनर्थकं च तत्। न भवाननुसंस्थितोपि तां। लभते कर्मवशा हि देहिनः"।

86. E. reads अतिसिंचितं for अतिसंततं.

मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ८७ ॥
अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ ८८ ॥
स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ ८९ ॥

दुःखचित्तः सन्कुटुम्बिनीं पत्नीं निवापदत्तिभिः पिण्डोदकादिदानैरनुगृह्णीष्व । तर्पयेत्यर्थः । अन्यथा दोष माह–अतिसंततमविच्छिन्नं स्वजनानां बन्धूनाम् । " बन्धुस्वस्वजनाः समाः " इत्यमरः । अश्रु । कर्तृ । प्रे तं मृतं दहतीति प्रचक्षते मन्वादयः किल । अत्र याज्ञवल्क्यः– " श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुंक्ते यतोऽव शः । अतो न रोदितव्य हि क्रियाः कार्याः स्वशक्तितः " इति ।

८७. शरीरिणां ( देहभाजां ) मरणं । [ नित्यत्वात्–हे० चा० ] । प्रकृतिः स्वभावः । ध्रुवमित्यर्थः जीवितं विकृतिर्यादृच्छिकं । [ विकारः–हे० चा० सु० ] । बुधैरुच्यते । एवं स्थिते जन्तुः प्राणी क्षणमपि अत्यन्तसंयोगे द्वितीया । श्वसञ्जीवन्नवतिष्ठते यद्यसौ क्षणजीवी लाभवान्ननु । [ पिण्डस्य विनाशित्वात्–हे० जीवने यथालाभं सतोष्टव्यम् । अलभ्यलाभात् । मरणे तु न शोचितव्यम् । अस्य स्वाभाव्यादिति भावः [ अत्र मरणशब्देन स्थूलशरीरत्यागोऽवगन्तव्यः–चा० ] ।

८८. मूढचेतनो भ्रान्तबुद्धिः प्रियनाशमिष्टनाशं हृद्यर्पितं निखातं शल्यं शंकुमवगच्छति मन्यते । स्थि धीर्विद्वांस्तु तदेव शल्यं समुद्धृतमुत्खातं मन्यते । प्रियनाशे सतीति शेषः । कुतः । कुशलद्वारतया । प्रियनाः स्य मोक्षोपायतयेत्यर्थः । विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणाम् । विपर तु विपश्चितामिति भावः । [ न चेष्टजनविरहसन्तापो युक्त एवेत्याह–हे० ] ।

८९. स्वस्य शरीरशरीरिणौ देहात्मानावपि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्ययौ संयोगवियो यौस्तौ तथोक्तौ । तदा बाह्यैर्विषयैः पुत्रमित्रकलत्रादिभिः ( विषयैः सह ) विरहो विपश्चित विद्वांसं कि वानुतापयेत्त्वं वद । [ सदा सयुक्तयोर्देहात्मनोरपि वियोगोऽवश्यंभावी किं पुनर्बाह्यानामन्येषामिति । उक्त ञ्च । " सहजीवितयोर्नास्ति सम्बन्धः कायजीवयोः । पुत्रमित्रकलत्रेषु सम्बन्धः केन हेतुना " इति–हे० " यस्यास्ति नैक्यं वपुषापि सार्धं तस्यास्ति किं पुत्रकलत्रमित्रैः । पृथक् च ते चर्मणि रोमकूपाः कुतो तिष्ठन्ति शरीरमध्ये " इति–चा० ] । न किंचिदित्यर्थः । अथ वा स्वशब्दस्य शरीरेणैव संबन्धः ।

said with certainty that the uninterrupted flow of tears shed by relatives burn ( i. e. torment the departed soul.

87. Wise men say that death is but the nature of the sentient beings, and life is a mer deviation from that natural state; if a creature remains breathing even for a moment, he assuredly a gainer.

88. The stupid-minded consider the loss of a dear person as a dart fixed in the heart, b the firm-minded regard the same as a dart extracted on account of its serving as a door leadi to blessedness.

89. Since the connection and separation of our own body and soul are so well known, t me, O king, why separation from external objects should at all distress a wise man ?

87. H. जीवनं for जीवितं.

88. D. अथ गच्छति for अवगच्छति; H. इतरस्तु for स्थिरधीस्तु.

89. A. and Vija., श्रुत°, D E. He. and Va. स्मृत°, D2. and Dhar., स्मृति C. H. क्षण,° A2. Chà. and Din. श्रित,° B. and Su., कृत°; A. D. E. H. wit Su. Dhar. and Vija. किं, C. with He. and Va. कं, B. with Ch and Din. कः.

न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि ।
द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ॥ ९० ॥
स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् ।
तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः ॥ ९१ ॥
तेनाष्टौ परिगमिताः समाः कथंचिद्बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ९२ ॥
तस्य प्रसह्य हृदयं किल शोकशङ्कुः प्लक्षप्ररोह इव सौधतलं बिभेद ।
प्राणान्तहेतुमपि तं भिषजामसाध्यं लाभं प्रियानुगमने त्वरया स मेने ॥९३॥

९०. हे वशिनामुत्तम जितेन्द्रियवर्य । पृथग्जनवत्पामरजनवत् । ( " पृथग्जनः स्मृतो नीचे मूर्खे च " इति विश्वः ) । शुचः शोकस्य वशं ( अधीनतां ) गन्तुं नार्हसि । तथा हि । द्रुमसानुमतां तरुशिखरिणां किमन्तरं को विशेषः । वायौ सति द्वितयेऽपि द्विप्रकारा अपि । [ पवनेन वृक्षाः किल कम्पन्ते न गिरयः तथा नीचाः शोकेनाभिभूयन्ते न तु त्वादृशाः अतः शोकं दूरीकुरु इति भावः—सु० ] । " प्रथमचरम—" इत्यादिना जसि विभाषया सर्वनामसंज्ञा । ते द्रुमसानुमन्तश्चलाश्चचला यदि । सानुमतामपि चलने द्रुमवत्तेषामप्यचलसंज्ञा न स्यादित्यर्थः ।

९१. सोऽज उदारमतेर्विनेतुर्गुरोर्वशिष्ठस्य वचस्तच्छिष्यमुखेरितं तथेति प्रतिगृह्याङ्गीकृत्य मुनिं वशिष्ठशिष्यं । [ वामदेवं—हे० ] । विससर्ज प्रेषयामास । किं तु तद्वचः शोकघने दुःखसान्द्रेऽस्याजस्य हृद्यलब्धपदमप्राप्तावकाशं सद्गुरोर्वशिष्ठस्यान्तिकं प्रतियातमिव प्रतिनिवृत्तं किमु । इत्युत्प्रेक्षा । तोटकवृत्तमेतत्— " इह तोटकमम्बुधिसैः प्रथितम् " इति तल्लक्षणम् ।

९२ अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेनाजेन । सूनोः पुत्रस्य बालत्वात् । राज्याक्षमत्वादित्यर्थः । प्रियाया इन्दुमत्याः सादृश्यं वस्त्वन्तरगतमाकारसाम्यम् । प्रतिकृतिश्चित्रम् । तयोर्दर्शनैः स्वप्नेषु क्षणिकाः क्षणभङ्गुरा ये समागमोत्सवास्तैश्च । कथंचित्कृच्छ्रेण । अष्टौ समा वत्सराः । " संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः " इत्यमरः । परिगमिता अतिवाहिताः । तथा चोक्त गुणपताकायां—"वियोगेऽयोगे वा प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपनतवतां स्पर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः " इति । प्रकृते सादृश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम् । [ स्वप्नस्वरूप तु जाग्रद्दशायामदृष्टवशात्मा सुखदुःखभोग भुंक्ते । तथा स्वप्नावस्थायामपि पूर्वकर्मवशादात्मा नाडीतो निर्गत्य तत्र देशे नवं देहं निर्माय पूर्वं शरीरं तत्रैव देशे प्राणवायुना रक्षन् स्वप्नभोगान्भुंक्त्वा पुनरपि पूर्वशरीरे प्रविशति । तथार्थे शातपथा श्रुतिः । " प्राणेन रक्षन्नपरं कुलायं । बहिः कुलायादमृतश्चरित्वा । स ईयते अमृतो यत्र कामः । हिरण्मयः पुरुष एकहंसः । स्वप्नान्त उच्चावचमीयमानः । रूपाणिदेवः कुरुते बहूनि " इति—हे० ] । प्रहर्षिणीवृत्तमेतत् ।

९३. शोक एव शङ्कुः कीलः । " शङ्कुः कीले शिवेऽस्त्रे च " इति विश्वः । तस्याजस्य हृदयम् । प्लक्ष-

---

90. O thou, the best of the self-controlled, it is not proper for thee to become a prey to sorrow like an ordinary man; tell me, what difference is there between a tree and a mountain even if both of them begin to quake in the wind ?

91. " So be it, " with these words he accepted the consolatory words of his highly intelligent preceptor ( imparted to him through his disciple Vâmadeva ), and dismissed the sage: but that consolatory advice not having gained scope in his mind excessively given up to grief, returned, as it were, to his preceptor.

92. Owing to the childhood of his son, that king of agreeable and true speech, passed eight years with great difficulty, sometimes of course looking at the exact picture of his beloved queen and at others enjoying the pleasures of her momentary company in dreams.

93. They say that the dart of grief, forcibly broke his heart, as the offshoot of a fig-tree breaks down the terrace of a palace. In his haste to follow his beloved wife, he looked upon even that cause which was sure to terminate his life and which was incurable by physicians as a gain.

सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥
तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोर्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ९५

प्ररोहः ( प्लक्षस्याङ्कुरः ) सौधतलमिव । [ " प्लक्षस्याधोगच्छतो मूलैः " इति क्षीरस्वामी-हे० ] । प्रसह्य बलात्किल बिभेद । सोऽजः प्राणान्तहेतुं मरणकारणमपि भिषजाम् ( वैद्यानां ) असाध्यममतिसमाधेयं । तं शोकशङ्कुं रोगपर्यवसितं प्रियाया अनुगमने त्वरयोत्कण्ठया लाभं मेने । तद्विरहस्यातिदुःसहत्वात्तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यतेत्यर्थः ।

९४. अथ नृपतिरजः सम्यग्विनीतं निसर्गसंस्काराभ्यां विनयवन्तं वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः । " वयसि च " इत्यच्प्रत्ययः । तं कुमारं दशरथं प्रजानां रक्षणविधौ राज्ये विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः " तदर्हम् " इति वतिप्रत्ययः । आदिश्य नियुज्य रोगेणोपसृष्टाया व्याप्तायास्तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुर्जिहासुः सन् । प्रायोपवेशनेऽनशनावस्थाने मतिर्यस्य स बभूव । " प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि " इति विश्वः । अत्र पुराणवचनम्—" समासक्तो भवेद्यस्तु पातकैर्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीडितो वा भवेत्तु यः । स्वयं देहविनाशस्य काले प्राप्ते महामतिः । आब्रह्माणं वा स्वर्गादिमहाफलजिगीषया । प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा । एतेषामधिकारोऽस्ति नान्येषां सर्वजन्तुषु । नराणामथ नारीणां सर्ववर्णेषु सर्वदा " इति । अनयोर्वसन्ततिलकाच्छन्दः । तल्लक्षणम्—उक्ता वसन्ततिलका तभजा जगौ गः " इति ।

९५. असावजो जह्नुकन्यासरय्वोस्तोयानां जलानां व्यतिकरेण संभेदेन भवे तीर्थे गङ्गासरयूसंगमे देहत्यागात्सद्य एवामरगणनायां लेख्यं लेखनम् । " तयोरेव कृत्यक्तखलर्थाः " इति भावार्थे ण्यत्प्रत्ययः । आसाद्य प्राप्य । [ आदित्यत्वं प्राप्येत्यर्थः-हे० ] । पूर्वस्मादाकारादधिकतरा रुग्यस्यास्तया कान्तया रमण्या संगतः सन् । [ हरिणीनाम्न्या सुरस्त्रिया मिलितः सन्-चा ] । नन्दनस्येन्द्रोद्यानस्याभ्यन्तरेष्वन्तर्वर्तिषु लीलागारेषु क्रीडाभवनेषु पुनररमत [ चिक्रीड । " मरणात्प्रागवस्थापि मरणं मुनिनोदितं । शृङ्गारे मरणादूर्ध्वं पुनर्योगो विधीयते " इति काव्योपदेशे-हे० ] । " यथाकथंचित्तीर्थेऽस्मिन्देहत्यागं करोति यः । तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि " इति स्कान्दे । मन्दाक्रान्ताच्छन्दः । तल्लक्षणम्—" मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् " इति ।

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये अजविलापो नामाष्टमः सर्गः ।

---

94. Then having charged the prince who was well educated and who was able to wear an armour, with the duty of protecting his subjects, according to the rules, the king desirous of giving up his residence in a body affected by a disease, became intent on starving himself to death.

95. At last giving up his body at the sacred place formed by the confluence of the waters of the daughter of Jahnu and the Sarayu and having immediately secured an enlisting in the number of the immortals, the king, being united to his queen now of a loveliness surpassing her former figure, sported again in the pleasure-houses within the gardens of the Nandana forest.

---

93. C. D. प्रविश्य for प्रसह्य; A. D. with Su., Dhar and Vija., प्रियानुगमने. C. E. with He. Châ. Din. and Va., प्रियानुगमन° B. .H. प्रियानुगमनं,

94. D. वर्मधरं for वर्महरं.

95. D. तोय तीर्थे° for तीर्थे तोय°; D. E. with Su., and Vija., पूर्वाकाराधिकचतुरया for पूर्वाकाराधिकतररुचा. So also Malli:—"पूर्वाकाराधिकचतुरया " इति पाठे पूर्वस्मादाकारादधिकं चतुरया सुभगया कान्तया इति व्याख्येयं.

# नवमः सर्गः ।

पितुरनन्तरमुत्तरकोसलान्समधिगम्य समाधिजितेन्द्रियः ।
दशरथः प्रशशास महारथो यमवतामवतां च धुरि स्थितः ॥ १ ॥
अधिगतं विधिवद्यदपालयत्प्रकृतिमण्डलमात्मकुलोचितम् ।
अभवदस्य ततो गुणवत्तरं सनगरं नगरन्ध्रकरौजसः ॥ २ ॥

एकलोचनमेकार्धे सार्धलोचनमन्यतः ।
नीलार्धे नीलकण्ठार्धे महः किमपि मन्महे ॥

१. । [ इदानीं यमकं दर्शयिष्यन् दशरथव्यापारं वर्णयति–हे०] । समाधिना संयमेन । [ चित्तैकाग्र्येण–इ० धर्मार्थकामानामेकरूपतया–व० नियमेन–चा० ] । जितेन्द्रियः । [ नृपतेर्नीतिशास्त्रानुसारेण । " भवन्ति ज्वलिता लक्ष्मीः कीर्तयश्च नभःस्पृशः " इति कामन्दकः–हे० ] । " समाधिर्नियमे ध्याने " इति कोषः । यमवतां ( यमा विद्यन्ते येषां तेषां तथोक्तानां ) संयमिनां । [ " ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्पता । अहिंसा स्तेयमाधुर्यं दमश्चेति यमाः स्मृताः " इति याज्ञवल्क्यः–हे० । " अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः " इत्यादयो यमाः—चा० सु० व० ] । अवतां रक्षतां राज्ञां च धुर्यग्रे स्थितो महारथः । " एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते " । [ " धनुर्वेदस्य तत्त्वज्ञः सर्वशास्त्रविशारदः । सहस्रं योधयत्येकः स महारथ उच्यते " । " महारथाद्दशगुणो विज्ञेयोऽतिरथो बुधैः "–हे० व० ] । इति । दशरथः पितुः ( अजस्य ) अनन्तरमुत्तरकोसलाञ्जनपदान्समधिगम्य ( संप्राप्य ) प्रशशास [ पर्यपालयत् । लब्धपालनं हि राजधर्मः–हे० ] । अत्र मनुः— " क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् " इति । [ " स्यात्पादपदवर्णानामावृत्तिः संयुतायुता । यमकं भिन्नवाच्यानामादिमध्यान्तगोचरं " इति वाग्भटः–हे० चा० ] । द्रुतविलम्बितमेतद्वृत्तम् । तल्लक्षणम्— " द्रुतविलम्बितमाह नभौ भरौ " इति ।

२. अधिगत प्राप्तमात्मकुलोचितं स्वकुलागतं सनगरं नगरजनसहितं प्रकृतिमण्डलं जानपदमण्डलम् । अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगाद्गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । [ " स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च । सप्तांगानि प्रकृतयः पौराणां श्रेणयोऽपि च "–हे० ] । यद्यस्माद्विधिवद्यथाशास्त्रमपालयत् । ततो हेतोः । रन्ध्रं करोतीति रन्ध्रकरः । रन्ध्रहेतुरित्यर्थः । " कृञो हेतुताच्छील्यानुलोम्येषु " इति टप्रत्ययः । नगस्य रन्ध्रकरो नगरन्ध्रकरः कुमारः । [ भार्गवो वा–हे० चा० सु० व०] । "कुमारः क्रौञ्चदारणः " इत्यमरः । [ " हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रं " इति मेघदूते–हे० ] । तदोजसस्तत्तुल्यबलस्यास्य दशरथस्य गुणवत्तरं । [ गुणाः दाक्षिण्यादयस्तैरधिकं–चा० ] । अभवत् । तत्पौरजानपदमण्डलं तस्मिन्नतीवासक्तमभूदित्यर्थः ।

---

1. After the death of his father, Das'aratha, who had subdued his senses by abstract meditation, who was a great chariot-warrior, and who stood at the head both of devotees and kings, ruled over the Uttarakos'alas after having first brought them under his sway.

2. As the king protected the circle of provinces inherited from his father together with the people of his capital according to the rule, so that act of his became more excellent to him than before, whose prowess was equal to that of Kumàra, the render of the Krauncha Mountain.

---

2. B. C. E. with He. Din. Va. Su. and Dhar. गुणतत्परं, A. D. with Chà. and Vija. गुणवत्तरं.

उभयमेव वदन्ति मनीषिणः समयवर्षितया कृतकर्मणाम् ।
बलनिषूदनमर्थपतिं च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ ३ ॥
जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः ।
क्षितिरभूत्फलवत्यजनन्दने शमरतेऽमरतेजसि पार्थिवे ॥ ४ ॥
दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम् ।
तमधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम् ॥ ५ ॥

३. मनस ईषिणो मनीषिणो विद्वांसः । पृषोदरादित्वात्साधुः । बलनिषूदनं इन्द्रं । [ बलं दैत्यविशेषं निषूदयाति मारयतीति त तथोक्तं–हे० ] । ( " बलो हलायुधे दैत्यभेदे बालिनि वायसे " इति विश्वः ) । दण्डस्य धरो राजा मनुरिति यो दण्डधरः स एवान्वयः कूटस्थो यस्य तमर्थपतिं दशरथं चेत्युभयमेव । समयेऽवसरे जलं धनं च वर्षतीति समयवर्षी । तस्य भावः समयवर्षिता । तया हेतुना कृतकर्मणां स्वकर्मकारिणाम् । नुदतीति नुदम् । " इगुपधज्ञाप्रीकिरः कः " इति कप्रत्ययः । श्रमस्य नुदं श्रमनुदम् । [ " अनुदात्तेतश्च हलादेः " इति युचि प्राप्ते " सूददीपदीक्षश्च " इति प्रतिषिद्धे कथ मधुसूदनः बलनिषूदनः । अनित्योऽयं द्वन्द्वप्रतिषेधः । प्रतिषेधं इति योगविभागाद्विज्ञायते । अथ वा । नंद्यादिषु मधुसूदनादयो वक्ष्यन्ते इति काशिकावृत्तौ–हे० ] । क्विबन्तत्वे नपुंसकलिङ्गेनोभयशब्देन सामानाधिकरण्यं न स्यात् । इति वदन्ति । [ नृपः कृतकार्यस्य भृत्यादेरर्थदानेन खेदं निरस्यति इन्द्रोऽपि काले वर्षणात् कृतकर्मणां कर्षुकादीनां श्रमनुत् । यद्वा । कर्षुकादेः इन्द्रकृतयज्ञादेः श्रमनुदिन्द्रः–हे० चा० सु० ] ।

४. शमरते शान्तिपरेऽमरतेजस्यजनन्दने दशरथे पार्थिवे पृथिव्या ईश्वरे सति । "तस्येश्वरः" इत्यण्प्रत्ययः । जनपदे देशे गदो व्याधिः । " उपतापरोगव्याधिगदामयाः " इत्यमरः । पदं नादधौ । न चक्रामेत्यर्थः । सपत्नजः शत्रुजन्योऽभिभवः कुत एव । असंभावित एवेत्यर्थः । [ दैवकृतस्य रोगाद्युपद्रवस्याभावे वैरिविहितो मानभङ्गोऽभिभवः कुतो भवेदिति भावः—चा० सु० ] । क्षितिः फलवती ( प्रशस्तफला ) अभूच्च । [ इति दैवानुकूल्यं–हे० चा० ] ।

५. मही । दशदिगन्ताञ्जितवानिति दशदिगन्तजित् । [ "चतस्रः कीर्तयेद्वाष्टौ दश वा ककुभः क्वचित्" इति वाग्भटः–हे० ] । तेन रघुणा यथा श्रियं कान्तिमपुष्यत् । ततः परं रघोरनन्तरमजेन च यथा श्रियमपुष्यत् तथैवाहीनपराक्रमं न हीनः पराक्रमो यस्य तमन्यूनविक्रमं । [ यद्वा । अहीनां सर्पाणां इनस्य शेषस्येव पराक्रमः पौरुषं यस्येति वा । " इनः स्वामिनि सूर्ये च तथैव विषयिण्यपि " इति विश्वप्रकाशः । यद्वा । अहीनेषु शूरेषु पराक्रमो यस्येति । यद्वा । "हि गतौ वृद्धौ च " । हिन्वन्ति भंगं प्राप्नुवन्ति रणे इति हयः न हयः अहयः राजानः तेषां इनाः प्रभवः तेषु पराक्रमो यस्य सः । यद्वा । अः गरुडः हिः सर्पः तयोः इनः

---

3. Wise men speak of two only as rewarding the labours of those who have done their duty, by timely showers of rains as well as timely gifts of wealth, viz: the destroyer of the demon Bala and that Lord of wealth sprung from the line of the batoon-holder Manu.

4. When the son of Aja whose might was like that of the immortals and who was in the full enjoyment of mental peace, was the lord of the earth, it yielded abundance of crops, no plague stepped into his country, much less were the ravages caused by the enemies.

5. The earth, as it had maintained its splendour by the help of Raghu, the conqueror of the ten quarters, and after him by Aja, so now having obtained him for a lord not inferior in prowess, did not but shine just the same again.

---

**4. D. and Su., परिभवः for अभिभवः, B. C. E. with He. Va. Chà. Din. Su. Dhar. and Vija., कृषिः for क्षितिः.**

समतया वसुवृष्टिविसर्जनैर्नियमनादसतां च नराधिपः ॥
अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ॥ ६ ॥
न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु ।
तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत् ॥ ७ ॥
न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि ।
न च सपत्नजनेष्वपि तेन वागपरुषा परुषाक्षरमीरिता ॥ ८ ॥

स्वामी विष्णुः तस्य पराक्रमो यस्य तं । " अः कृष्णे विनतासूनौ अः विधातरि मन्मथे " इति अनेकार्थः । यद्वा । अहिः शेषः सर्पः इनः सूर्यः तयोः पराक्रम इव पराक्रमो यस्य सः । यद्वा । अहीनां इनः स्वामी शंभुः । तद्भूषणधारित्वात् । तस्येव पराक्रमो यस्येति । अहीनां २नाः स्वामिनः महासर्पाः तान् पिबतीत्यहीनपो गरुडः तस्येव रः तीक्ष्णः आक्रमो यस्येति वा । अहीनान् पांतीति अहीनपाः महत्तराः तेषु रस्येव वह्नेरिव आक्रमो यस्यंति वा–हे० ]। त दशरथमिनं स्वामिनमधिगम्य पुनर्नबभौवाति न। बभावेवेत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः ।

६. नराधिपो दशरथः समतया समवर्तित्वेन । [ समलोचनप्रतिपातेन–चा० ] । मध्यस्थत्वेनेत्यर्थः । वसुवृष्टेर्धनवृष्टेर्विसर्जनैः ( दानैः ) असतां दुष्टानां नियमनान्निग्रहाच्च । [ निजमार्गस्थापनाच्च—चा० ] । सवरुणौ वरुणसहितौ यमपुण्यजनेश्वरौ यमकुबेरौ यमकुबेरवरुणान्यथासंख्यमनुययावनुचकार । [ " भवेत्पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च " इति विश्वः–हे० ]। रुचा तेजसारुणाग्रसरमरुणसारथिं सूर्यमनुययौ । [ यमपुण्यजनेश्वरौ इत्यत्र आनङभावे " देवताद्वन्द्वे च–" इत्यत्र काशिकावृत्तेः " आनङ्कृतौ द्वन्द्वे–" इति वर्तमाने पुनर्द्वन्द्वग्रहणं च प्रसिद्धसाहचर्यार्थं । अत्यन्तसहचरिते लोके विज्ञाते द्वन्द्व इति निपात्यते । तन्मये लोके प्रसिद्धसाहचर्या वेदे च सहभावेन ये निर्दिष्टास्तेषामिह ग्रहणं भवति । तन शिववैश्रवणावित्यादौ नेति । तथाह विष्णुः । वृषाकपीति । समत्वेन यमं । वसुवृष्ट्या धनदं । रुचा रविम् । असतां नियमनाद्वरुणं । वरुणो हि पाशसहस्रेणासतो नियमयति । तथा च श्रुतिः । " अनृते खलु वै क्रियमाणे वरुणो निगृह्णाति" इति–हे० ] । तस्य व्यसनासक्तिर्नासीदित्याह–

७. उदयाय यतमानमभ्युदयार्थं व्याप्रियमाणं तं दशरथं मृगयाभिरतिराखेटव्यसनं नापाहरन्नाचकर्ष । " आक्षोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् " इत्यमरः। दुष्टमासमन्तादुदरमस्येति दुरोदरं द्यूतं च नापाहरत् । " दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् " इत्यमरः । शशिनः प्रतिमा प्रतिबिम्बमाभरणं यस्य तन्मधु नापाहरत् । [ शशिप्रतिमत्वं मद्यस्य प्रायेण रात्रौ सेवनात्–हे०चा०]। न वेति पदच्छेदः। वाशब्दः समुच्चये । नवयौवना नवं नूतनं यौवनं तारुण्यं यस्यास्तादृशी नूतनवयस्का प्रियतमा वा स्त्री नापाहरत् । जातावेकवचनम् । अत्र मनुः— " पानमक्षः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे " इति । [ चत्वारि कामजान्येतानि व्यसनानि । क्रोधजानि त्रीणि एवं सप्त । " स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम्। महच्च दण्डपारुष्यमर्थदूषणमेव च " इति क्रोधजान्यग्रे वक्ष्यति–हे०]।

८. तेन राज्ञा प्रभवति प्रभौ सति [ स्वामिनी–चा० ] वासवेऽपि कृपणा दीना वाङ्नेरिता नोक्ता । परि-

6. The lord of the people imitated Yama in equal dealing of justice, followed the Lord of the Punya-janas ( Kubera ) in raining showers of wealth; Varuna in chastising the wicked; and the Sun before whom goes Aruna, in his bright splendour.

7. Neither pleasure in hunting, nor gambling, nor yet wine ornamented with the reflection of the moon, nor his beloved queen in the bloom of her youth diverted him from striving for the prosperity of his kingdom.

8. He never uttered a pitiable ( i. e. flattering ) word before वासव though he ( i. e. Vasava )

8. B. C. E. with Va. Su. and Dhar. अपि सपत्नजनेन च for न च सपत्नजनेष्वपि.

उदयमस्तमयं च रघूद्वहादुभयमानशिरे वसुधाधिपाः ।
स हि निदेशमलङ्घयतामभूत्सुहृदयोहृदयः प्रतिगर्जताम् ॥ ९ ॥
अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः ।
जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥ १० ॥
अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसंपदः ॥ ११ ॥

हासकथास्वपि ( हास्यवार्तास्वपि ) वितथानृता वाक् ईरिता । किं चापरुषा (अपगता रुट् क्रुध् यस्य तेन) रोषशून्येन तेन सपत्नजनेष्वपि शत्रुजनेष्वपि परुषाक्षरं निष्ठुराक्षरं यथा तथा वाक् ईरिता । [इति उत्कर्षातिशयोक्तिः चा० ] । किमुतान्यत्रेति । सर्वत्रापिशब्दार्थः । किं त्वदीना सत्या मधुरैव वागुक्तेति फलितार्थः ।

९. वसुधाधिपा राजानः । उद्वहतीत्युद्वहो नायकः । पचाद्यच् । रघूणामुद्वहो रघुनायकः [ रघुपुत्रः ।" उद्वहस्तनयः पोतः " इति धनंजयः–हे० ]। तस्माद्रघुनायकादुदयं वृद्धिम् । अस्तमयं नाशं च इत्युभयमानशिरे लेभिरे । कुतः । हि यस्मात्स दशरथो निदेशमाज्ञामलंघयताम् । शोभनं हृदयमस्येति सुहृन्मित्रमभूत् । सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः । प्रतिगर्जतां प्रतिस्पर्धिनाम् । अय इव हृदय यस्येत्ययोहृदयः कठिनचित्तोऽभूत् । स्वाज्ञाकारिणो रक्षति । अन्यान्मारयतीत्यर्थः । [ अर्थदूषणपारुष्ययोरभावः उक्तः । तथा कामन्दकः । " दुष्टस्य दूषणार्थं तु परित्यागो महीयसः । अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते । महत्स्वप्यपराधेषु दण्डं प्राणान्तिकं त्यजेत् । कृते राज्यापहारे तु तत्र दण्डः प्रशस्यते " इति । मनुना तु व्यसनानि अष्टादशोक्तानि । " मृगयाक्षा दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाघातः कामजो दशमो गुणः । पैशून्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणं । वाग्दण्डजं च पारुष्यं क्रोधजोपि गुणोऽष्टकः;" इति तत्र च सप्त कष्टतमानि । यथाह । " पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमं । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे । दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा " इति–हे० ] । [ इतः सप्तभिः श्लोकैर्दिग्विजयवर्णनं–हे० चा०सु० ] ।

१०. अधिज्यशरासनः ( ज्यामधिरूढं अधिज्यं शरासनं धनुर्यस्य ) स दशरथ उदधिनेमिं समुद्रवेष्टनां मेदिनीमेकरथेनाजयत् । स्वयमेकरथेनाजैषीदित्यर्थः । [ तर्हि किमथ सेनामग्रहीदित्याह–हे० चा] । गजवती गजयुक्ता । जवेन तीव्रा जवाधिका हया यस्यां सा चमूस्त्वस्य नृपस्य केवलं जयमेवाघोषयदप्रथयत् । स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ।

११. वरूथिना गुप्तिमता । "वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम् " इति सज्जनः । एकरथेनाद्विती-

had power over him, nor a falsehood even in tales of mirth, nor yet any abusive language even to his enemies,—because his nature was far from being angry.

9. The vassal kings experienced both rise and set at the hands of ( lit. from ) the head of the family of Raghu, for he had a kind heart to those who did not violate his commands but to his defiants he had a heart made of steel.

10. He, who had strung his bow, conquered the Earth encircled by the ocean with but a single car, while his army with elephants and horses dashing forth with great speed only proclaimed his victory.

11. To him conquering the Earth by means of a single car furnished with a protecting plank, wielding a ready bow and possessing wealth like that of Kubera, the cloud-like-thundering seas assuredly served him for the kettle drums of victory.

10. B. C. E. with He. Va. Châ. Din. Su. Dhar. and Vija., हि for तु. Between 10-11 B. D. E. with He. Châ. Din. Va. and Su., read जघननिर्विषयीकृतमेखलानुपचिताश्रुविलुप्तविशेषकान् । स रिपुदारगणानकरोद्बलादनलकानलकाधिपविक्रमः " [ D. E. अनुचिता° for उपचिता°. ]

शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरन्दरः ।
स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः ॥ १२ ॥
चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन् ।
नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम् ॥ १३ ॥
निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन् ।
समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम् ॥ १४ ॥

यरथेनावनिं ( भुवं ) जितवतो धनुर्भृतः ( धनुर्धरस्य ) नरवाहनसंपदः कुबेरतुल्यश्रीकस्य तस्य दशरथस्य घनरवा मेघसमघोषा अर्णवाः ( समुद्राः ) विजयदुन्दुभितां ( जयपटहतां ) किल ययुः ( प्रापुः ) । अर्णवान्तविजयीत्यर्थः ।

१२. पुरन्दरः इन्द्रः शतकोटिना ( शतं कोटयो धारा यस्य तेन ) शतास्रिणा कुलिशेन वज्रेण शिखरिणां पर्वतानां शमितपक्षबलो विनाशितपत्त्रसारः । [ केचिद्वज्रस्य सहस्रकोटित्वमाहुः—हे० चा० ] । नवतामरसाननो नवपङ्कजाननः । " पङ्केरुहं तामरसम् " इत्यमरः । स दशरथः शरवृष्टिमुचा ( बाणवृष्टिमुचा) स्वनवता ( शब्दवता ) धनुषा द्विषां शमितो नाशितः पक्षः सहायो बलं च येन स तथोक्तः । " पक्षः सहायेऽपि " इत्यमरः । [ " पक्षः पार्श्वगरुत्साध्यः सहायबलभित्तिषु " इति यादवः–हे० ] ।

१३. शतशो नृपतयः ( राजानः ) अखण्डितपौरुषं ( अप्रतिहतपराक्रम ) तं दशरथम् । मरुतो देवाः शतमखं यथा शतक्रतुमिव । नखरागेण चरणनखकान्त्या समृद्धिभिः सम्पादितर्द्धिभिर्मुकुटरत्नमरीचिभिः ( मुकुटमणिकिरणैः ) चरणयोरस्पृशन् । त प्रणेमुरित्यर्थः ।

१४. स दशरथः सचिवैः संप्रयोजितैः कारिता बालसुतानामञ्जलयो यैस्तान् । स्वयमसंमुखागतानित्यर्थः । [ भर्तृवधात्० चा० ] । अनलकान्हतभर्तृकतयालकसंस्कारशून्यान्सपत्नपरिग्रहाञ्छत्रुपत्नीः । " पत्नीपरिजनादानमूलशापाः परिग्रहाः " इत्यमरः । [ राज्यादिकदानेन–चा० ] ।समनुकम्प्यानुगृह्यालकानवमामलकानगरादन्यूनां । [ अलति भूषयति स्वस्थानमित्यलका–हे० ] । पुरीमयोध्यां प्रति महार्णवानां रोधसः पर्यन्तान्निववृत ( प्रत्याययौ ) । शरणागतवत्सल इति भावः ।

---

12. Town-destroying Indra humbled the force of the wings of mountains with his thunderbolt having but a hundred sharp points; but the king दशरथ with his face resembling a fresh lotus, destroyed the party force of his enemies by means of his twanging bow that sent forth showers of arrows.

13. The kings by hundreds touched him of undaunted valour on his feet with rays proceeding from the diamonds in their crowns brightened by the red lustre of his toe-nails, as the gods bowed to him of one hundred sacrifices ( Indra )

14. Then the king returned from the shores of the great ocean to his capital not any way inferior to Alakà, having taken compassion on the wives of his enemies, who were then destitute of hair decorations and who had requested their ministers to join the hands of their infant-sons before him as a token of their supplication.

---

12. B. C. E. with Chà. Din. Va. and Su., शितकोटिना for शतकोटिना. So also noticed by He., D2. स्फुरितकोटिसहस्रमरीचिना for शमितपक्षबलः शतकोटिना This too is noticed by He; E. reads शिषरिणां for शिखरिणां. Between 12-13, B. D2. E. and Su., read " स्फुरितकोटिसहस्रमरीचिना समचिनोत्कुलिशेन हरिर्यशः । स धनुषा युधि सायकवर्षिणा स्वनवता नवतामरसाननः " । [ D2. बहु° for युधि°. ] E. has the second foot स शरवृष्टिमुचा धनुषा युधि स्वनवता नवतामरसाननः.

उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।
श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः ॥ १५ ॥
तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता ।
नृपतिमन्यमसेवत देवता सकमला कमलाघवमर्थिषु ॥ १६ ॥
तमलभन्त पतिं पतिदेवता शिखरिणामिव सागरमापगाः ।
मगधकोसलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् ॥ १७ ॥

१५. अनुदितमनुच्छ्रितमन्यत्स्वच्छत्रातिरिक्तं सितातपवारणं श्वेतच्छत्रं यस्य सः । अनलसोमयोरग्निचन्द्रयोः समे द्युती तेजःकान्ती यस्य स तथोक्तः । श्रियं लक्ष्मीं रन्ध्रेऽन्यायालस्यादिरूपे छले चलां चञ्चलामवेक्ष्यावलोक्य । श्रीर्हि केनाचिन्मिषेण पुमांसं परिहरति । स दशरथो मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वमुपगतोऽपि ( प्राप्तोपि )। चक्रवर्ती सन्नपीत्यर्थः । “ अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका । रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः । आद्यक्षत्रियभेदे तु मतो मुख्यमहीपती ” इति केशवः । अनलसोऽप्रमत्तोऽभूत् । द्वादशराजमण्डलं तु कामन्दकेनोक्तम्—“ अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथारिमित्रमित्रं च विजिगीषोः पुरःस्थिताः । पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु मण्डलं । अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे । मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ” इति । “ अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासाराः ” इति पृष्ठतश्चत्वारः । मध्यमोदासीनौ द्वौ विजिगीषुरेक इत्येवं द्वादशराजमण्डलम् । तत्रोदासीनमध्यमोत्तरचक्रवर्ती । [ “ विजिगीषुररिर्मित्र पार्ष्णिग्राहोऽथ मध्यमः । उदासीनः पुलोमन्द्रौ षट् मण्डलमूचतुः । उदासीनो मध्यमश्च विजिगीषोस्तु मण्डलं । उशना मण्डलमिदं प्राह द्वादशराजक ” इति—हे० ] । दशरथश्चैतादृगिति तात्पर्यार्थः ।

१६. पत्यौ व्रतं नियमो यस्याः सा । [ पतिस्व व्रतं यस्याः सा—हे० ] । पतिव्रता । [ आलयत्वेन पाणिस्थत्वेन वा कमलेन सह वर्तमाना—हे० ] । सकमला कमलहस्ता देवता लक्ष्मीरर्थिषु विषयेऽलाघवं लघुत्वराहितम् । अपराङ्मुखमित्यर्थः । ककुत्स्थकुलोद्भवं तं दशरथमात्मभवं पुरुषं । [ पुरि शरीरे उषतीति पुरुषः—हे० चा० ] । विष्णुं चापहाय त्यक्त्वा । अन्यं कं नृपतिमसेवत । कमपि नासेवतेत्यर्थः । [ विष्णुः पृथ्वीपतिरिति व्रतभंगाभावः—हे० ] । विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराभूदित्यर्थः । [ नादेवाच्छोऽपोत्पन्नं ना रुद्राद् रुद्रमर्चयेत् । नानृषिः कुरुते काव्यं ना विष्णुः पार्थिवपतिः—हे० ] ।

१७. पतिरेव देवता यासां ताः पतिदेवताः पतिव्रताः । मगधाश्च कोसलाश्च केकयाश्च ताञ्जनपदा-

---

15. Though got to the position of the chief of the circle of twelve kings, that king, whose personal bright splendour was equal to that of fire and the moon and besides whose white umbrella no other white umbrella could be raised on the earth, was ever vigilant thinking that Fortune is apt to slip on a slight fault.

16. Except the self-existent person and that king who was born in the line of Kakutstha, who were both liberal ( lit. not niggardly ) to supplicants, what other prince could the devoted and virtuous Goddess of Wealth with a lotus in her hand, go to serve ?

17. Daughters of the rulers of the Magadhas, the Kos'alas and the Kekayas, who looked upon

---

15. B. with Chá. Din. Va. and Su., अनुचिता° for अनुदिता°: A. D. with He. Châ. Din. Vija. read the third Pâda as follows. अजितमस्ति नृपास्पदं so also Malli., ‘ पाठान्तरे ’ अजितं नृपास्पदमस्तीति बुध्यानलसोऽप्रमत्तोऽभूत् । विजितानिखिलनेतृश्योऽपि पुनर्नेतृव्यान्तरवानिव जागरूक एवावतिष्ठते इत्यर्थः.

16. C. ककुत्स्थकुलोद्वहं for ककुत्स्थकुलोद्भवं; B. C. with He. Châ. Din. Va. Dhar. and Vija., आत्मभुवं for आत्मभवं. So also Malli:.

17. A. with He. Châ. Din. and Va., मगधकोशलकेकय°, D. मगधकोशलकैकय°, B. C. E. with Su. Dhar. and Vija., मलयकोशलकेकय°.

प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः ।
उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः ॥ १८
स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ १९ ॥
क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः ।
कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटाः ॥ २० ॥

च्छासतीति तच्छासिनः । तेषां राज्ञां दुहितरः पुत्र्यः । सुमित्राकौसल्याकैकेय्य इत्यर्थः । अत्र क्रमो न वि- वक्षितः । अहितरोपितमार्गणं शत्रुनिखातशरम् । " कदम्बमार्गणशराः " इत्यमरः । तं दशरथं क्षितीश्वर- क्ष्माभृतां दुहितरः । आ समन्तादपगच्छन्तीति । अथ वा । " आपेनाप्संबन्धिना वेगेन गच्छन्तीत्यापगाः " इति क्षीरस्वामी । नद्यः सागरमिव । पतिं भर्तारमलभन्त प्रापुः ।

१८. अरीन्घ्नन्तीत्यरिहणो रिपुघ्नाः । हन्तेः क्विप् । " ब्रह्मभ्रूणवृत्रेषु क्विप् " । इति नियमस्य प्रायिक- त्वात् । यथाह न्यासकारः—" प्रायिकश्चायं नियमः " । क्वचिदन्यस्मिन्नप्युपपदे दृश्यते । मधुहा । [उक्तं च वामनेन । ब्रह्मादिषु हन्तेर्नियमार्थासिद्धिः । केचित्तु ब्रह्मादिष्वेव हन्तेरेकमेव नियममङ्गीकुर्वते । तमपि च भूते मन्यते । ततः कालसामान्यविवक्षायामरीन् हन्तीत्यरिहा रिपुहा मित्रहा इत्यादि सिध्यति—हे० चा०]। " प्रायिकत्वं च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते " इति । तेषु योगेषूपायेषु विचक्षणो दक्षः । " योगः संनहनोपायध्यानसंगतियुक्तिषु " इत्यमरः । इन्द्रेऽपि योज्यमेतत् । असौ दशरथस्तिसृभिः प्रियतमाभिः सह । प्रजा विनिनीषुर्विनेतुमिच्छुरितस्तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिरेव सह भुवमुपगतो हरिहय इन्द्र इव । बभौ ।

१९. महारथः स दशरथः संयुगमूर्ध्नि रणाङ्गणे मघवत इन्द्रस्य सहायतां प्रतिपद्य प्राप्य शरैः ( बाणैः ) अवधूतभयाः ( अवधूतं नाशितं भयं यासां ताः ) निवर्तितत्रासाः । [ असुरहननान्निर्भया इत्यर्थः—हे० चा० सु० ] । सुरवधूः ( देवरमणीः ) । उच्छ्रितं ( उन्नत ) स्वभुजवीर्यं ( निजबाह्वोर्बलं ) अगापयत्किल खलु । गायतेः शब्दकर्मत्वात् " गतिबुद्धि—" इत्यादिना सुरवधूनामपि कर्मत्वम् ।

२०. क्रतुष्वश्वमेधेषु विसर्जितमौलिनावरोपितकिरीटेन [ त्यक्तकेशेन । दीक्षितेन मुण्डितेन भाव्यं । त्य- क्तमुकुटेन वा । भूपा हि यज्ञेषु वपनस्थाने मौलं विसर्जयन्ति—हे० " आधाने काले सोमे च वपनं " इत्या- दिस्मरणान्मुण्डितशिरस्त्वं—चा० ] । " यावद्यज्ञमध्वर्युरेव राजा भवति " इति राज्ञश्चिह्नत्यागविधानादित्य- भिप्रायः । " मौलिः किरीटे धम्मिल्ले " इति विश्वः । भुजसमाहृतदिग्वसुना भुजार्जितदिगन्तसंपदा । [ अने- न पवित्रत्वोक्तिः—हे० ] । अनेन क्षत्रियस्य विजितत्वमुक्तम् । नियमार्जितधनत्वं सद्विनियोगकारित्वं च सू-

---

their husband as their God, obtained him for their husband who had levelled his darts against his enemies, as streams of mountains obtain the ocean.

18. The king with his three loving wives, himself skilful in divising means of destroying his enemies, looked like Indra, the God with the bay horses, come down to the earth in bodily form accompanied only by the three powers, as if with the desire of ruling over the mortals.

19. It is said that this great warrior having become the associate of Indra in the van of battle, relieved the celestial damsels from fears by means of his arrows, and thus made them chant the sublime might of his arms.

20. Laying aside his crown during the performance of sacrificial ceremonies he, who had amassed the wealth of quarters by dint of his arms, and who was exempt from the quality of ignorance, made the banks of the Tamasá and the Sarayu embellished by erecting golden sacrificial columns on them.

---

19. D. महायशाः for महारथः

अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम् ।
अधिवसंस्तनुमध्वरदीक्षितामसमभासमभासयदीश्वरः ॥ २१ ॥
अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः ।
नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २२ ॥
असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता ।
दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥

ध्यते । वितमसा तमोगुणरहितेन तेन दशरथेन । तमसा च सरयूश्च नद्यौ । तयोस्तटाः कनकयूपानां (काञ्चनयज्ञस्तम्भानां) समुच्छ्रयेण समुन्नमनेन शोभिनः (स्वर्णयूपोच्छ्रयारम्याः) कृताः । "कनकमयत्वं च यूपानां शोभार्थं विध्यभावात् । "हेमयूपस्तु शोभिकः" इति यादवः ।

२१. ईश्वरो भगवानष्टमूर्तिरजिनं कृष्णाजिनं दण्डमौदुम्बरं च बिभर्तीति तामजिनदण्डभृतम् । "कृष्णाजिनं दीक्षयति । औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति" इति वचनात् । [ दीक्षितमीश्वरोऽनुप्रविशेदित्यागमः–हे० ] । कुशमयी मेखला (काञ्ची) यस्यास्तां कुशमेखलाम् । शरमयी मौञ्जी वा मेखला । तया यजमानं दीक्षयतीति विधानात् । प्रकृते कुशग्रहणं क्वचित्प्रतिनिधिदर्शनात्कृतम् । यतगिरं वाचंयमाम् । "वाचं यच्छति" इति श्रुतेः । मृगशृङ्गं परिग्रहः कण्डूयनसाधनं यस्यास्ताम् । (गृहीतमृगशृङ्गामित्यर्थः) । [ यथा रामायणे कुशलवोपाख्याने । "मृतशेषास्तु ये योधास्ते गत्वा राममब्रुवन् । समासीनं दीक्षितञ्च मृगशृङ्गपरिग्रहं । त्वचं रुरोर्वसानञ्च दण्डधारं सुमेखलं" इति–हे० ] । "कृष्णविषाणया कण्डूयते" इति श्रुतेः । अध्वरदीक्षितां संस्कारविशेषयुक्तां तनुं दाशरथिमाधिवसन्नाधितिष्ठन्सन् । असमां भासो दीप्तयो यस्मिन्कर्मणि तद्यथा तथा (उत्कृष्टदीप्ति) । अभासयद्भासयति स्म ।

२२. अवभृथेन (यज्ञान्तस्नानेन) प्रयतः नियतेन्द्रियः । [ नियमतत्परः–हे० ] । सुरसमाजसमाक्रमणोचितो देवसभाधिष्ठानार्हः । [ "समाजः परिषत्सदः" इत्यभिधानचिन्तामणिः–चा० सु० ] । स दशरथ उन्नतं (उच्चैस्तरं) शिरः (मस्तकं) वनमुचे जलवर्षिणे । "जलं नीरं वनं सत्त्वम्" इति शाश्वतः । नमुचेः (न मुञ्चति रणमिति नमुचिस्तस्य दैत्यस्य) अरये केवलमिन्द्रायैव नमयति स्म । [ लोकरक्षार्थं वृष्टेरपेक्षितत्वादिन्द्रमेवानमच्छिरः इत्यर्थः–चा० सु० ] । न कस्मैचिदन्यस्मै मानुषायेत्यर्थः ।

२३. एकरथेनाद्वितीयरथेन तरस्विना बलवता हरिहयस्येन्द्रस्याग्रसरेण धनुर्भृता (धानुष्केण) दशरथेनासकृद्बहुशो दिनकरस्य (सूर्यस्य) अभिमुखाः (सन्मुखाः) । अभिमुखोच्छ्रिता इत्यर्थः । रणरेणवः (सुरासुरसैन्योत्थापितधूलयः) सुरद्विषां दैत्यानां रुधिरेण (अस्रा) रुरुधिरे निवारिताः ।

---

21. The god ईश्वर presiding over (lit dwelling in) his body that had undergone the initiative ceremony of the sacrifices, with his speech restrained, holding the antelope hide and a staff, wearing a waist-band of Kus'a-grass and furnished with the horn of a deer, made it shine with matchless splendour.

22. He, who was purified by the ablutions at the end of the sacrificial ceremonies, who had controlled his senses, who was every way worthy to move in the assembly of the gods, bowed his high head only to the enemy of Namuchi, the showerer of rains.

23. Thus that single-chariot-warrior, the mighty bowman, having taken the lead of Indra often suppressed the dust, raised in the battle field, and which was going upwards in the direction of the sun so as to obscure it, by the stream of blood of the gods'enemies.

---

21. D. °भृता for °भृतं; C. E. with He. and Va., जित° for यत°.

22. C. E. with Chà. Din. Su. Dhar. and Vija., विजितेन्द्रियः. D. and Va. अपि जितेन्द्रियः for यतेन्द्रियः.

23. B. C. E. with He. Chá. Din. Va. Su. Dhar. aud Vija., एव ।हितेन for

अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् ।
यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥
जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् ॥ २५ ॥
कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ २६ ॥

२४. अथ यमकुबेरजलेश्वरवज्रिणां धर्मराजधनदवरुणामरेन्द्राणां समा धूर्भारः यस्य स समधुरः । [ कार्यनिर्वाहकत्वं–हे० ] । माध्यस्थवितरणसनियमनैश्वर्यैस्तुल्यकक्ष इत्यर्थः । " ऋक्पूरब्धूः–" इत्यादिना समासान्तोऽप्रत्ययः । तं समधुरम् । अञ्चितविक्रमं पूजितपराक्रमं । [ प्रशस्तपौरुषं–हे० चा० ] । एकनराधिपं ( सार्वभौमं ) तं दशरथं सेवितुमिव । मधुर्वसन्तः । " मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे " इति विश्वः । नवैः ( प्रत्यग्रैः ) कुसुमैः ( पुष्पैः ) उपलक्षितः सन्समाववृते समागतः । " रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम् " इति वचनात्पुष्पसमेतो राजानं सेवितुमागत इत्यर्थः ।

२५. धनदाध्युषितां कुबेराधिष्ठितां दिशं ( उत्तरां आशां ) जिगमिषुर्गन्तुमिच्छुः । रथयुजा ( रथं युनक्तीति रथयुक् तेन ) सारथिनारुणेन परिवर्तितवाहनो निवर्तिताश्वो रविः । हिमस्य ( तुषारस्य ) निग्रहैर्निराकरणैर्दिनमुखानि प्रभातानि विमलयन्विशदयन् । मलयं नगं मलयाचलमत्यजत् ( अतीत्य गतः ) । दक्षिणां दिशमत्याक्षीदित्यर्थः ।

२६. आदौ कुसुमजन्म । ततो नवपल्लवाः । तदनु । " अनुर्लक्षणे " इति कर्मप्रवचनीयत्वाद्द्वितीया । यथासंख्यं तदुभयानन्तरं षट्पदानां ( भ्रमराणां ) कोकिलानां ( पिकानां ) च कूजितम् । इत्येवंप्रकारेण यथाक्रमं क्रममनतिक्रम्य । [ पुष्पप्रियो भृंगः पल्लवप्रियः पिकः इति क्रमोक्तेरयमभिप्रायः । यद्वा । शाल्मलीमधुककिंशुकाद्याः प्रथमं पुष्प्यन्ति–हे० चा० ] । द्रुमवतीं ( प्रशस्ता द्रुमाः वृक्षाः सन्त्यस्यामिति तां तथोक्तां ) द्रुमभूयिष्ठां वनस्थलीमवतीर्य मधुर्वसन्त आविरभूत् ( प्रादुरासीत् ) । केषांचिद्द्रुमाणां पल्लवप्राथम्यात्केषांचित्कुसुमप्राथम्यान्नोक्तक्रमस्य दृष्टविरोधः । [ " पूरणगुणसुहितार्थ– " इत्यादिना समासनिषेधात् । तदनुशब्देन समासो महाकविप्रयोगादेव साधुः। यथात्रैव । "विश्वं तदनु बिभ्रते" इति मेघदूतेऽपि । " संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयं " इति । पञ्चमीसमासोऽत्र साहचर्यात्कृतोऽव्ययेन समासो निषिध्यते इति वा–हे० ] ।

24. And now with fresh flowers came the Spring to do honour as it were, to that Sole Sovereign of the people ( i. e. Universal Emperor ) of adorable prowess and having equal burden ( of governing and dignity ) with Yama, Kubera, Varuna and Indra.

25. Desirous of going to the quarter presided over by the Lord of wealth ( Kubera ), the Sun, having his horses turned back by his Charioteer, left the Malaya mountain, brightening the dawn by removing the frost.

26. There was first the blowing ( lit. birth ) of flowers, then there were sprouts of fresh leaves; then there were heard the humming of bees and the notes of the cuckoos. in this order did मधु ( i. e. the vernal season ), who descended incarnate to the forest ground that was abounding in trees, exhibit himself.

24. D. E. with He. Chà. Din. Va. Su. Dhar. and Vija. °वज्रिणं for °वज्रिणां.

25. D. हिमनिग्रैहैः for हिमनिग्रहैः. Between 24-25. B. C. D. E. with He. Chà. Din. Va. Su. Dhar. and Vija. read:–" हिमविवर्णितचन्दनपल्लवं विरहयन्मलयाद्रिमुदङ्मुखः । विहगयोः कृपयेव शनैर्ययौ रविरहर्विरहध्रुवभेदयोः ॥ " But Chà. calls it a spurious stanza.

26. B. C. E. with He. Chà. Din. Va. Su. and Vija. तदनुषट्पदको° for तदनु षट्पदको°.

नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः ।
अभिययुः सरसो मधुसंभृतां कमलिनीमलिनीरपतत्रिणः ॥ २७ ॥
कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् ।
किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥ २८ ॥
विरचिता मधुनोपवनश्रियामभिनवा इव पत्त्रविशेषकाः ।
मधुलिहां मधुदानविशारदाः कुरबका रवकारणतां ययुः ॥ २९ ॥
सुवदनावदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः ।
मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः ॥ ३० ॥

२७. नयो नीतिरेव गुणः । तेन । अथ वा नयेन गुणैः शौर्यादिभिः । [ सन्ध्यादिषड्गुणैः–हे० ] । चोपचिताम् । सतामुपकारः फलं यस्यास्तां सदुपकारफलां । ( उपकारस्याविवितरणमेवे फलमित्यर्थः ) । भूपतेर्दशरथस्य श्रियमर्थिनः ( असंनिहितोऽर्थो येषां ते अर्थिनः ) इव । मधुना वसन्तेन संभृतां सम्यक्पुष्टां सरसः ( तडागस्य ) संबन्धिनीं कमलिनीं पद्मिनीमलिनीरपतत्रिणः । अलयो भृङ्गाः । नीरपतत्रिणो जलपतत्रिणो हंसादयश्च । अभिययुः । [ नीरपतत्त्रिणोऽल्पमकरन्दां स्थलकमलिनीं नाभिलषन्ति । अतः सरोग्रहणं–हे० चा० ] ।

२८. ऋतुरस्य प्राप्त आर्तवम् । "ऋतोरण्" इत्यण् । नवं प्रत्यग्रमशोकतरोः । [तरुशब्देन अशोकस्य मौढत्वं । मध्यमपदलोपीसमासः–हे० चा० ] । केवलं कुसुममेव स्मरदीपनं उद्दीपनं न । किं तु विलासिनां ( कामिनां । कर्मणि षष्ठी । मदयिता मदजनको दयिताश्रवणार्पितः ( दयितानां रमणीनां श्रवणेषु कर्णेषु अर्पितः दत्तः ) किसलयप्रसवोऽपि पल्लवसंतानोऽपि स्मरदीपनोऽभवत् ।

२९. मधुना वसन्तेन विरचिता उपवनश्रियामभिनवाः पत्त्रविशेषकाः पत्त्ररचना इव स्थिता मधूनां मकरन्दानां दाने विशारदाश्चतुराः कुरबकास्तरवो मधुलिहां मधुपानां रवकारणतां ययुः । [ यन्मुनिः । " माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पौतिकं । विज्ञेयं भ्रमरं श्वेतं क्षौद्रं तु कपिलं मतं " इति–हे०] । भृङ्गाः कुरबकाणां मधूनि पीत्वा जगुरित्यर्थः । दानशौण्डानर्थिजनाः स्तुवन्तीति भावः ।

३०. सुवदनावदनासवेन कान्तामुखमद्येन संभृतो जनितः । तत्तस्य दोहदमिति प्रसिद्धिः । तस्यासव-

---

27. As the needy flock about the King's wealth which is acquired by proper course of action in politics, and the object of which is to help the virtuous, so did the bees and the water-fowls repair to the cluster of lotuses of the lake full blown on account of the advance of the Spring.

28. Not only the fresh vernal flower of the As'oka tree alone became the object of exciting love, but also the young sprouts of leaves, which are put on the ears of beloved women and which madden their lovers with passion.

29. The Kurabakas, which appeared like ornamental leaves painted in amatory sports on the person of the Vernal Beauty by her lover the Spring, and which were liberal in giving nectar to the bees became the cause of their humming.

30. The blowing of flowers caused by wine from the mouths of ladies wearing beautiful

29. D. and He. मधुकृतां for मधुलिहां. Between 29-30 B. D2. E. with He. Chá. Din. Va. and Su., read " दशनचन्द्रिकया व्यवभासितं हसितमासवगन्धि मधोरिव । तिलकपुष्पमसेव्यत षट्पदैः शुचिरसं चिरसंचितमीप्सुभिः" । [D2. and He. बकुलपुष्पं for तिलकपुष्पं.]

30. D. and He. पुष्पोत्करः for कुसुमोद्गमः. Between 30-31 B. E. with He. Chà. Din. Va. and Su., read " गमयितुं प्रभुरेष सुखेन मां न महतीं बत पान्थवधूजनः । इति दयाकुलयेव तदायता न रजनी रजनीश्रवती मधौ.

उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके ।
प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ३१ ॥
व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम् ।
न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान्हिमम् ॥ ३२ ॥
अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा ।
अमदयत्सहकारलता मनः सकलिकाकलिकामजितामपि ॥ ३३ ॥

स्यानुवादी सदृशो गुणो यस्य तदनुवादिगुणः कुसुमोद्गमः ( पुष्पोत्पत्तिः ) । कर्ता । मधुलोलुपैरायतपङ्क्तिभिर्दीर्घपङ्क्तिभिर्मधुकरैर्मधुपैः । करणैः । [ बकुलो ह्यङ्गनानां मद्यगण्डूषेण पुष्प्याति—हे० ]। बकुलं बकुलवृक्षमकुलमकरोत् ।[ अनुप्रासयमकं—हे० ] ।

३१. शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके पलाशवृक्षे । " पलाशः किंशुकः पर्णः " इत्यमरः । उपहितं दत्तं मुकुलजालं कुड्मलसंहतिः । ( जालवत्सर्वतः आवरणीभूतः कुसुमप्रकरः इत्यर्थः ) । मदेन यापितलज्जयापसारितत्रपया प्रमदया ( कामिन्या ) प्रणयिनि प्रियतम उपहितं नखक्षतमेव मण्डनं तदिव । [ अनेन पुरुषायितमुक्तं—हे० ] । अशोभत । [ प्रमदया मदयापितलज्जया इति पुनरुक्तप्रायामिति व्यक्तिविवेकः—हे० ] ।

३२. व्रणैर्दन्तक्षतैर्गुरुभिर्दुर्धरैः प्रमदानामधरैरधरोष्ठैर्दुःसहं हिमस्य व्यथाकरत्वादसह्यम् । [ प्रायेण हेमन्ते मुक्तादिरत्नशैत्यान्मेखलां न बिभ्राति इति प्रसिद्धिः—हे०चा०सु० ] । जघनेषु निर्विषयीकृता निरवकाशीकृता मेखला (क्षुद्रघंटिका) येन तत् । शैत्यात्त्याजितमेखलमित्यर्थः । एवंभूतं हिमं ( तुहिनं ) रविस्तावदा वसन्तादशेषं निःशेषं यथा तथापोहितुं निरसितुं नालं खलु न शक्तो हि । [ " निषेधवाक्यालंकारजिज्ञासानुनये खलु " चा० ][ "अलं तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" इति वैजयन्ती—चा० ] । किं तु विरलं कृतवांस्तनूचकार ।

३३. अत्र चूतलताया नर्तकीसमाधिरभिधीयते । अभिनयानर्थव्यञ्जकान्व्यापारान् । [ नृत्यविशेषान्—

faces, and having the like quality, made the Bakula tree full of bees in long rows ardently longing for honey.

31. The multitude of opening buds with which the Palás'a tree was vested by the Vernal Beauty at the departure of winter, looked like the ornament of nail-scratches of a young woman, whose bashfulness has been removed under the influence of intoxication, on the body of her lover.

32. Though the sun could lessen the frost then unbearable to the lower lip of young women, sore with marks of teeth and by reason of which the waist-band found no place on their loins, he was indeed not thoroughly able as yet to dissipate it entirely.

33. The new-budded mango creeper, whose sprouts were shaken by the breeze from the

31. B. C. E. अरोचत for अशोभत; B. D. E. with He. Chà. Din. Va. and Su, read the following for 31 stanza " सुरभिसंगमजं वनमालया नवपलाशमधार्यत भंगुरं । रमणदत्तमिवार्द्रनखक्षतं प्रमदया मदयापितलज्जया. Between 32-33. B. E. with He. Chà. Din. Va. and Su. read "परभृतां मदनक्षतचेतसां प्रियसखी लघुवागिव योषितां । प्रियतमानकरोद्विरहांतरे मृदुरवा दुरवापसमागमान् " [ E. °चेतसः for चेतसां; E. कलहांतरे for विरहांतरे; Chà. दुरवास° for दुरवाप° ]. Between 35-36. B. E. and Chà Din. Va. and Su., read "अनलसान्यभृतानलसान्मनः कमलधूलिभृता मरुतेरिता । कुसुमभारनताध्वगयोषितामसमशोकमशोकलताकरोत् " [ E. रेणुभृता for धूलिभृता; Chà मदनेरिता for मरुतेरिता ] । लघयति स्म न पत्यपराधजां न सहाकारलतस्तरुणीकृतां कुसुमितो न मितोलिभिरुन्मदैः स्मरसमाधिकरोऽधिकरोषतां " । [ D 2. ° भूतां. A2. धृतिं for कृतां ]. " विशदचन्द्रकरं सुखमारुतं कुसुमितद्रुममुन्मदकोकिलं । तदुपभोगरसं हिमवर्षिणः परमृतोरमृतोपमतां ययुः " ।

प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः ।
सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ ३४ ॥
श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ३५ ॥
ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ ३६ ॥

हे० ] । " व्यञ्जकाभिनयौ समौ " इत्यमरः । परिचेतुमभ्यसितुमुद्यतेव स्थिता । कुतः । मलयमारु (मलयाचलवायुना) कम्पितपल्लवा । पल्लवशब्देन हस्तो गम्यते । [ अपरापि सुन्दरी हस्ताद्यभिनयान्हृ सूचकान्व्यापारान् प्रकटयन्ती यतिचित्तान्युन्मादयतीति छायार्थः-हे० चा०] । सकलिका सकोरका । " लिका कोरकः पुमान् " इत्यमरः । सहकारलता ( चूतशाखा वा ) । कलिः कलहो द्वेष उच्यते " कलिः स्यात्कलहे शूरे कलिरन्त्ययुगे युधि " इति विश्वः । कामो रागः । तज्जितामपि । [ यद्व कलौ कलियुगे कामं जयन्तीति कलिकामजितः तेषां । कलिना कलहेन कामं जयन्तीति वा-हे०चा० जितरागद्वेषाणाम् । [ मुनीश्वराणां-चा० सु० ] । अपीत्यर्थः । मनोऽमदयत् ।

३४. सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु । ( सुरभिगन्धयुक्तासु इत्यर्थः ) । " गन्धस्य-" इत्यादि कारः । कुसुमान्यासां संजातानि कुसुमिताः । तासु वनराजिषु वनपङ्क्तिषु । अन्यभृताभिः कोकिला प्रथमं प्रारम्भेषूदीरिता उक्ता अतएव मिताः परिमिता गिर आलापाः । प्रविरला मौग्ध्यात्स्तोकोक्ता मुग्ध धूनां कथा वाच इव । शुश्रुविरे श्रुताः ।

३५. श्रुतिसुखाः कर्णमधुरा भ्रमरस्वना एव गीतयः ( गानानि ) यासां ताः । कुसुमान्येव कोमल ( रम्याः ) दन्तरुचो दन्तकान्तयो यासां ताः । [ कुसुमकोमलैर्दन्तैरुगिति वा—हे० ] । अनेन सस्मित विवक्षितम् । उपवनान्तलताः । [ उद्यानमध्यवल्यः । अन्तशब्दः स्वरूपवाची-हे० ] । पवनेन ( वायुन आहतैः कम्पितैः किसलयैः सलयैः साभिनयैः । लयशब्देन लयानुगतोऽभिनयो लक्ष्यते । उपवनान्तं प नाहतैरिति सक्रियत्वाभिधानात् । पाणिभिरिव बभुः [रेजुः । नर्तक्योऽपीदृश्यो भवन्तीति छायार्थः--चा । अनेन लतानां नर्तकीसाम्यं गम्यते । [ गेये हि दन्तभासा साकाराभिनयेन भाव्यं । नृत्यगीतरागा समा हस्तक्रिया लया लयसाम्यं यथा स्त्रियां । स्त्रीणामपि श्लेषः-हे० ] ।

३६. अङ्गनाः । [ प्रशस्तं अंगं यासां ताः--चा० ] । ललितविभ्रमबन्धविचक्षणं मधुरविलासघटनाप तरम् । [ उक्तञ्च माघे । " । हावहारि हसित वचनानाम् " इति-चा० ] । सुरभिणा मनोहरेण गन्

mountain Malaya, being intent on, as it were, to practise theatrical gesticulations, fascinat the minds even of those who had conquered rage and love.

34. There in the rows of forests fragrant with sweet scent and abounding in flowers w heard the measured coomgs first uttered by the cuckoos, like the moderate expressions giv out by bewitching bashful females.

35. With songs consisting of the humming of bees charming to the ear, and with pleasi splendour of teeth in the form of flowers, the creepers of the planted forest looked beautiful w their sprouts shaken by the breeze, as if they were hands gesticulating ( in consonance w the song ).

36. The women enjoyed the drink of wine, the friend of the god of Love, which surpass

---

36. D. °हास° for ° बन्ध°. So also noticed by He. and Chá.; D. मदं for म So also noticed by He. Between 36 37. B. C. D.E. with He. Chà. Di Val. Su. Dhar. and Vija. read:–" तिलकमस्तकहर्म्यकृतास्पदैः कुसुममध्वनुषंगसुगन्धिभि कलमगीयत भृंगविलासिभिः स्मरयुतैरयुतैरबलासखैः " ।

शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः ।
विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः ॥ ३७ ॥
उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥ ३८ ॥
अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥

पराजितकेसरं निर्जितबकुलपुष्पम् । " अथ केसरे बकुलः " इत्यमरः । [ " बकुलः केसरोऽशोकः " इत्यभिधानचिन्तामणिः–चा० सु० ] । स्मरस्य सखायं स्मरसखम् । स्मरोद्दीपकमित्यर्थः । मधुं मद्यम् । [ " मधुं मद्यं वसन्तं वा "–हे० चा० ] । " अर्धर्चाः पुंसि च " इति पुंलिङ्गता । उक्तं च–"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः " इति । पतिषु ( रमणेषु ) विषये रसखण्डनवर्जितमनुरागभङ्गरहितं यथा तथा निर्विविशुः । परस्परानुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ।

३७. विकचतामरसा विकासितकमलाः । मदेन कला अव्यक्तमधुरं ध्वनन्त उदकलोलविहंगमा जलप्रियपक्षिणो हंसादयो यासु ताः । [मदकलाः मदोत्कटाः उदके लोलाश्चपला । विहंगमाः हंसादयो यासु ताः –हे० ] । मदकलोदकलोलविहंगमाः । [ " ध्वनौ तु मधुरास्फुटे कलः " इत्यमरकारः–हे० ] । गृहेषु दीर्घिका वाप्यः । [ क्रीडावाप्यः—चा० ] । स्मितेन चारुतराण्याननानि यासां ताः । [ स्मितलक्षणमुक्तञ्च नाट्यलोचने । " ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितं द्विजद्वारे सूत्तमानां स्मितं भवेत् " इति–चा० ] । श्लथाः शिञ्जिता मुखरा मेखला यासां ताः । शिञ्जितेति कर्तरि क्तः । स्त्रिय इव ( योषित इव )। शुशुभिरे । [ इयं कल्पितोपमा–सु० ]।

३८. मधुना मधुसमयेन । [ चैत्रेण–चा० ] । खण्डिता ह्रासं गमिता । क्षीयन्ते खलूत्तरायणे रात्रयः । खण्डिताख्या च नायिका ध्वन्यते । हिमकरोदयेन चन्द्रोदयेन पाण्डुः ( धवला ) मुखस्य प्रदोषस्य वक्त्रस्य च छविः ( कान्तिः ) यस्याः सा रजन्येव वधूः ( रात्रिकामिनी ) । इष्टसमागमनिर्वृतिं । ( इष्टेन वल्लभेन यः समागमः संयोगः तस्य निर्वृतिः सुखम् ) । प्रियसंगमसुखमानितयाप्राप्तया । " इण्गतौ " इति धातोः कर्तरि क्तः । वनितया ( स्त्रिया ) सदृशं तुल्यं तनुतां न्यूनतां कार्श्यं चोपययौ । [ अपरापि तत्र खण्डितवल्लभा पाण्डुवदना क्षीणा च स्यात् तथा चैत्रेण मुक्ता रजन्यपीत्यर्थः –चा० सु० ] ।

३९. हिमकरः चन्द्रः । अपतुषारतयापगतनीहारतया विशदप्रभैर्निर्मलकान्तिभिः सुरतसङ्गपरिश्रमनो-

---

the Bakula flower in sweet smell and which highly tended to produce graceful amorous actions without interrupting their love towards their husbands.

37. The artificial house-ponds with lotuses full blown, with birds fond of water and uttering indistinct notes through intoxication, looked charming like women having faces the more bewitching by their smiles, and zones jingling because they were loosened.

38. The Night-damsel the luster of whose face was rendered pale on account of the rise of the cool-rayed moon being cut short by the Spring, grew thin like a female that is denied the happiness of her wished-for lover's company.

39. The cool-rayed moon caused the god of Love to sharpen his flowery bow by means of

---

37. D. °चारुविलोचनाः for °चारुतराननाः.

38. D. गमयितुं प्रियसंजनितां व्यथामसहया सह यामवती स्त्रिया for the last two Pàdas. So also noticed by He.

39. B. C. E. with He. Chà. Din. Va. Su. Dhar. and Vija., सुरतराग° for सुरतसङ्ग°.

हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत्।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥ ४० ॥
अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥ ४१ ॥
अमदयन्मधुगन्धसनाथया किसलयाधरसंगतया मनः।
कुसुमसंभृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥

दिभिः। सुरतसङ्गस्वेदहारिभिरंशुभिः किरणैः। [ उक्तञ्च रतिरहस्ये । " चन्दनं मृदुनालानि हरंति सुरत श्रम " इति—हे० ]। मकरोर्जितकेतनम् मकरेणोर्जितं केतनं ध्वजो यस्य तम्। [ अनया उक्तया स्मरस्य साम्राज्यध्वनिः—हे० ]। लब्धावकाशत्वादुच्छ्रितध्वजमित्यर्थः। कुसुमचापं काममतेजयदशातयत्। " तिज निशाने " इति धातोर्ण्यन्ताल्लङ्। सहकारिलाभात्कामोऽपि तीक्ष्णोऽभूदित्यर्थः।

४०. हुतहुताशनदीप्त्याज्यादिप्रज्वलिताग्निप्रभं यत्कुसुमम् । कर्णिकारमित्यर्थः। वनश्रिय उपवनलक्ष्म्याः कनकाभरणस्य ( सुवर्णभूषणस्य ) प्रतिनिधिः। अभूदिति शेषः। दलेषु केसरेषु च पेशलम् ( चारुसुंदरं )। सुकुमारपत्त्रकिञ्जल्कमित्यर्थः। आहितम्। प्रियैरिति शेषः। तत्कुसुमं युवतयः ( स्त्रियः ) अलके कुन्तले दधुः।

४१. अञ्जनबिन्दुमनोहरैः ( अञ्जनस्य कज्जलस्य बिन्दुवन्मनोहरैः ) कज्जलकणसुन्दरैः। कुसुमपङ्क्तिषु निपतन्ति ये तैः। अलिभिः ( भ्रमरैः ) अङ्कितश्चिह्नितस्तिलकः श्रीमान्नाम वृक्षः। " तिलकः क्षुरकः श्रीमान् " इत्यमरः। वनस्थलीम्। तिलकं विशेषकः। " तमालपत्त्रतिलकचित्रकाणि विशेषकम्। द्वितीयं च तुरीयं च न स्त्रियाम् " इत्यमरः। प्रमदामिव । न शोभयति स्मेति न खलु। अपि त्वशोभयदेवेत्यर्थः। [ मस्तके कृतः तिलकः स्त्रियं शोभयति तथा सोऽपि तिलकवृक्षः अञ्जनबिन्दुवन्मनोहरो भवति—सु०चा० ]। " लट् स्मे " इति स्मशब्दयोगाद्भूतार्थे लट्। [ तिलकंष्वञ्जनबिन्दवः शोभार्थं क्रियन्ते। तिलकशब्दस्य द्विरुपादाने भिन्नार्थतया न दोषः। तिलकप्रमदयोरेकतरस्मिन्वाक्ये यदुभयोर्वचनं न दोष इति व्यक्तिविवेकः—हे० ]।

४२. तरुचारुविलासिनी तरोः पुंसश्च चारुविलासिनी नवमल्लिका सप्तलाख्या लता। " सप्तला नवमल्लिका " इत्यमरः। मधुनो मकरन्दस्य मद्यस्य च गन्धेन सनाथया ( युक्तया )। गन्धप्रधानयेत्यर्थः। किसलयमेवाधरस्तत्र संगतया । प्रसृतरागयेत्यर्थः। कुसुमे सम्भृतया संपादितया। कुसुमरूपयेत्यर्थः। स्मितरुचा हासकान्त्या मनः। पश्यतामिति शेषः। अमदयत्। [ कामिनीस्मितमपि मद्यगन्धसनाथ अधरसंगतरागञ्च—हे० ]।

---

his rays which relieve the fatigue of सुरत enjoyment and whose light was now clear on account of the removal of the frosty weather.

40. The young ladies wore that flower having tender petals and filaments, which was stuck by their lovers in their hair, which was to Vernal Beauty in the place of an ornament made of gold, and which was as bright as fire blazing with oblations.

41. Verily it is not that the तिलक tree did not decorate the sylvan site,—the tree marked as it was with bees alighting on rows of flowers and hence looking beautiful like spots of collyrium, as decorates a young woman the mark of musk painting.

42. The creeper Navamallikā, the pretty consort of trees, gladdened the mind (of beholders)

---

42. A. with B. Chā. Din. Su. and Vija., किसलयाधरसंगतया मनः, C. E. with He. and Va., किसलयाधरसंगतरागया, D. किसलयाधरसंततया मनः. D. with He. Din. and Chā., नवमालिका for नवमल्लिका; A. D. °विलासिनी, C. and He. °विलासिनः, B. °विलासिनां. E. विलासिनीः.

अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः ।
परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥

उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥ ४४ ॥

ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

४३. विलासिनो विलसनशीलाः पुरुषाः । "वीकषलस—" इत्यादिना घिनुण्प्रत्ययः । अरुणस्यानूरो रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीत्यरुणरागनिषेधीनि । तैः । कुसुम्भादिरञ्जनात्तत्सदृशैरित्यर्थः । "तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्येवानुकरोतीति शब्दाः सादृश्यवाचकाः" इति दण्डी । अंशुकैरम्बरैः [ वस्त्रैः । कौसुम्भादिभिः । वसन्ते हि रक्तवस्त्रधारणं । "वासो वसाना तरुणार्करागम्" इति कुमारसंभवे–हे० ] । श्रवणेषु कर्णेषु लब्धपदैः । निवेशितैरित्यर्थः । यवाङ्कुरैः ( यवप्ररोहैः ) च । परभृताविरुतैः कोकिलाकूजितैश्च । इत्येतैः स्मरबलैः कामसैन्यैः । अबलास्वेक एव ( मुख्य एव ) रसो रागो येषां तेऽबलैकरसाः स्त्रीपरतन्त्राः कृताः ।

४४. शुचिभिः शुभ्रैः कणै रजोभिरुपचितावयवा पुष्टावयवा । अलिकदम्बकयोगम् ( भृंगवृन्दसंयोगं ) उपेयुषी प्राप्ता । तिलकजा तिलकवृक्षोत्था मञ्जरी । [ कणिशं–हे० ] । अलकेषु यज्जालकमाभरणविशेषस्तस्मिन्मौक्तिकैः । [ केशसमूहमुक्ताभिः–हे० ] । सदृशकान्तिः । अलक्ष्यत । [ मुक्ते च मुक्तैव मौक्तिकं इति विनयादिः । स्वार्थिकत्वाल्लिंगातिक्रमः । यद्वा । मुक्तानां समूहो मौक्तिकं । "अचित्तहस्तिधेनोष्ठक्"–हे० ] । भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्तमुक्ताजालमिवालक्ष्यतेति वाक्यार्थः ।

४५. अलिव्रजाः षट्पदनिवहा धनुर्भृतो धानुष्कस्य मदनस्य कामस्य ध्वजपटं पताकाभूतम् । ऋतुश्रियो वसन्तलक्ष्म्याश्छविकरं शोभाकरं मुखचूर्णं मुखालंकारचूर्णभूतं । [ मुखवासार्थं कर्पूरादिचूर्णं । "चूर्णानि वासयोगाः स्युः" इत्यमरः । रूपकं । "उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः" इति–हे० । आननपरिमलार्थं सुगन्धद्रव्यविशेषं–चा० मु० ] । सपवनोपवनोत्थितं सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितं ( उद्भूतं ) । कुसुमानां केसरेषु किञ्जल्केषु यो रेणुः तम् । अन्वयुरन्वगच्छन् । यातेर्लङ् ।

---

with her smiling beauty put forth by the (blooming) flowers, spreading over the sprouts as her lower lip, and accompanied by the fragrance of honey as her wine.

43. By garments surpassing the red colour of Aruṇa, by shoots of Yavagrass having secured a position on the ear, and by the cooings of cuckoos, by such other troops of the God of Love, the voluptuous gallants were made subject to the all pervading sentiment of love for young women (i. e. whose sole feeling consisted in thinking of young women).

44. A cluster of blossoms of Tilaka-tree, fully developed in its parts by white pollens and coming in contact with swarms of bees, appeared equal in beauty with the net-like ornament of pearls worn in the hair.

45. The swarms of bees flew after the dust of the filaments of flowers, raised by the breeze blowing in the pleasure garden,—the dust being as it were the banner-cloth of मदन armed with his bow, or the beautifying face-wash of the Vernal Beauty.

---

43. A. D. E. with Chā. Din. and Su., °निषेविभिः for °निषेधिभिः.

अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥ ४६ ॥
त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ४७ ॥
अथ यथासुखमार्तवमुत्सवं समनुभूय विलासवतीसखः ।
नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसंनिभः ॥ ४८ ॥
परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९ ॥

४६. नवा दोला प्रेङ्खा यस्मिंस्तं नवदोलमृतूत्सवं वसन्तोत्सवमनुभवन्नबलाजनः ( स्त्रीलोकः ) पटुरपि निपुणोऽपि । [ धीरोऽपि दोलाखेलनकुशलोऽपि—व० ] । प्रियकण्ठस्य जिघृक्षया ग्रहीतुमालिङ्गितुमिच्छया । ( वल्लभकण्ठावलम्बनस्पृहया इत्यर्थः ) । आसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां जलतां शैथिल्यम् । [ अपाटवम्—हे० ] । डलयोरभेदः । [ यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्—हे० ] । अनयत् । दोलाक्रीडासु पतनभयनाटितकेन प्रियकण्ठमाश्लिष्यादित्यर्थः ।

४७. बतेत्यामन्त्रणे । " खेदानुकम्पासंतोषविस्मयामन्त्रणे बत " इत्यमरः । बत अङ्गना मानं कोपं त्यजत । तदुक्तम्—" स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये " इति । विग्रहैर्विरोधैरलम् । विग्रहो न कार्य इत्यर्थः । गतमतीतं चतुरमुपभोगक्षमं वयो यौवनं पुनर्नैति नागच्छति । इत्येवंरूपे स्मरमते स्मराभिप्राये । [ कामसिद्धान्ते—हे० कामतंत्रे—चा० सु० ] । नपुंसके भावे क्तः । परभृताभिः कोकिलाभिर्निवेदिते ( अभिहिते ) इतीव वधूजनः ( स्त्रीसमूहः ) रमते स्म रेमे । कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनभयादिवोच्छृङ्खलमखेलदित्यर्थः ।

४८. अथानन्तरम् । मधुं ( नामकं दैत्यं ) मथ्नातीति मधुमद्विष्णुः । संपदादित्वात्क्विप् । मधुर्वसन्तः । मथ्नातीति मथः । पचाद्यच् । मनसो मथो मन्मथः कामः । तेषां संनिभः सदृशो मधुमन्मधुमन्मथसंनिभः स नरपतिर्दशरथो विलासवतीसखः स्त्रीसहचरः सन् । ऋतुः प्राप्तोऽस्यार्तवः । तमुत्सवं वसन्तोत्सवं । यथासुखं समनुभूय मृगयारतिं मृगयाविहारं चकमे आचकाङ्क्ष । व्यसनासङ्गदोषं परिहरन्नाह—

४९. असौ मृगया । चललक्ष्याणि मृगगवयादीनि । तेषां ( वेध्यानां ) निपातने परिचयमभ्यासं क-

46. Enjoying the spring festivals in which there were the new swings, the young women though naturally clever yet in their eagerness of embracing the necks of their loving husbands, feigned looseness of their tender arms in catching hold of the ropes of their seats ( in the swing ).

47. " Give up, ye damsels, your indignation excited by jealousy, away with your quarrels, the age ( i. e. youth ) so fit for enjoyment when once departed will never reappear, " in words like these the intention of the God of Love being as it were communicated to them by the cuckoos, the ladies resumed their sports.

48. Having to his heart's content enjoyed the festivities of the spring season in company with wanton women, the king, who resembled the Destroyer of मधु, the spring and the mind tormenting god of love, longed for the pleasures of hunting.

49. Hunting makes one intimate with the art of throwing down the moving mark; it gives-

46. C. पटुरभि°. D. पटुमपि, So also noticed by He., for पटुरपि. C. E. with He. Va. and Su., जडतां for जलतां.

47. D. ऐति for एति.

49. D. with Chá, Din. Su. Dhar. and Vija., तदङ्गित° for तदिङ्गित°.; B. C. E. with Su. and Vija., सा for असौ.

मृगवनोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।
गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥ ५० ॥
ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।
तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥

रोति । भयरुषोर्भयक्रोधयोस्तदिङ्गितबोधनं तेषां चललक्ष्याणामिङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानं च करोति । [ " जितश्रमत्वं व्यायाम आममेदकफक्षयः । चलस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा । मृगयायां गुणानेतान् वदन्ति नयवित्तमाः " इति कामन्दके–हे० ] । तनुं शरीरं श्रमस्य जयान्निरासात्प्रगुणां प्रकृष्टलाघवादिगुणवतीं च करोति । अतो हेतोः सचिवैः ( अमात्यैः ) अनुमतोऽनुमोदितः सन्ययौ ( अगमत् । मृगयामितिशेषः ) । सर्वं चैतद्युद्धोपयोगीत्यतस्तदपेक्षया मृगयाप्रवृत्तिः । न तु व्यसनितयेति भावः । ( " मेदश्छेदकृशोदर लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः । " इत्येवं समार्थः संदर्भः । )

५०. मृगाणां वनं तस्योपगमः प्राप्तिः । तस्य क्षममर्हं वेषं । [ लघुकृष्णकञ्चुकादिस्तं–चा० ] । बिभर्ति ( धारयति ) इति स तथोक्तः । मृगयाविहारानुगुणवेषधारीत्यर्थः । [ दीर्घवस्त्राद्धावनं न स्यात् । शुक्लवस्त्रावलोकनेन मृगादयो दूरत एव पलायन्ते । अतस्तथावेषरचनमेवाकरोत्—चा० ] । विपुलकण्ठे ( विस्तीर्णगले ) निषक्तशरासनो लग्नधन्वा । [ अनेन धनुर्धरजातिः । वधकाले विलम्बो मा भूदिति–हे०चा० ] । ना सवितेव नृसविता । [ नृषु सविता सूर्यो वा—हे० ] । पुरुषश्रेष्ठः । उपमितसमासः । स राजाश्वखुरोद्धतरेणुभिः ( तुरगखुरोत्थापितरजोभिः ) गगनं वितानं तुच्छमसदिवाकरोत् । गगनं नालक्ष्यतेत्यर्थः । " वितानं तुच्छमन्दयोः " इति विश्वः । अथ वा सवितानमित्येकं पदम् । सवितानमुल्लोचसहितमिवाकरोत् ( चकार ) । " अस्त्री वितानमुल्लोचः " इत्यमरः ।

५१. वनमालया वनपुष्पस्रजा । [ पल्लवपुष्पवत्या स्रजा–हे० ] । ग्रथितमौलिर्बद्धधम्मिल्लः । [ " वनमाला विधातव्या पल्लवैः कुसुमैः फलैः " इति विष्णुरहस्ये–हे० " पत्रपुष्पमयी माला वनमाला प्रकीर्तिता" —चा० ] । तरूणां पलाशैः पत्रैः सवर्णः समानस्तनुच्छदो वर्म यस्य स तथोक्तः । इदं च वर्मणः पलाशसावर्ण्याभिधानं मृगादीनां विश्वासार्थम् । ( एतदेव हेमाद्रिः ) । तुरगस्य वल्गनेन गतिविशेषेण । [ अश्वपरिवर्तनेन–हे० अश्वनर्तनेन–चा० सु० ] । चञ्चलकुण्डलोऽसौ दशरथो रुरुभिर्मृगविशेषैश्चेष्टिताश्चरिता या भूमयस्तासु विरुरुचे विदिद्युते ।

---

an understanding of their signs of fear and ferocity; and it makes the body endowed with excellent qualities on account of a conquest over fatigue; on these principles, being permitted by his ministers, the king went a hunting.

50. That mighty king, on account of the dust raised by the hoofs of his horses, made the sky as if a mere void (or made the sky as if having an awning of the dust raised by the hoofs of his horses),—the king putting on a dress suitable for the purpose of going to the forest abounding in the animals, with a bow hung round his full neck.

51. The king with his hair tied up with a sylvan garland, with a mail on his body of the same colour with leaves of trees, and with the ear-rings set in motion by the gallop of his horse, looked bright on those grounds which were trodden by the *ruru* deer.

---

50. B. °खुरोद्दुत,° E. °खुरोद्धृत°, for °खुरोद्धत°; B. C. E. with He. Châ. Din. Va. Su. Dhar. and Vija., सवितानं for स वितानं, So also noticed by He.

51. A. C. तरु° So also noticed by He., B. with He. and Va., तनु° D. with Châ. Din. and Su, नव.

तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।
ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोशलम् ॥ ५२ ॥
श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु विवेश सः ।
स्थिरतुरंगमभूमि निपानवन्मृगवयोगवयोपचितं वनम् ॥ ५३ ॥
अथ नभस्य इव त्रिदशायुधं कनकपिङ्गतडिद्गुणसंयुतम् ।
धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेसरी ॥ ५४ ॥

५२. तनुषु ( सूक्ष्मासु ) लतासु विनिवेशितविग्रहाः संक्रमितदेहाः । भ्रमरेषु संक्रमिताः ( अर्पिताः ) ईक्षणवृत्तयो दृग्व्यापारा यासां ता वनदेवताः सुनयनं सुलोचन नयेन नीत्या नन्दितास्तोषिताः । [ समृद्धिं नीताः—सु० ] । कोशलाः । [ अयोध्या वा—चा० ] । येन तं दशरथमध्वनि ( मार्गे ) ददृशुः ( अद्राक्षुः ) । प्रसन्नपावनतया तं देवता अपि गूढवृत्त्या ददृशुरित्यर्थः । [ किं तु लता एव वनदेवता भृङ्गरूपैः नेत्रैः कृत्वा दशरथं पश्यन्ति स्मेति भावः—सु० ] ।

५३. स दशरथः । शुनां गणः ( कुक्कुरसमूहः ) स एषामस्तीति श्वगणिनः श्वग्राहिणः । तैः । वागुरा मृगबन्धनरज्जुः । " वागुरा मृगबन्धनी " इत्यमरः । तया चरन्तीति वागुरिका जालिकाः । " चरति " इति ठक्प्रत्ययः । " द्वौ वागुरिकजालिकौ " इत्यमरः । तैश्च । [ भूमिज्ञत्वात्—हे० ] । प्रथममास्थितमधिष्ठितम् । व्यपगता अनला दावाग्नयो दस्यवस्तस्कराश्च यस्मात्तथोक्तम् । " दस्युतस्करमोषकाः " इत्यमरः । " कार्येद्धवनशोधनमादौ मातुरन्तिकमपि प्रविविक्षुः । आप्तशस्त्र्यनुगतः प्रविशेच्च संकटेषु गहनेषु न तिष्ठेत् " इति कामन्दकः । स्थिरा दृढा पङ्कादिरहिता तुरंगमयोग्या भूमिर्यस्य तत् । निपानवदाहावयुक्तम् । " आहावस्तु निपानं स्यादुपकूपजलाशये " इत्यमरः । मृगैर्हरिणादिभिर्वयोभिः पक्षिभिर्गवयैर्गोसदृशैरारण्यपशुविशेषैश्चोपचितं समृद्धं [ व्याप्त । एतेन मृगयाचारिणामक्लेशत्व सूचितं—चा० ] । वन विवेश प्रविष्टवान् ।

५४. अथानाधिर्मनोव्यथारहितः नरवरो नरश्रेष्ठः । रवेण धनुष्टंकारेण । [ सिंहनादेन—चा० सु० ] । रोषिताः केसरिणः सिंहा येन स राजा । कनकमिव पिङ्गः पिशङ्गो यस्तडिदेव गुणो मौर्वी तेन संयुतं संगतं त्रिदशायुधमिन्द्रचापं नभस्यो भाद्रपदमास इव । [ इति श्लेषः—हे० ] । " स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः " इत्यमरः । अधिज्यमधिगतमौर्वीकं धनुरुपाददे जग्राह ।

---

52. There the dryads with their bodies entered into slender creepers, with their function of sight transferred to bees, saw on the path, that beautiful-eyed king who, by his just rule, gave happiness to the people of Kos'ala.

53. The king then entered a forest which was already occupied by persons who carried with them nets and packs of dogs, which was cleared of forest-conflagration and robbers, in which the ground was made solid for horses, which had many pools of water and which was full of antelopes, birds and the Gayals ( or the yaks ).

54. Then that excellent king, free from any anxiety took up his strung bow whose twangs made the lions ferocious, as the month of Bhadra-pada takes up the weapon of the thrice-ten gods ( i. e. the rainbow of Indra ) set with the string of lightning as yellow as gold.

---

52. B. C. E. with He. and Va., तरुलता° for तनुलता°. E. reads जयनंदित for नयनंदित.

53. B. and Su., श्वगुण° C. E. with He. and Va., श्वगुणि°. for श्वगणि° D. E. प्रथमाश्रितं for प्रथमास्थितं.

54. B. C. with Su. and Vija., °संगतं for °संयुतं.

तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणीगमनं पुरस्तात् ।
आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णसारम् ॥ ५५ ॥
तत्प्रार्थितं जवनवाजिगतेन राज्ञा तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातैर्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ५६ ॥
लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी बाणं कृपामृदुमनाः प्रतिसंजहार ॥ ५७॥

५५. स्तनप्रणयिभिः स्तनपायिभिरेणशावैर्हरिणशिशुभिः । [ स्तने प्रणयः स्नेहो दुग्धपानार्थं येषां तै- षा० ] । " पृथुकः शावकः शिशुः" इत्यमरः । व्याहन्यमानं तद्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्र- तिषिध्यमानं हरिणीनां गमनं गतिर्यस्य तत् । कुशा गर्भे येषां तानि मुखानि यस्य तत्कुशगर्भमुखम् । ( " शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा " इत्येवं समार्थः श्लोकांशः ) । तस्य यूथस्याग्रसरः पुरःसरो गर्वितो दृप्तश्च कृष्णसारो यस्य तत् । [ इति जात्योक्तिः । कृष्णसार इति दन्त्यमध्यं पठन्ति तत्र । कृष्णेन शारः शबल इति क्षीरस्वामी । " शारः शबलवातयोः " इति विश्वः । तथा व्यवस्था तालव्येषु शब्दभेदप्रकाशे । " शौरिर्मुरारौ शिव एव शर्वः शूरः समर्थे झष एव शालः । शमः प्रशान्तौ शकलं च खण्ड शकृत्पुरीषे शबले च शारः " इति–हे० ] । मृगाणां यूथं कुलम् । " सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् " इत्यमरः । तस्य दशरथस्य पुरस्तादग्र आविर्बभूव । वसन्ततिलकं वृत्तम् । ( " अस्यान्ति- कमायान्ती । शिशुना स्तनपायिना मृगी रुद्धा । तामयमनन्यदृष्टिः । भग्नग्रीवो विलोकयति " इत्येवं समार्थः श्लोकांशः ) ।

५६. जवनो जवशीलः । [ इति मृगानुसारणे शक्तिः । अतिशीघ्रवाहगतिविशेषश्च । तथा च वसन्त- राजः " हीनाधिकांगं क्षुधितां विनीतैरनाशुगव्याधितबालवृद्धैः । यानैर्न यायात् गमनानभिज्ञैस्तथाखरैर्गोम- हिषोष्ट्रकैश्च " इति–हे० ] । " जुचंक्रम्य—" इत्यादिना युच्प्रत्ययः । " तरस्वी त्वरितो वेगी प्रजवी जवनो जवः " इत्यमरः । तं वाजिनमश्वं गतेनारूढेन । तूणीषुधिः । " बह्वादिभ्यश्च " इति स्त्रियां ङीष् । तस्या मुखाद्विवराद्धृतशरेण राज्ञा प्रार्थितमभियातम् । " याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः " इति केशवः । अत एव विशीर्णा ( भग्ना ) पङ्क्तिः संघोभावो यस्य तत् । मृगयूथम् । कर्तृ । आ- र्द्रैर्भयादश्रुसिक्तैराकुला भयचकिता ये दृष्टिपातास्तैः । ( भयचकितनेत्रप्रसरैः इत्यर्थः ) । वातेरितोत्पलदल- प्रकरैः पवनकम्पितेन्दीवरदलवृन्दैरिव । वनं श्यामीचकार ।

५७. हरिरिन्द्रो विष्णुर्वा । तस्येव प्रभावः सामर्थ्यं यस्य स तथोक्तः । धन्वी ( धनुरस्यास्तीति ) ध-

55. Before him appeared a herd of deer the motion of hinds in which was now and then impeded by the fawns eager to suck their udders, with mouths having Kus'a-grass in them, and at the head of which was a proud black-antelope.

56. Pursued by the king who rode on a fleet horse and who had drawn an arrow out of the mouth of his quiver, that herd of the deer the lines of which were now dispersed over the plain, blackened the forest with the casting of their frightened eyes wet with tears, as if with clusters of petals of blue-lotuses scattered by the breeze.

57. That skilful bowman resembling Hari ( Indra or Vishnu ) in might, having seen the mate of the antelope that was aimed at intervening between its body ( and himself ), being softened ( in mind ) with compassion by reason of his being himself a lover, withdrew his arrow though drawn to the ear.

55. B. C. D. with He. कृष्णशारः for कृष्णसारः.

56. B. C. E. with He. Châ. Din. Va. Su. Dhar. and Vija., अस्रैः for. आर्द्रैः; He also notices the reading आर्द्रैः.

तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः ॥
त्रासातिमात्रचटुलैः स्मरयत्सु नेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥
उत्तस्थुषः शिशिरपल्वलपङ्कमध्यान्मुस्ताप्ररोहकवलावयवानुकीर्णम् ।
जग्राह स द्रुतवराहकुलस्य मार्गं सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ ५९ ॥
तं वाहनादवनतोत्तरकायमीषद्विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः ॥
नात्मानमस्य विविदुः सहसा वराहा वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६० ॥

नुष्मान्स नृपः । लक्ष्यीकृतस्य वेद्धुमिष्टस्य । ( शरव्यतां नीतस्येत्यर्थः ) । हरिणस्य स्वप्रेयसो देहं व्यवधायानुरागादन्तर्धाय स्थिताम् । सह चरतीति सहचरी । पचादिषु चरतेष्टित्करणान्ङीप् । यथाह वामनः—"अनुचरीति चरेष्टित्वात्" इति । तां सहचरीं हरिणीं प्रेक्ष्य कामितया स्वयं कामुकत्वात् । कृपामृदुमनाः करुणार्द्रचित्तः सन् । आकर्णकृष्टमपि । दुष्प्रतिसंहरमपीत्यर्थः । बाणं ( शरं ) प्रतिसंजहार । नैपुण्यादित्यर्थः । नैपुण्यं तु धन्वीत्यनेन गम्यते ।

५८. त्रासाद्भयादतिमात्रचटुलैरत्यन्तचञ्चलैः नेत्रैः प्रौढप्रियानयनविभ्रमचेष्टितानि प्रगल्भकान्ताविलोचनविलासव्यापारान्सादृश्यात्स्मरयत्सु । अपरेष्वपि मृगेषु शरान्मुमुक्षोर्मोक्तुमिच्छोस्तस्य नृपस्य निबिडो दृढोऽपि मुष्टिः कर्णान्तमेत्य प्राप्य बिभिदे । स्वयमेव भिद्यते स्म । भिदेः कर्मकर्तरि लिट् । कामिनस्तस्य प्रियाविभ्रमस्मृतिजनितकृपातिरेकान्मुष्टिभेदः । न त्वनैपुण्यादिति तात्पर्यार्थः ।

५९. स नृपः । मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कवला ग्रासाः । तेषामवयवैः श्रमाविवृतमुखभ्रंशिभिः शकलैरनुकीर्णं व्याप्तम् । [ क्रोडा हि मुस्ताप्रियाः । तथाभिज्ञानशाकुन्तले । " गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं । छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतां । विश्रब्धैः क्रियतां वराहततिभिर्मुस्ताः क्षतिः पल्वले । विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः " इति—हे० । पंकावगाहनं मुस्ताभक्षणं च दंष्ट्रिणां जातिस्वभावः—चा० सु० ] ! आयताभिर्दीर्घाभिरार्द्रपदपङ्क्तिभिः । ( आर्द्रचरणमुद्राप्रकरैः ) । सुव्यक्तम् । शिशिरपल्वलपङ्कमध्यात् ( शिशिरः शीतश्चासौ पल्वलपङ्कश्च पल्वलकर्दमश्च तस्य मध्यात् ) उत्तस्थुष उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस्य मार्गं ( पन्थानं ) जग्राहानुससार । [ जिघांसया तदीयपदवीमनुययावित्यर्थः । ते हि शूकराः पंके आसते । तथा प्रागुक्तं "सपल्वलोत्तीर्णवराहयूथान्" इति—हे० ] ।

६० वराहाः । वाहनादश्वादीषदवनतोत्तरकायं किंचिदानतपूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् । उद्धृ-

58. Though desirous of levelling darts at other antelopes also, his clenching fist though firm, having brought to the end of the ear, became loose, because their eyes excessively trembling through fear put him in mind of the workings of the sportive plays of the eyes of his youthful loved-companions.

59. Then that king took the way of a herd of wild--boars which had previously run away from the midst of the cold mire in the ponds,--the way, which had been strewn with the bits of the mouthfuls of मुस्ता blades, and hence clearly indicated the long line of their wet foot--prints.

60. The wild boars with bristles erect wished to strike him in return when he was piercing them

57. D. and Va., कायं for देहं.

58. A. B. D. E. with He. Va. Chà. Din. Su. Dhar. and Vija., स्मरतः सुनेत्रैः for स्मरयत्सु नेत्रैः one of the Mss. of Hemadri comments also on the reading given in our text.

59. A. D. सपदि° for शिशिर°. A. with He. Dhar. and Vija. मस्ताप्ररोह°, D. with Chà. Din. Va. and Su.; गुञ्जाप्ररोह°, C. गुन्द्राप्ररोह°, B. E. गुन्द्राप्ररोहकवलावयवावकीर्णं.

60. D. ते for तं.; B. C. E. with He. Chà. Din. Va, Su. Dhar. and Vija., उद्धतसटाः for उद्धृतसटाः.

**तेनाभिघातरभसस्य विकृष्य पत्त्री वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।**
**निर्भिद्य विग्रहमशोणितलिप्तपुंखस्तं पातयां प्रथममास पपात पश्चात् ॥ ६१ ॥**

ससटा ऊर्ध्वकेसराः । "सटा जटाकेसरयोः" इति केशवः । प्रतिहन्तुमीषुः प्रतिहर्तुमिच्छन्‍ । अस्य नृपस्येषुभिः (बाणैः) सहसा [ झटिति । "अतर्किते तु सहसा"–इत्यमरः इ० ] । जघनानामाश्रयेष्ववष्टम्भेषु वृक्षेषु विद्धम् ( स्यूतं ) आत्मानं न विविदुः (नाज्ञासिषुः ) । [शूकरा हि तरुषु जघनं घर्षयन्ति–चा०] । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ।

६१. अभिघाते रभस औत्सुक्यं यस्य तस्त । अभिहन्तुमुद्यतस्येत्यर्थः । वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्याकृष्य मुक्तः पत्त्री शरो विग्रहं महिषदेहं निर्भिद्य विदार्य । शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः सन्‍ । तं महिषं प्रथमं पातयामास । स्वयं पश्चात्पपात । "कृञ्चानुप्रयुज्यते लिटि" इत्यत्रानुशब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात्‍ । "पातयां प्रथममास" इत्यपप्रयोग इति पाणिनीयाः । यथाह वार्तिककारः-"विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च" इति । [पातयामित्यत्र । "कास्प्रत्ययादाममन्त्रे लिटि" इति आम् । "कृञ्चानुप्रयुज्यते लिटि" इत्यत्र आम् प्रत्ययस्यैव पश्चात्कृञनुप्रयुज्यते इत्यवधारणत्वमिहाश्रितं । तेन व्यवधाने प्रयोगं निराकरोत्‍ । "न हि व्यवधाने कृञनुप्रयुज्यमानः आमः प्रत्ययस्यैवानुप्रयुक्तो भवति । यथैवं कृभ्वस्तयः क्रियासामान्यवाचकास्तथा विद्यातिरपीति तस्यानुप्रयोगः स्यात्‍ । तस्मात्तन्निवृत्त्यर्थमिदमारब्धव्यम् । व्यवहितप्रयोगनिवृत्त्यर्थं वारब्धव्यम् । याचयां देवदत्तश्चकारेत्यत्र मा भूदिति । व्यवहितनिवृत्तिस्तु अवधारणाल्लभ्यते । अवधारणं तु चकारस्यावधारणार्थत्वात्‍ । विपर्ययनिवृत्त्यर्थं वारब्धव्यम् । विपर्ययस्त्वनोः पश्चादर्थत्वाल्लभ्यते" इति न्यासकृत्‍ । कालिदासश्चेच्छति व्यवधानं । यथात्र त्रयोदशे सर्गे । "प्रभ्रंशयां यो नहुषं चकार" । षोडशे सर्गे च । "संयोजयां विधिवदास समेतबन्धुः" इति । सारस्वतटीकायां कासामित्यामन्तमव्ययं । "कायन्तश्च" इत्यतामन्तमव्ययमित्युक्तत्वात्‍ । पृथक्पदाश्चक्रे इति त्वनुप्रयोगः । तेन व्यवधानेऽपि प्रयोगो घटते । "यस्य येनान्वययोग्यता तस्य तेन दूरस्थेनापि भवति" इति न्यायात्‍ । ततः प्रभ्रंशयां यो नहुषं चकारेत्यादि न विरुध्यते । केचित्तु पातं यातीति पातयाः तं पातयां विग्रहं आस चिक्षेप । असु क्षेपणे । पातयाः सोमपावत्‍ । "आतो मनिन्क्वनिब्वनिपश्च" इति चकाराद्विजामन्तः–इ० । "कृञ्चानुप्रयुज्यते लिटि" इत्यत्र अनुशब्दस्य । व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात्‍ । प्रभ्रंशयां यो नहुषं चकार, पातयां प्रथममास, संयोजयां विधिवदास, ईक्षाम्प्रचक्रुरित्यादयः अपप्रयोगा इति पाणिनीयाः । यथाह वार्तिककारः । "विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थश्च" इति । "भ्वसकन्वाम्" इति सूत्रे आम इति पञ्चम्यैवेष्टसिद्धौ अनुग्रहणं उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापनार्थमिति मुग्धबोधटीकाकृता रामानन्दाचार्येणव्याख्यातम् । क्रमदीश्वरेण तु "सप्रादिकृभ्वस्तिभिश्च" इति सूत्रं कृतम्—ध० । पातयां प्रथममासेति व्यवहितोऽनुप्रयोगः कविप्रमादः । यद्वा । पातं यातीति पातयाश्छान्दसो विच्‍ । तं पातयां । पातं गच्छन्तं महिषं शरः आस प्राप्तवान्‍ । "असगतिदीप्त्यादानेषु" । यद्वा चिक्षेप । "अध्वर्युक्रतुरनपुंसकं" इति यजुरिति वाच्ये "क्याच्छन्दसि" इत्युप्रत्ययान्तेनाध्वर्युग्रहणेनाज्ञापितभाषायामपि छान्दसाः प्रयोगाः प्रयुज्यन्ते इति । यद्यप्येवं केचन समादधते तथापि कवेरियं रीतिस्तु न भवति । प्रथममित्यस्य क्रियाविशेषणत्वान्न व्यवधायकत्वमिति । यथोक्तं प्रचक्रुरिति भट्टिकाव्यं । सत्यमुपसर्गेऽव्यवधानमिति सुबोधकारः

with the fore-part of his body a little bent downwards from the horse, but they did not know themselves (so) suddenly transfixed by his arrows to the trees against which their loins were leaning.

61. The king drew and shot an arrow in the hollow of the eye of a wild bison that was about to make a furious rush on him,—the arrow which having pierced through its body with its feathers unsoiled with blood, first threw the animal down and then dropped itself.

---

61. B. E. with He. Va. and Din. °लिप्तशल्यः for °लिप्तपुङ्खः.

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषामत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२ ॥
व्याघ्रानभीरभिमुखोत्पतितान्गुहाभ्यः फुल्लासनाग्रविटपानिव वायुरुग्णान् ।
शिक्षाविशेषलघुहस्ततया निमेषात्तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ ६३ ॥
निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दे मृगेषु ॥ ६४ ॥

नयमंगलायां । उह्यत इत्युक्षा कर्मणि घञिराचा तेन व्याख्यातं । महाभाष्येऽपि व्यवहितप्रयोगनिरासार्थं तादित्युक्तत्वात् असावसाधुरेव वन्यस्येति दिगादित्वाद्भवार्थे यत् साध्वर्थे वा । नंद्यादित्वाद्भवार्थे वा नेयस्येति स्यात्–चा० ] ।

६२. नृपतिर्निशितैः ( तीक्ष्णैः ) क्षुरप्रैः शरविशेषैः । [ चंद्रार्धबाणैः । " इषुकाण्डं क्षुरप्रं च " इति धनंजयः । " शफे खुरः कवर्गीयः क्षकारश्च क्षुरप्रकं । नापितस्योपकरणे कषसंयोग इष्यते " इति शब्दभेदप्रकाशे–हे० ] । खड्गान्खड्गाख्यान्मृगान् । " गण्डके खड्गखड्गिनी " इत्यमरः । प्रायो बाहुल्येन । [ प्रायः उत्प्रेक्षायां वा । तथा काव्यादर्शे । " मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः "–हे० ] । विषाणपरिमोक्षेण शृङ्गभङ्गेन लघून्यगुरूण्युत्तमाङ्गानि शिरांसि येषां तांश्चकार । न त्ववधीदित्यर्थः । कुतः । दृप्तविनयाधिकृतो दुष्टनिग्रहनियुक्तः स राजा परेषां प्रतिकूलानामत्युच्छ्रितमुन्नतं शृङ्गं विषाणं प्राधान्यं च । " शृङ्गं प्राधान्यसान्वोश्च " इत्यमरः । न ममृषे न सेहे । दीर्घमायुर्जीवितकालम् । " आयुर्जीवितकालो ना " इत्यमरः । न ममृष इति न । किं तु ममृष एवेत्यर्थः [ महान्तस्तु शत्रूणां जीवनैष्यालवो न किन्तून्नतत्वं न सहन्ते–चा० ] ।

६३. अभीर्निर्भीकः स धन्वी गुहाभ्यः ( पर्वतगुम्फाभ्यः ) अभिमुखमुत्पतितान् ( सन्मुखमागतान् ) वायुना ( वातेन ) रुग्णान् भग्नान् । फुल्ला विकसिताः । " अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः " । इति निष्ठातकारस्य लत्वनिपातः । येऽसनस्य सर्जवृक्षस्य । " सर्जकासनबन्धूकपुष्पप्रियकजीवकाः " इत्यमरः । अग्रविटपाः ( अग्रशाखाः ) तानिव स्थितान् । इषुधिभूतानित्यर्थः । व्याघ्राणां चित्ररूपत्वादुपमाने फुल्लविशेषणम् । शरैः पूरितानि वक्त्ररन्ध्राणि येषां तान्व्याघ्रान् । शिक्षाविशेषेणाभ्यासातिशयेन लघुहस्ततया क्षिप्रहस्ततया निमेषात् ( क्षणात् ) तूणीचकार । तूर्णं शरैः पूरितवानित्यर्थः । [ शरैः पूरितमुखाः पतिता व्याघ्रजीवाः प्रफुल्लितबीजकवृक्षस्य शाखाग्रा इव शोभन्ते स्म–सु० ] ।

६४. कुञ्जेषु लीनान् । " निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे " इत्यमरः । सिंहाञ्जिघांसुर्हन्तु

62. The King by means of his sharp arrows made the rhinoceroses mostly lighter in the head by relieving them of ( the burden of ) their horns, for engaged as he was in subduing the wicked, he could not endure the supremacy ( or towering horns ) of his enemies, but it is not that he could not endure their long life.

63. By reason of the activity of hand acquired by long practice the fearless King made the tigers, as they rushed against him out of caves, the quivers ( for his arrows ) by filling in a moment the hollows of their mouths with arrows, like the fore-branches of the flowering Asana trees broken down by the wind.

64. Desirous of killing the lions lurking in their arbour-caves, the King chafed them by

---

62. B. C. D. E. with Malli. He. Chà. Din. Va. Su. Dhar. and Vija., °परिमोच° for °परिमोक्ष°; B. C. E. and Va., अभ्युच्छ्रितं for अत्युच्छ्रितं.; D. with Chà. Din. Dhar. and Vija., च for तु.

63. B. D. वायुभग्नान् for वायुरुग्णान्.

64. B. C. E. with He. Va. and Su., मृगाणां for मृगेषु. So also Malli., who says, ' मृगाणामिति पाठे ' समासे गुणभूतत्वाद्राजशब्देन सम्बंधो दुर्घटः.

**तान्हत्वा गजकुलबद्धतीव्रवैरान्काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।**
**आत्मानं रणकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५ ॥**
**चमरान् परितः प्रवर्तिताश्वः क्वचिदाकर्णविकृष्टभल्लवर्षी ।**
**नृपतीनिव तान्वियोज्य सद्यः सितबालव्यजनैर्जगाम शान्तिम् ॥ ६६ ॥**
**अपि तुरगसमीपादुत्पतन्तं मयूरं न स रुचिरकलापं बाणलक्ष्यीचकार ।**
**सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे रतिविगलितबन्धे केशपाशे प्रियायाः ॥ ६७॥**

मिच्छुः । निर्घातो व्योमोत्थित औत्पातिकः शब्दविशेषः । [ यदाह नारदीयसंहितायां । " वायुनाभिहतो वायुर्गगनात्पतितः क्षितौ । यदा दीप्तः खगरुतः सनिर्घातोऽतिदोषकृत् " इति–हे० ] । तद्वद्घोरैर्ज्यानिर्घोषैर्मौर्वीशब्दैः क्षोभयामास । अत्रोत्प्रेक्षते—तेषां सिंहानां संबन्धिनि वीर्येणोदग्र उन्नते मृगेषु विषये यो राजशब्दस्तस्मिन्नभ्यसूयापरोऽभून्नूनम् । अन्यथा कथमेतानन्विष्य हन्यादित्यर्थः । [ " नाभिषेको न संस्कारः ( सत्कारः ) सिंहस्य क्रियते मृगैः ( वने ) । विक्रमार्जितचित्तस्य (सत्त्वानां ) स्वयमेव मृगेन्द्रता " इति–हे०] । शालिनीवृत्तम्—" शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः " इति लक्षणात् ।

६५. काकुत्स्थो दशरथः । गजकुलेषु ( हस्तिसमूहेषु ) बद्धं तीव्रं वैरं यैस्तान् । कुटिलेषु नखाग्रेषु लग्ना मुक्ता गजकुम्भमौक्तिकानि [ करिकुम्भविदारणात् । करिकुम्भेषु हि मौक्तिकानि सन्ति । तथा रत्नपरीक्षायां । " करीन्द्रजीमूतवराहशंखमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां हि शुक्त्युद्भवमेव भूरि " इति–हे० ] । येषां तान्सिंहान्हत्वा । आत्मानं रणेषु कृतकर्मणां कृतोपकाराणां गजानामानृण्यमनृणत्वं मार्गणैः शरैः । " मार्गणो याचके शरे " इति विश्वः । [ " रोपः कलम्बशरमार्गणचित्रपुंखाः " इति हैमः–चा० ] । गतं प्राप्तवन्तमिवामंस्त मेने ।

६६. क्वचित् ( प्रदेशे ) चमरान् ( मृगविशेषान् । " चमरं चामरे प्राहुर्मञ्जरीमृगभेदयोः " इति विश्वः ) परितः । " अभितः परितः समया–" इत्यादिना द्वितीया । प्रवर्तिताश्वः प्रधाविताश्वः । आकर्णं विकृष्टान् भल्लानिषुविशेषान्वर्षतीति तथोक्तः स नृपः । नृपतीनिव । [ ते हि सितकेशव्यजनवन्तः–हे० ] । तांश्चमरान्सितवालव्यजनैः शुभ्रचामरैर्वियोज्य विरहय्य सद्यः ( शीघ्रं ) शान्तिं जगाम [ ययौ । पुच्छानि चेच्छेदेत्यर्थः–हे० ] । शूराणां परकीयमैश्वर्यमेवासह्यम् । न तु जीवितमिति भावः । औपच्छन्दसिकं वृत्तम् ।

६७. स नृपस्तुरगसमीपात् ( अश्वपार्श्वात् ) उत्पतन्तमपि ( उड्डीयमानमपि ) । सुप्रहारमपीत्यर्थः । रुचिरकलापं भासुरबर्हम् । मह्यामतिशयेन रौतीति मयूरो बर्ही । पृषोदरादित्वात्साधुः । तं चित्रेण माल्ये-

---

means of the twangs of his bow-string, sounding as terrible as the noise of contending vapours in the sky. ( In doing so ) doubtless he was actuated by jealousy of their title of king of beasts, dignified by their supreme prowess.

65. Having killed them who bore an implacable animosity towards the race of elephants and who had pearls stuck to the fore points of their crooked claws, the descendant of Kakutstha considered himself to have paid off with his arrows the debt of elephants that assisted him in battles.

66. In some places, spurring his horse round the *Chamara yaks* and showering on them the भल्ल arrows drawn to the ear, the king दशरथ, depriving them of their white chowry-tails like other kings, immediately became contented.

67. Having at that moment been put in mind of the braided hair of his beloved queen,

---

66. B. C. E. with He. Chà. Din. Dhar. Vija. and Va., विवर्तिताश्वः for प्रवर्तिताश्वः; C. °निकृष्ट°, D. °निशक्त° for विकृष्ट; B. D. Su. and Va., have नृपतीनिव तान्निनाय शांतिं सितबालव्यजनैर्वियोज्य सद्यः for the last two Pàdas.

तस्य कर्कशविहारसंभवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८ ॥
इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ ६९ ॥
स ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयांबभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७० ॥

नानुकीर्णे ( व्याप्ते ) रतौ ( सुरते संभोगावसरे ) विगलितबन्धे ( विगलितश्छिथिलीभूतो बन्धो रचना यस्य तादृशे ) प्रियायाः ( स्वकामिन्याः ) केशपाशे सपदि ( शीघ्रं ) गतमनस्कः ( गतं मनो यस्य सः ) प्रवृत्तचित्तः । [ प्रियासम्बंधानुकारेऽपि प्रिय एव–हे० ] । " उरःप्रभृतिभ्यः कप् " इति कप्प्रत्ययः । न बाणलक्ष्यीचकार । न प्रजहारेत्यर्थः । [ स्त्रीकेशपाशे मनो गतं अतः मयूरं नृपः न जघानेति भावः–सु० ] ।

६८. कर्कशविहारादतिव्यायामात्संभवो यस्य तम् । आनने ( मुखे ) विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदम् । सतुषारशीकरः शिशिराम्बुकणसहितः ( अत एव ) भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन सः । [ इति मांद्यसौगन्ध्योक्तिः–चा० सु० ] । वनानिलः ( अरण्यपवनः ) आचचाम ( अशोषयत् ) । जहारेत्यर्थः । रथोद्धता वृत्तमेतत् ।

६९. इति पूर्वोक्तप्रकारेणात्मनो विस्मृतमन्यत्करणीयं कार्यं येन तम् । विस्मृतात्मकार्यान्तरमित्यर्थः । सचिवैरवलम्बिता धृता धूः ( कार्यभारः ) यस्य तम् । [ एतेन राज्ये विपक्षाभाव उक्तः–हे० ] । " ऋक्पूरब्धूः पथामानक्षे " इति समासान्तोऽच्प्रत्ययः । अनुबन्धसेवया संततसेवया । [ अत्यन्ताभ्यासेन–हे० ] । परिवृद्धो रागो यस्य तं धराधिपम् । मृग्यन्ते यस्यां मृगा इति मृगया । ( " आखेटो मृगया स्त्रियां " इत्यमरः ) । " परिचर्यापरिसर्यामृगयाटाट्यादीनामुपसंख्यानम् " इति शप्रत्ययान्तो निपातः । चतुरा विदग्धा कामिनीव । जहाराचकर्ष । [ व्यसनेषु हि सेवापरैव उपगीयते । चतुरालक्षणं तु रसाकरे । " स्निग्धैरीक्षित एव दृष्टवनितैः कोकाशिताकुञ्चितैः । लज्जाकेकरविस्मितैर्मुकुलितैरालोकनैर्नायकं । प्रौढैर्नागरिकं वयोभिरखिलैराभाषते पल्लवं । दृष्टं मोहनदक्षिणैश्च चतुरावक्त्रादिभिश्चापरान् " ( ? )–हे० । " यस्या रतिगुणाकृष्टः प्रियः पार्श्वं न मुञ्चति । विचित्राभरणासक्ता स्वाधीनपतिका स्मृता " इति रुद्रटः–चा० ] । " न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते " इति भावः । सुमंगलीवृत्तम् । [ सुमंगला नाम वृत्तं–चा० सु० ] । [ यथानुबन्धसेवया रमण्यामुपरिरागो वर्द्धते तथा नृपस्य नित्यं गमनात् मृगयायां रागो वार्द्धितः–सु ] ।

७०. स नरपति. । ललितानि ( मनोहराणि ) कुसमानि प्रवालानि पल्लवानि शय्या ( शयनीयं ) य-

interspersed with variegated flowers and the knot of which was made loose in amatory sports, the king did not aim his arrow at the peacock though hopping about his horse, and wearing a beautiful plumage.

68. Charged with dew drops the forest-breeze, which had opened the folds of the sprouting leaves, kissed away the sweat which was produced by his hard exercise and which collected in drops on his face.

69. Hunting, like an artful damsel, thus captivated that Lord of the earth, forgetful of his other regal duties, who had entrusted the burden of administration of his kingdom to his ministers and whose love ( or passion for hunting ) had increased by its constant application.

70. Somewhere, without any attendants, did that king pass away the night furnished with

68. C. E. with He. Va. and Din., सतुषारशीतलः, D. सुतुषारशीतलः for सतुषारशीकरः.

69. D. °वाविलम्बित° for °वावलम्बित°; A. B. D. with Malli. He. Châ. Din. and Va., नराधिपं for धराधिपं.

70. C. E. with Châ. Din. Su. Dhar. and Vija., मृदुललित° for स ललित°.

उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन्विहगविकूजितबन्दिमङ्गलानि ॥ ७१ ॥
अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरंगमेण ॥ ७२ ॥
कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ ७३ ॥
नृपतेः प्रतिषिद्धमेव तत्कृतवान्पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥

स्यां ताम् । ज्वलिताभिर्महौषधिभिरेव दीपिकाभिः सनाथाम् ( अलंकृतां ) । तत्प्रधानामित्यर्थः । त्रियामां ( त्रयो यामाः यस्याः तां तथोक्तां ) रात्रिं क्वचित् ( प्रदेशे ) असमेतपरिच्छदः ( असमेतः अननुगतः परिच्छदः परीवारः यस्य सः ) । परिहृतपरिजनः सन्नित्यर्थः । अतिवाहयां बभूव गमयामास । पुष्पिताग्रावृत्तम् ।

७१. उषसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैर्गजयूथानां ( हस्तिमुख्यसमूहानां ) कर्णैरेव तालैर्वाद्यप्रभेदैर्विनीतनिद्रो विगतनिद्रः स नृपस्तत्र वने मधुराणि विहगानां विहंगानां विकूजितान्येव बन्दिनां ( वैतालिकानां ) मङ्गलानि मङ्गलगीतानि शृण्वन्नरमत ( चिक्रीड ) ।

७२. अथ जातु कदाचित् । [ " कदाचिज्जातु सार्धं तु साकं सत्रा समं सह । आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा " इत्यमरः–हे० ] । रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गो विपिने वने पार्श्वचरैः ( अनुचरैः ) अलक्ष्यमाणः । तुरगवेगादित्यर्थः । श्रमेण फेनमुचा । सफेनं स्विद्यतेत्यर्थः । तुरंगमेण तपस्विभिर्गाढामवगाढां सेवितां । [ मुनिजनप्रविष्टामिति वक्ष्यमाणं ऋषिसुतकथाबीजं–हे० चा० ] । तमसां नाम नदीं सरितं प्राप । [ " स तु तीरं समासाद्य तमसाया मुनिस्तदा " इति बालरामायणे–हे० ] । [ औपच्छन्दसिका वृत्तं–चा० ] ।

७३. तस्यास्तमसाया अम्भसि ( जले ) कुम्भपूरणेन भवतीति भवः उत्पन्नः । पचाद्यच् । पटुर्मधुरः । उच्चैर्गम्भीरो निनदो ध्वनिरुच्चचारोदियाय । तत्र निनदे स नृपः । द्विरदबृंहितं शङ्कत इति द्विरदबृंहितशङ्की सन् । [ " बृंहितं करिगर्जितं " इत्यमरः । " गजचीत्कृतबृंहितं " इत्यमरशेषे–हे० ] । शब्देन शब्दानुसारेण पततीति शब्दपातिनमिषुं ( शब्दवेधिनं बाणं ) विससर्ज । स्वागता वृत्तम् ।

७४. तत्कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धमेव निषिद्धमेव यदेतत्कर्म गजवधरूपं पङ्क्तिरथो दशरथो वि-

---

lights of luminous herbs of wonderful power, and with beddings of tender leaves and flowers.

71. Being roused at dawn from his slumbers by the flappings of the ears of an elephant-herd resembling the sound of loud-sounding drums, he amused himself there listening to the agreeable notes of birds ( supplying the place of ) the auspicious verses of bards.

72. Then once upon a time taking the path of a deer in the forest unobserved by his side-walkers, he got to the river Tamasâ crowded by ascetics, with his horse foaming through fatigue.

73. From the waters of that river arose a deep agreeable sound produced by the filling of a jar; there ( in the direction of that sound ) he discharged an arrow that fled with a sound, suspecting it to be the roar of an elephant.

74. What Das'aratha did transgressing the rule was indeed strictly forbidden to a king; for even

---

71. B. C. च for स. also He. and Va., the former चशब्दोऽसमंतपरिच्छेदानुवृत्त्यर्थः; D. E. with Châ. Din. Su. and Vija., विधूतनिद्रः for विनीतनिद्रः; B. C. E. with He. Va. Châ. Din. Su. Dhar. and Vija., मधुरस्वराणि for मधुराणि तत्र.

74. B. D. E. with He. Châ. Din Va. Su. Dhar. and Vija., यत्-तत् for तत्यत्; B. C. with Din. and Châ., विशंक्य for विलंघ्य.

**हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन्वेतसगूढं प्रभवं सः ।**
**शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं तापादन्तःशल्य इवासीत्क्षितिपोऽपि ॥७५॥**
**तेनावतीर्य तुरगात्प्रथितान्वयेन पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।**
**तस्मै द्विजेतरतपस्विसुतं स्खलद्भिरात्मानमक्षरपदैः कथयांबभूव ॥ ७६ ॥**

लङ्घ्य ( अविचार्य ) । " लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् " [ इति चाक्षुषः–हे० ] । इत्येवं शास्त्रमुल्लङ्घ्य कृतवान् । ननु विदुषस्तस्य कथमीदृग्विचेष्टितमत आह—अपथ इति । श्रुतवन्तोऽपि विद्वांसोऽपि रजोनिमीलिता रजोगुणावृताः सन्तः । न पन्था इत्यपथम् । " पथो विभाषा " इति वा समासान्तः । " अपथं नपुंसकम् " इति नपुंसकत्वम् । " अपन्थास्त्वपथं तुल्यम् " इत्यमरः । तस्मिन्नपथेऽमार्गे पदं ( चरणं ) अर्पयन्ति हि निक्षिपन्ति हि । प्रवर्तन्त इत्यर्थः । वैतालीयं वृत्तम् ।

७५. हेत्यार्तौ । तातो जनकः । " हा विषादशुगार्तिषु " इति । " तातस्तु जनकः पिता " इति चामरः । हा तातेति । [ अत्र न्यासकृत् " अपिशब्दो विकल्पार्थः । अपिशब्दो न दृश्यते " तेन हा पितः हा मातः इत्यादि सिद्धं । हे तातेति । " उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते " इत्यभितः परितः इत्यादावपिशब्दस्य विकल्पार्थत्वात् द्वितीयाभावः । तथा हि । " विभूषणं किं कुचमण्डलानां कीदृश्युमा चान्द्रमसी कुतो भा । सीता कथं रौति दशास्यभीत्या हा राम हा देवर तात मातः " । तातेत्यत्र " दूराद्धूते च " इति प्लुतत्वेऽप्यप्लुतवदुपस्थिते इत्यतिदेशात् सुश्लोका इतिवत् प्रकृतिभावो न । तथा श्रीभागवते । " पुत्रेति तन्मयतया तरवोऽभिनेदुः " इति । उपस्थितो नाम अवैदिकइतिकारः–हे० ] । क्रन्दितं क्रोशनमाकर्ण्य ( श्रुत्वा ) । विषण्णो भग्नोत्साहः सन् । तस्य क्रन्दितस्य वेतसैः ( तरुभेदैः ) गूढं छन्नम् । प्रभवत्यस्मादिति प्रभवः कारणम् । तमन्विष्यन् [ गवेषयन् । " गवेषस्तत्त्वमार्गणे " इति कामधेनुः–हे० ] । शल्येन शरेण प्रोतं स्यूतम् । " शल्यं शङ्कौ शरे वंशकम्बिकायां च तोमरे " इति विश्वः । सकुम्भं ( घटसहितं ) मुनिपुत्रं प्रेक्ष्य ( दृष्ट्वा ) स क्षितिपोऽपि तापाद्दुःखादन्तःशल्यं यस्य सोऽन्तःशल्यः इवासीत् । मत्तमयूरं वृत्तम् ।

७६. प्रथितान्वयेन प्रख्यातवंशेन । एतेन पापभीरुत्वं सूचितम् । तेन राज्ञा तुरगात् ( अश्वात् ) अवतीर्य पृष्टान्वयो ब्रह्महत्याशङ्कया पृष्टकुलः । जलकुम्भनिषण्णदेहः ( जलसहिते कुंभे घटे निषण्णः पतितः देहो यस्य ) स मुनिपुत्रस्तस्मै राज्ञे स्खलद्भिः । अशक्तिवशादर्धोच्चारितैरित्यर्थः । अक्षरप्रायैः पदैरक्षरपदैरात्मनं द्विजेतरश्चासौ तपस्विसुतश्च तं द्विजेतरतपस्विसुतं । [ ब्राह्मणक्षत्रियवैश्येतरतपस्विपुत्रं करणजातीयं श्रवणाख्यं–हे० चा० सु० ] । कथयांबभूव । न तावत्त्रैवर्णिक एवाहमस्मि किं तु करणः । [ " विप्रक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः " इति–हे० ] । " वैश्यात्तु करणः शूद्रायाम् " इति याज्ञवल्क्यः । [ " शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः " । " शूद्रायां करणो वैश्याद्विप्रास्वेष विधिः स्मृतः " इति–हे० ] । कुतो ब्रह्महत्येत्यर्थः । तथा च रामायणे—" ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न

---

learned men when blinded by passion step into a wrong path.

75. Immediately hearing a cry, " Oh father " being alarmed and seeking its cause concealed among the reeds, and finding there a son of a Muni pierced with his arrow, with a jar ( by his side ), the king also became like one with an arrow fixed in his heart from grief.

76. Being asked his race by the king of a celebrated lineage who had then got down from his horse, he, with his body resting on the water jar, declared himself in faltering syllables to be the son of an ascetic belonging to a caste other than the twice-born one.

---

75.C. with Malli.Su.and Vija., वेतसगूढप्रभवं for वेतसगूढं प्रभवं; D. वीक्ष्य for प्रेक्ष्य.
76. E. has स्व° for स; B. C. E. with Châ. Din. Su. and Vija., °सुतः for सुतं°. E. reads अक्षयपदैः for अक्षरपदैः.

तच्चोदितश्च तमनुद्धृतशल्यमेव पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्रमज्ञानतः स्वचरितं नृपतिः शशंस ॥ ७७ ॥
तौ दंपती बहु विलप्य शिशोः प्रहर्त्रा शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत्परासुरथ भूमिपतिं शशाप हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥ ७८ ॥
दिष्टान्तमाप्स्यति भवानपि पुत्रशोकादन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजंगं प्रोवाच कोशलपतिः प्रथमापराद्धः ॥ ७९ ॥

द्विजातिरहं राजन्मा भूत्ते मनसो व्यथा । शूद्रायामस्मि वैश्येन जातो जनपदाधिप " इति ( एतदेव हेमाद्रिचारित्रवर्द्धनी ) ।

७७. तच्चोदितस्तेन पुत्रेण चोदितः ( प्रेरितः ) पितृसमीपं प्रापयेत्युक्तः स नृपतिरनुद्धृतशल्यमनुत्पाटितशरमेव तं मुनिपुत्रम् । अवसन्नदृशोर्नष्टचक्षुषोः । अन्धयोरित्यर्थः । पित्रोर्मातापित्रोः । " पिता मात्रा " इत्येकशेषः । सकाशं समीपं निनाय । इदं च रामायणविरुद्धम् । तत्र—" अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ । अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया " इति नदीतीर एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात् । [ आर्षे तु नदीतीर एव शरोद्धरणान्मृत इत्युक्तं–हे० ] । तथागतं । [ तथावस्थां प्राप्तं–हे० ] । वेतसगूढम् । एकश्चासौ पुत्रश्चैकपुत्रस्तम् । एकग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम् । तं मुनिपुत्रमुपेत्य । [ उद्दिश्य–चा० सु० । ज्ञापयित्वा–व० ] । संनिकृष्टं गत्वा । [ उपेत्येति बाधितोक्तिः–हे० ] । अज्ञानतः करिभ्रान्त्या स्वचरितं स्वकृतं ताभ्यां मातापितृभ्याम् । क्रियाग्रहणाच्चतुर्थी । शशंस कथितवान् ।

७८. तौ जाया च पतिश्च दंपती । राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः । " दंपती जंपती जायापती भार्यापती च तौ " इत्यमरः । बहु विलप्य भूरि परिदेव्य । " विलापः परिदेवनम् " इत्यमरः । शिशोरुरस्तो वक्षसः । " पञ्चम्यास्तसिल् " । निखातं शल्यं शरं प्रहर्त्रा राज्ञोदहारयतामुद्धारयामासतुः । स शिशुः परासुर्गतप्राणोऽभूत् । अथ वृद्धो हस्तार्पितैः ( करपतितैः ) नयनवारिभिरेव ( अश्रुभिरेव ) शापदानस्य जलपूर्वकत्वात्तैरेव भूमिपतिं ( राजानं ) शशाप ।

७९. हे राजन् । भवानप्यन्त्ये वयसि अहमिव पुत्रशोकाद्दिष्टान्तं कालावसानम् । मरणमित्यर्थः । " दिष्टं दैवे च काले स्याद्दिष्टः " इति विश्वः । आप्स्यति प्राप्स्यति । इत्युक्तवन्तम् । आक्रान्तः पादाहतः पूर्वमाक्रान्तपूर्वः । सुप्सुपेति समासः । [ पूर्वं आक्रान्तः आक्रान्तपूर्वः । "राजदन्तादिषु परम्"–हे० ] । तम् ( तापसं ) । प्रथममपकृतमित्यर्थः । मुक्तविषमपकारात्पश्चादुत्सृष्टविषं भुजंगमिव ( सर्पमिव ) स्थितं तं वृद्धं प्रति प्रथमापराद्धः प्रथमापराधी । कर्तरि क्तः । इदं च सहने कारणमुक्तम् । कोशलपतिर्दशरथः शापदानात्पश्चाद्ध्येनं मुनिं प्रोवाच ( अवादीत् ) ।

77. And being urged by him the King carried him even with the arrow unextracted (from his bosom) to his parents who had lost their sight, and told them his deed as done through ignorance, with respect to (according to Mallinath,—after having gone up to him so as to bring him within the reach of his arrow) their only son in that condition (Malli.-concealed in the thicket).

78. That couple, having lamented bitterly, bade the murderer of their young son extract the infixed arrow from his bosom; this being done he became lifeless. Then the old man cursed that Lord of the earth with the very waters from his eyes gathered in his hands.

79. The Lord of the Kos'alas, who was the first to commit a sin thus addressed him who, like a snake that on being first trodden under foot emits poison, uttered the following imprecation,—'thou shalt also like myself meet a death in thy old age through grief for thy son.'

77. B. तेन for तद्., B. C. E. with Châ. He. Din. Va. Su. Dhar. and Vija., नोदितः for चोदितः ., D. सः for च. One of the Mss. of दर्पण reads चोदितः
79. B. C. E. with He. and Va., दिष्टयान्त° for दिष्टांत°., C. E. with He. Chá. Din. Va. Su. Dhar. and Vija., अंते for अंत्ये., D. मुक्तविषं for मुक्तविषं. So also noticed by He.; B. C. E. with He. Va. and Su.; प्रथमापराधः for प्रथमापराद्धः.

शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ॥ ८० ॥
इत्थं गते गतघृणः किमयं विधत्तां वध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान्हुताशनवतः स मुनिर्ययाचे पुत्रं परासुमनुगन्तुमनाः सदारः ॥ ८१ ॥
प्राप्तानुगः सपदि शासनमस्य राजा संपाद्य पातकविलुप्तधृतिर्निवृत्तः ।
अन्तर्निविष्टपदमात्मविनाशहेतुं शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः ॥ ८२ ॥

८०. अदृष्टा तनयाननपद्मशोभा ( पुत्रमुखकमलश्रीः ) येन तस्मिन्नपुत्रके मयि भगवता ( पूज्येन ) पातितः । वज्रमायत्वात्पातित इत्युक्तम् । अयं पुत्रशोकान्म्रियस्वेत्येवंरूपः शापोऽपि सानुग्रहः । वृद्धकुमारीवरन्यायेनेष्टावाप्तेरन्तरीयकत्वात्सोपकार एव । निग्राहकस्याप्यनुग्राहकत्वमर्थान्तरन्यासेनाह—कृष्यामिति । इन्धनैः काष्ठैरिद्धः प्रज्वलितो ज्वलनोऽग्निः कृष्यां कर्षणार्हाम् । " ऋदुपधाच्चाक्लृपि चृतः " इति क्यप् । क्षितिं दहन्नपि बीजप्ररोहाणां बीजाङ्कुराणां जननीमुत्पादनक्षमां करोति । [ शालिक्षेत्रभूमौ हि दाहं विना किंचिन्नोत्पद्यते इति कौंकणेषु प्रसिद्धिः—हे० चा० सु० ] ।

८१. इत्थंगते प्रवृत्ते सति । वसुधाधिपेन राज्ञा । गतघृणो निष्करुणः । हन्तृत्वान्निष्कृप इत्यर्थः । अत एव तव वध्यो वधार्होऽयं जनः ( मल्लक्षणो जनः ) । अयमिति राज्ञो निर्वेदादनादरेण स्वात्मनिर्देशः । किं विधत्तामित्यभिहित उक्तः । मया किं विधेयमिति विज्ञापित इत्यर्थः । [ " पुरुषवधे स्तेये भूम्यादाने चक्षुर्निरोधब्राह्मणस्य " इति आपस्तम्बवचनात् । ब्राह्मणस्यैवापकृष्टवर्णवधे ( वृद्धवधे ) वधनिषेधः इति वध्यस्तवेति—हे० ] । स मुनिः स दारः सभार्यः । ( " भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी " इत्यमरः ) । परासुं गतासुं पुत्रमनुगन्तुं मनो यस्य सोऽनुगन्तुमनाः सन् । " तुं काममनसोरपि " इति मकारलोपः । हुताशनवतः साग्नीनेधान्काष्ठानि ययाचे । ( नृपतिमिति शेषः ) । न चात्रात्मघातदोषः—" अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजलसंपातैर्मरणं प्रविधीयते " इत्युक्तेः ।

८२. प्राप्तानुगः प्राप्तानुचरो राजा सपद्यस्य मुनेः शासनं काष्ठसंभरणरूपं प्रागेकोऽपि संप्रति प्राप्तानुचरत्वात्संपाद्य पातकेन मुनिवधरूपेण विलुप्तधृतिर्नष्टोत्साहः सन् । ( नष्टमृगयाभिलाषः इत्यर्थः ) । अन्तर्निविष्टपदमन्तर्लब्धस्थानमात्मविनाशहेतुं शापम् । अम्बुराशिरौर्वं ज्वलनं वडवानलमिव । " और्वस्तु वाडवो वडवानलः " इत्यमरः । दधद्धृतवान्सन् । निवृत्तः वनादिति शेषः ।

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये मृगयावर्णनो नाम नवमः सर्गः ।

---

80. To me who have not yet seen the loveliness of a son's lotus-like face, even the curse itself inflicted by your divine self is attended with a blessing. Indeed fire inflamed by fuel makes the arable soil the producer of shoots from seed, though it burns ( the soil ).

81. So circumstanced the sage, being addressed by the Lord of the earth in the following words---" what shall this cruel man, who deserves death at thy hands, do for thee ? " begged for fuel kindled by fire wishing in company with his wife to follow his deceased son.

81. The King who ( by this time ) got his followers, having immediately executed his order, returned ( to his capital ) the peace of his mind being destroyed by the sinful act, carrying with him the curse,--the cause of his own destruction that had stepped into his heart, like the ocean bearing the Aurva fire.

---

80. D. E. अथ for अपि. D. हि भवता for भगवता ; D. कक्षां for कृष्यां; D. दहनः for ज्वलनः.

81. E. has इत्थंगते for इत्थंगते; B. C. E. अभिहिते for अभिहितः.

82. D. has " तदर्थमर्थज्ञगते गतत्रपः । किमेष ते वध्यजनोनुतिष्ठतु । स वह्निसंस्कारमयाचतात्मनः । सदारसूनोर्विदधे च तन्नृपः " । " समेयिवान्रघुवृषभोन्यसैनिकैः । स्वमंदिरं शिथिलधृतिर्निवृत्तः । मनोगतं गुरुमृषिशापमुद्वहन् क्षयानलं जलधिरिवान्तकं पदं " ॥ So also noticed by He.

# दशमः सर्गः ।

पृथिवीं शासतस्तस्य पाकशासनतेजसः ।
किंचिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥
न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।
सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥२॥

१. पृथिवीं ( भुवं । तथा च हरिवंशे । " ततोऽभ्युपगमाद्राज्ञः पृथोर्वैण्यस्य भारत । दुहितृत्वमनुप्राप्ता देवी पृथ्वीति चोच्यते" )। शासतः पालयतः पाकशासनतेजसः इन्द्रवर्चसः । [ पाको नाम कश्चिद्दैत्यस्तस्य शासनः इन्द्रस्तस्य तेज इव तेजो यस्य—हे० चा० पाकान् बालान् शास्तीति । शासिमृषीति युः । पुरुहूतोऽदितेर्गर्भं प्रविश्याच्छिनदिति कथा प्रसिद्धा—चा० ] । अनूनर्द्धेः महासमृद्धेः ।( न ऊना अधिका ऋद्धिर्यस्य तथोक्तस्य समग्रसंपदः । कालापगमेऽपि अन्यूनविभवस्येति भावः ) । तस्य दशरथस्य किंचिदूनमीषन्न्यून शरदां वत्सराणाम् । " स्याद्वृतौ वत्सरः शरत् " इत्यमरः । अयुत दशसहस्रं ययौ । " एकदशशतसहस्राण्ययुतं लक्षं तथा प्रयुतम् । कोट्यर्बुदं च पद्मं स्थानात्स्थानं दशगुणं स्यात् " इत्यार्यभट्टः । इदं च मुनिशापात्परं वेदितव्य न तु जननात् । " षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि " इति रामायणविरोधात् । नाप्यभिषेकात्परं तस्यापि " सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम्" इति कौमारानुष्ठितत्वाभिधानात्स एव विरोध इति ।(तथा च भागवते । " उदयच्छद्रिपुं हंतुं वज्रं वृत्रधरो रुषा । स तेनैवाष्टधारेण शिरसी बलपाकयोः । ज्ञातीनां पश्यतां राजन् जहार जनदन् भयं " ) ।

२. स दशरथः पूर्वेषां पितृणामृणनिर्मोक्षसाधनम् । ( ऋणान्निर्मोक्षस्तस्य साधनम् ) । " एष वा अनृणो यः पुत्री " इति श्रुतेः । पितृणामृणनिर्मुक्तिकारणम् । सद्यः शोक एव तमस्तदपहन्तीति शोकतमोपहम् । अत्राभयङ्कर इति वदुपपदेऽपि तदन्तविधिमाश्रित्य " अपे क्लेशतमसोः " इति डप्रत्ययः।( " अपे क्लेशतमसोः " इति सूत्रेण क्लेश इत्युपपदेन च सहितात् अपहन्तेः डः विहितः अतः तमोपहः इति पदं सिध्यति किन्तु शोकतमोपह इति पदस्य कः साधनप्रकारः पूर्वोक्तमत्रानवकाशात् " येन विधिस्तदन्तस्य " इति न्यायस्य च कृत्प्रत्ययेषु संगत्यभावात् इत्याशक्य मल्लिनाथः समाधत्ते अभयंकर इत्यादिना तथा च " मेघर्त्तिभयेषु कृञः " इति सूत्रे तदन्तविधिमाश्रित्य यथा भयंकरवत् अभयकर इति पदमपि सिध्यति तथा अत्रापिप्रयोगबलात् तदन्तविधिराश्रयणीयः । वस्तुतस्तु " कृत्यल्युटो बहुल " इति बहुलपदेन एतत्समाधानं सुकरं ) । सुताभिधानं सुताख्यं ( सुतइत्यभिधानं यस्य तत् सुतापरनामकं ) ज्योतिर्नोपलेभे न प्राप च । [एवं पुत्रार्थं दूयमानचित्तस्य तस्य बहुकालेनापि पुत्रो नाजनि येन स पितृऋणविमुक्तो भवेत् । सुतस्य आह्लादकत्वेन शोकान्धकारनाशकत्वात् ज्योतिषा साम्यं । न च इति समुदायं निषेधे वा—चा० ] । ( अन्धकाराच्छन्ने स्थाने चिरं कृतवसतिः कश्चिद्यथा आलोकाय स्पृहयति तथा पुत्रानुत्पत्त्या पितृणाविमोचनात् आत्मनोऽकृतार्थत्वबुद्ध्या शोकरूपेण तमसाभिभूतः स राजा सुतापरनामकं ज्योतिरीहमानोऽपि चिराय तन्नाधिगतवानित्यर्थः ) ।

---

1. While he ( i. e. the king दशरथ ) who was as resplendent as Indra ( the destroyer of पाक ) and who had immense wealth ( at his disposal ) was ruling over the earth, a little less than a myriad of autumns passed away

2 And yet he did not obtain that light whose another name is son ( which comes in the shape of a son ) which is the means of relieving himself of the debt of his forefathers and which instantly dispels the darkness of grief

---

2. C. D. E. H. सज्ज्योतिः for स ज्योतिः Between2-3. B. E. with He. Chà. Din. Va. Su. Dhar. and Vija; read " मनोर्वंशश्चिर तस्मिन्ननभिव्यक्तसन्ततिः न निमज्य पुनरुत्थास्यन्नदः शोण इवाभवत्" । He. commenting on this calls it a क्षेपक. ¶ E. उत्थाय for. उत्थास्यन्. E. ह्रदः for नदः ].

अतिष्ठत्प्रत्ययापेक्षसंततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥
ऋष्यशृङ्गादयस्तस्य सन्तः संतानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥४॥
तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥५॥
आशंसे नित्यमानन्दं रामनामकथामृतम्
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

३. प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा संततिर्यस्य स तथोक्तः । [ प्रत्ययो हेतुः पुत्रकामेष्ट्यादिः तादृशः—हे० चा० सु० ] । " प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु " इत्यमरः । स नृपः । मन्थात्प्राङ्मन्थनात्पूर्वमनभिव्यक्तादृष्टा रत्नोत्पत्तिर्यस्य सोऽर्णव इव । [ अनेन पुत्रबाहुल्यं अस्य राज्ञः सूचितं । राज्ञो गांभीर्यं सन्ततेश्च रत्नरूपत्वं-हे० चा० ] । चिरमतिष्ठत् । सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वादिति भावः । ( पुत्रजन्मप्रतिबंधीभूतस्य दूरदृष्टस्य अनिराकरणात् स तनयमुखदर्शनसुखं न लेभे न तु वस्तुतो वंध्यत्वात् । यथा मन्थनात् पूर्वं उदधेः रत्नाकरत्वं अज्ञातमासीत् मंथनं च तदभिव्यक्तेः कारणमभूत् तथा राज्ञः अवन्ध्यत्वप्रकाशनं पुत्रेष्टियागसापेक्षमासीत् ) ।

४. ऋष्यशृङ्गादयः । [ ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गं यस्य । तदादयः आदिशब्दात्कात्यायनजाबालिवामदेवाः गोकर्णपृषतैणर्ष्याः–हे० ] । ऋष्यशृङ्गो नाम कश्चिदृषिः । तदादयः । ( तथा च " सुयज्ञं वामदेवं च जाबालिमथ काश्यपं पुरोहितं वसिष्ठं च " ) । ऋतुमृतौ वा यजन्तीत्यृत्विजो याज्ञिकाः । " ऋत्विग्दधृक्-" इत्यादिना क्विन्नन्तो निपातः । जितात्मानो जितान्तःकरणाः । [ समस्तप्रशस्तकर्माधिकारिणः–चा० ] । सन्तः । [ तस्य राज्ञः–हे० ] । संतानकांक्षिणः पुत्रार्थिनस्तस्य दशरथस्य पुत्रीयां पुत्रनिमित्ताम् । ( पुत्रप्राप्तिनिमित्तभूतां ) । " पुत्राच्छ च " इति छप्रत्ययः । इष्टिं यागम् आरेभिरे प्रचक्रमिरे । ( अथर्ववेदोक्तमन्त्रैः कल्पसूत्रोक्तविधानेन इति शेषः। उक्तं च तैत्तिरीयसंहितायां– " अग्नये पुत्रवते पुरोडाशमष्टादशकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छति " इति । तथा च भट्टोक्तचरुहोमाधिकारे– " इष्टिस्तु चरुणा प्रोक्तो यागस्तु पशुना स्मृतः । एतच्छेषः क्रतुः प्रोक्तो होमान्यत्पूजनं स्मृतं " ) ।

५. तस्मिन्नवसरे पुत्रकामेष्टिप्रवृत्तिसमये देवाः । पुलस्त्यस्य गोत्रापत्यं पुमान्पौलस्त्यो रावणः । तेनोपप्लुताः पीडिताः सन्तः । निदाघार्ता घर्मातुराः । अध्वानं गच्छन्तीत्यध्वगाः पान्थाः । " अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः " इति डप्रत्ययः । छायाप्रधानं वृक्षं छायावृक्षमिव । शाकपार्थिवादित्वात्समासः । ( शाकप्रियः पार्थिवः शाकपार्थिवः इतिवत् मध्यमपदलोपः ) । हरिं विष्णुमभिजग्मुः । ( यथा घर्मक्रान्ता जनाः सूर्यातपक्लेशशान्तये छायया प्रचुरं वृक्षमाश्रयन्ते तथा दशास्यपरित्रस्ताः सुराः स्वेषां दुःखस्य निवारणार्थं विष्णुं शरणं वव्रजुः ) ।

3. That king waited long, having his progeny dependent on some formal cause, and therefore appearing like the ocean with its produce of gems undisplayed before its churning.

4. Then ऋष्यशृंग and other holy priests becoming self-subdued began to perform the sacrifice that would secure the birth of a son to him who was anxious to have issue.

5. At this juncture the gods being oppressed by the son of पुलस्त्य ( i. e. Ràvana ) went over to Hari, as do travellers oppressed by heat to an umbrageous tree.

3. E. सुचिरं for स चिरं; E. नृपं for नृपः.

4. C. with Din. and Chà., प्रारेभिरे for आरेभिरे; B. H. with He. Chà. Din. Va. Su. Dhar. and Vija., यतात्मानः for जितात्मानः.

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥
भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ॥ ७ ॥
श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८ ॥
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९ ॥

६. ते देवाश्चोदन्वतं समुद्रम् । " उदन्वानुदधौ च " इति निपातः । प्रापुः । आदिपूरुषो विष्णुश्च बुबुधे ( प्राबुध्यत ) । योगनिद्रां जहावित्यर्थः । गमनप्रतिबोधयोरविलम्बार्थौ चकारौ । तथा हि । अव्याक्षेपो मध्यसाव्यासङ्गः । अविलम्ब इति यावत् । भविष्यन्त्याः कार्यसिद्धेर्लक्षणं लिङ्गं हि । उक्तं च– " अनभ्यपरता चास्य कार्यसिद्धेस्तु लक्षणम् " इति । ( दिवौकसां तत्रोपस्थितेः समकालमेव परमात्मनो योगनिद्रापगमात् कार्यसिद्धिरदूरवर्तिनीति अनुमीयते स्म ) ।

७. द्यौरोको येषां ते दिवौकसो देवाः । पृषोदरादित्वात्साधुः । यद्वा दिवशब्दोऽदन्तोऽप्यस्ति । तथा च बुद्धचरिते– " न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम् " इति । तत्र " दिवु क्रीडादौ " इति धातोः " इगुपध–" इति कः । दिवमोक एषामिति विग्रहः । भोगिनः शेषस्य भोगः शरीरम् । " भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः " इत्यमरः । स एवासनं सिंहासनम् । तत्रासीनमुपविष्टम् । आसेः शानच् । " ईदासः " इतीकारादेशः । तस्य भोगिनः फणामण्डले ( फणानां समूहे । सहस्रशीर्षत्वात् ) य उदर्चिष उदग्रमयो मणयस्तैर्द्योतितविग्रहं ( प्रकाशितकायं । ननु स्वयंप्रकाशस्य कुतः परेण प्रकाशनम् ) । तं विष्णुं ददृशुः । (शेषशायिनो भगवतो हरेर्देहालंकाररूपेण परिणतस्तत्फणामणिरभूत्) ।

८. कीदृशं विष्णुम् । पद्मे ( कमले ) निषण्णाया उपविष्टायाः श्रियः ( लक्ष्म्याः ) क्षौमान्तरिता ( क्षुमायाः विकारः क्षौमं दुकूलं तेन अन्तरिता ) दुकूलव्यवहिता ( दुकूले विलुप्ता अत एव अदृश्या ) मेखला ( कांची ) यस्य तस्मिन् । आस्तीर्णौ करपल्लवौ पाणिपल्लवौ यस्मिन् । विशेषणद्वयेनापि चरणयोः सौकुमार्यात्कठिनमेखलास्पर्शासहत्वं सूच्यते । तस्मिन्नङ्के ( उत्संगे ) निक्षिप्तौ चरणौ येन तम् । [ लक्ष्म्या विष्णोश्चरणसंवाहनं–चा० ] । ( कठिनस्पर्शया मेखलया चरणव्यतिकरः क्लेशदो भावीति आशंक्य दुकूलेनाच्छादयमानयोश्चरणयोः संवाहनं कुर्वन्त्या लक्ष्म्या समुपास्यत ) ।

९. वपुः कीदृशम् प्रबुद्धे विकसिते पुण्डरीके ( श्वेतकमले ) इवाक्षिणी यस्य तम् । दिवसे तु पुण्डरीकमेवाक्षि यस्येति विग्रहः । बालातपनिभमंशुकं यस्य तम् । पीताम्बरधरमित्यर्थः । [ अन्यत्र । बाला क-

---

6. No sooner did they reach the ocean than Vishnu, the primeval spirit ( first being) awoke. Absence of delay is certainly the sign of future success in an undertaking.

7. The denizens of heaven saw him, reclining on a seat ( or throne ) made up of the body of the serpent, and whose body was illuminated by the luminous gems on its expansive hood——

8. Him who had his feet resting on the thigh ( lap ) of the goddess Lakshmí seated as she was on a lotus,---the thigh which had its zone covered by the sillk-woven garment, and on which were spread her tendril-like palms——

9. Him whose eyes were like full-blown lotuses, whose garment resembled the young sun, and whose sight was pleasant to those who had devoted themselves to best meditations and

---

6. B. आदिपौरुषः for आदिपूरुषः

7. D. ते for तं.

9. D. प्रफुल्ल° for प्रबुद्ध°.

प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १० ॥
बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥
दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥

न्याराशिस्तत्र तपतीत्यातपो बालातपः कन्याराशिस्थस्यादित्यस्य नितरां भासो दीप्तयस्ता एव अंशुकं व- स्त्रं यस्य तं इति वा—हे० चा० सु० ]। अन्यत्र बालातपव्याजांशुकमित्यर्थः। " निभो व्याजसदृक्षयोः " इति विश्वः । प्रकृष्ट आरम्भो योगः । [ विष्णुसाक्षात्कारविषयः—हे० ] । येषां ते प्रारम्भा योगिनः। [ अन्यत्र प्रभाताः—हे० ]। तेषां । [ सनकसनन्दनादीनां—हे० ]। सुखदर्शनम् । ( प्रारम्भाणां सुखेन यथा स्यात्तथा दर्शनं ) । अन्यत्र प्रारम्भ आदौ सुखदर्शन शारदं शरत्सबन्धिन दिवसमिव स्थितम् । ( शरदि दि- वसमुखानि विकासितसरोजशोभितानि भवन्ति जगद्रक्तांशुकेनेव बालातपेन संवस्त्रितमिवाभाति नभोमण्ड- लं च निरभ्रं अतो जनानामनुद्वेगकरं दृश्यते ) ।

१०. पुनः किंविधम् । प्रभयानुलिप्तमनुरंजितं । [ श्रीर्वसति यस्मिन् तत्—हे० ] । श्रीवत्सं नाम ला- ञ्छनं येन तम् । लक्ष्म्या विभ्रमदर्पणं । ( ललितमण्डनस्य मुखप्रसाधनस्य वा यदुपयुज्यं दर्पणं ) । कौस्तुभ इत्याख्या यस्य तम् । [ कुं भूमिं स्तुभ्नाति व्याप्नोति इति कुस्तुभः समुद्रस्तस्माज्जातं—चा० ] । अपां समुद्राणां सारं स्थिरांशम् । अम्मयमणिमित्यर्थः । बृहतोरसा ( विशालवक्षःस्थलेन ) बिभ्राणम् ( दधानं ) । ( दर्पणसाहाय्येन स्त्रीणां केशसंस्कारादयः देहशोभासंपादकाः व्यापारा भवन्ति लक्ष्म्यास्तु दर्पणस- दृशेन हरेर्वक्षसि स्थितेन कौस्तुभेन ते व्यापारा अभूवन् अतस्तस्या दर्पणस्य नोपयोगः आसीत् ) ।

११. विटपाकारैः शाखाकारैः । ( दीर्घपीवरैरित्यर्थः ) । दिव्याभरणभूषितैः । ( दिवि भव्यैराभरणैरलं- कारैर्भूषितास्तैः ) । बाहुभिः । (कारणभूतैः)। उपलक्षितम् । [ स हि स्वर्णाभरणः बाहुभिरिति चतुर्भुजत्वं— हे० ] । अत एवापां सैन्धवानां मध्ये आविर्भूतं ( प्रकटीभूत ) अपर द्वितीयं पारिजात । [ पारिण्यब्धौ जातं—हे० ] । इव स्थितम् । ( पारिजातोऽपि शाखावलम्बिसर्वालंकारः ) ।

१२. दैत्यस्त्रीगण्डलेखानामसुराङ्गनागण्डस्थलीनां यो मदरागस्तं विलुम्पन्ति हरन्तीति मदरागविलो- पिनः । ( मदरागः क्षीवत्व लोपितु भर्तृघातेन शीलं येषां ) । तैश्चेतनावद्भिः सर्जीवैर्हेतिभिः सुदर्शनादिभिः शस्त्रैः । " रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः " इत्यमरः । ( तथा च रामायणे । " जपतस्तु मुने-

who was therefore like autumnal day whose blooming lotuses are its eyes, whose morning sun is its garment and which is agreeable to look at in its beginning——

10. Him wearing on his broad breast the quintessence of the oceans named Kaustubha, which was the mirror for Lakshmî's toilet ( lit graces of her face ) and which enveloped in its lustre the S'rî-Vatsa mark——

11. Him who was, as it were, another Pârijata that had appeared in the midst of waters by reason of his arms as large as branches of a tree, decorated with celestial ornaments——

12. Him whose victory was proclaimed by his sentient arms destroying the ruddy flush caused by wine on the cheeks of the wives of demons—

10. B. C. E. H. with He. Chà. Din. Va. Su. Vijay. Dhar. and Vij- a., बिभ्रतं D. विभ्रंतं for बिभ्राण So also noticed by He.

11. A. with He. Dhar. and Vija , अपां मध्ये. B. with Vijay. and Su., अपां मध्यात्. C. पयो मध्ये, D. E. H. with Chá. Din. and Va., पयोमध्यात्.

12. H. reads मूर्तिमद्भिः प्रहरणैरुदीरितजयस्वनं for हेतिभिश्चेतनावद्भिरुदीरितजयस्वनं.

मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥
योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४ ॥
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥

स्तस्य विश्वामित्रस्य धीमतः । उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवं । ऊचुश्च मुदिता रामं सर्वे प्रांजलयस्तदा । इमे च परमोदार किंकरास्तव राघव " । उत्तररामचरितेऽपि । " ब्रह्मादयो ब्रह्महिताय तप्त्वा–" इत्यादि ) । उदीरितजयस्वनम् । ( उदीरितः उच्चारितः जयस्वनः जयशब्दः यस्य त तथोक्तं ) । जयशब्दमुद्घोषयन्तीभिर्मूर्तिमतीभिरस्त्रदेवताभिरुपास्यमानमित्यर्थः । ( एभिरेवास्त्रैर्दैत्या हता अतस्तेषां पत्न्यो विधवाः सत्यः मद्यपानजनित स्वकपोलारुण्यं न लेभिरे ) ।

१३. मुक्तो भगवत्संनिधानात्त्यक्तः शेषेणाहीश्वरेण सह विरोधः सहजमपि । [ कृष्णनैकत्र्यवर्तित्वात्–चा० ] । वैरं येन तेन । कुलिशव्रणाः ( वज्रव्रणाः ) अमृताहरणकाल इन्द्रयुद्धे ये वज्रप्रहारास्त एव लक्ष्माणि यस्य स तेन । [ सुधाहरणकाले इन्द्रेण सह कृतयुद्धत्वात्–हे० । इति वीर्योक्तिः । " एष पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे । न हि मे वज्रपातेन वेदनाप्यस्ति काचन " इति महाभारते–चा० ] । प्रबद्धोऽञ्जलिर्येन तेन प्राञ्जलिना । प्रबद्धाञ्जलिनेत्यर्थः । [ विष्णुना शिक्षितत्वात्–हे० ] । विनीतेनानुद्धतेन गरुत्मता ( गरुडेन ) उपस्थितमुपासितम् । पुरा किल मातलिप्रार्थितेन भगवता तद्दुहितुर्गुणकेश्याः पत्युः कस्यचित्सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणक्षुभितं पक्षिराजं त्वद्वोढाहं त्वत्तो बलाढ्य इति गर्वितं स्ववामतर्जनीभारेणैव भङ्क्त्वा भगवान्विनिनायेति महाभारतीयां कथां सूचयति विनीतेनेत्यनेन ।

१४. योग एव मनसो विषयान्तरव्यावृत्ति साम्यान्निद्रा । [ ध्यानं आत्मारामत्वं–हे० ] । तस्या अन्तेऽवसाने विशदैः प्रसन्नैः पावनैः शोधनैरवलोकनैः ( दृष्टिपातैः ) । सुखशयनं पृच्छन्तीति सौखशायनिकास्तान् । " पृच्छतौ सुस्नातादिभ्यः " इत्युपसंख्यानाट्ठक्प्रत्ययः । भृग्वादीनृषीन् । [ आदिग्रहणात्– " मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुं । वशिष्ठं च महातेजाः सोऽसृजत्सप्त मानसान् । सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः "–हे० ] । अनुगृह्णन्तम् ( अनुग्रहं कुर्वाणं ) ।

१५. अथ दर्शनानन्तरं सुराः सुरद्विषामसुराणां । ( कर्मणि षष्ठी ) । शमयित्रे विनाशकाय तस्मै विष्णवे । ( इति क्रियायोगे चतुर्थी ) । प्रणिपत्य स्तुत्यं स्तोत्रार्हम् । " एतिस्तुशास्वृदृजुषः क्यप् " इति क्यप्प्रत्ययः । वाक्च मनश्च वाङ्मनसे । " अचतुर–" इत्यच्प्रत्ययान्तो निपातः । तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः । [ वाङ्मनसपथानां विषयातीतः । यदाह । " यतो वाचो निवर्तन्ते अप्राप्य मनसा सह " इति श्रुतिदर्शनात्–चा० ] । तमेनं विष्णुं तुष्टुवुरस्तुवन् ।

---

13. Him who was waited on with folded arms by humbled Garuda, who bore ( on his body ) the scars of the wounds made by the thunder-bolt, and who had therefore left the natural antipathy for the serpent Shesha——

14. Him who was favouring Bhrigu and other Munis who had been there to enquire about the soundness of his sleep, with his purifying glances that looked bright at the end of the contemplation sleep.

15. Then the gods having paid their obeisance to Him the destroyer of their enemies, began to offer prayers unto Him who is worthy of praise and who does not come within the scope of either words or mind ( who baffles all description and who is incomprehensible ).

---

14. B. and Vijay. अवलंकितैः for अवलोकनैः; C. with He. Vijay. and Su., सौख्य° for सौख°

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥
रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८ ॥

१६. पूर्वमादौ विश्वसृजे विश्वस्रष्ट्रे । [ यतो वा इमानि भूतानि जायन्ते " इति श्रुतिदर्शनात्–चा० ] । तदनु तदानन्तरं विश्वं बिभ्रते पुष्णते । अथ विश्वस्य संहर्त्रे । एवं त्रेधा सृष्टिस्थितिसंहारकर्तृत्वेन स्थित आत्मा स्वरूपं यस्य तस्मै ब्रह्मविष्णुहरात्मने तुभ्यं नमः । [ " ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयंभुवः " इति–हे० ] । ननु कूटस्थस्य कथं त्रैरूप्यमित्याशङ्क्यौपाधिकमित्याह—

१७. एकरसं मधुरैकरसं दिवि भव दिव्यं पयो वर्षोदकं देशे देश ऊषरादिदेशेऽन्याग्रसान्रसान्तराणि लवणादीनि ( भिन्नरुचित्वं ) यथाश्नुते प्राप्नोति । [ " असङ्गो ह्ययं पुरुषः " इत्यादिश्रुतिदर्शनात्–चा० ] । एवमविक्रियो निर्विकारः । एकरूप इत्यर्थः । त्वं गुणेषु सत्त्वादिष्ववस्थाः । [ विष्णुब्रह्मारुद्रलक्षणाः सुखदुःखमोहरूपा वा–हे० ] । स्रष्टृत्वादिरूपा अश्नुषे । [ तत्त्वतो निरुपाधिकस्वरूपेऽपि त्वयि स्रष्टृत्वादिव्यवहारो गुणोपाधिनिबन्धनः इति भावः–चा० ] । ( यथा स्वतो मधुरं अंभोधरविगलितं पयः .देशभेदेन लवणत्वादिकान् अवस्थाभेदान् भजते तथा भवानपि गुणभेदेन दशात्रयविभेदं प्राप्नोति भवतः स्रष्टृत्वादिको भेदः औपाधिक एव न तु वास्तविकः स तु गुणत्रयविभागायैव । " आत्मा वा इदमेक एवासीत् " इति श्रुतेः । " नमो रजोजुषे सृष्टौ स्थित्यै सत्त्वमयाय च तमोरूपाय संहारे त्रिरूपाय स्वयंभुवे " इत्युक्तत्वाच्च ) ।

१८. हे देव त्वममेयः । ( नास्ति मेयं यस्य स तथोक्तः ) । लोकैरियत्तया न परिच्छेद्यः । मितलोकः । ( मिताः लोकाः येन यस्माद्वा । " एकावयवसूक्ष्मांश यस्यैतदखिलं जगत् । कल्पनावयवांशस्य तस्य स्तोष्यामि किन्त्वहम्——" यस्य एकावयवस्य सूक्ष्मांश एतज्जगत्–" पादोस्य विश्वाभूतानीति " इति श्रुतेः । अविद कथं चितोंऽश इति चेत्तत्राह–कल्पनामयोऽवयवांशो यस्य, जगद्रूपस्यावयवांशस्य काल्पनिकत्वमित्यर्थः इति विष्णुपुराणस्य पंचमांशस्य सप्तमाध्याये द्रष्टव्यं ) । परिच्छिन्नलोकः । [ तदुक्तं ।

---

16. A bow to thee, O Lord ! who remainest in three-fold-form—being the Creator of universe in the beginning afterwards the upholder of it and last of all being its destroyer.

17. As the water from heaven ( rain-water ) which has but originally one taste obtains a diversity of flavours ( assumes different tastes ) in different parts of the countries, so thou who art immutable, assumest different conditions when connected with different qualities of Satva, Rajas and Tamas.

18. O Lord ! immeasurable as thou art, thou hast measured all the worlds; indifferent to all the desires, thou grantest the desires of all ; unconquered thyself, thou art conquering; thyself imperceptible thou art the cause of the perceptible world.

---

16.E. reads त्रेधात्मने नमः for त्रेधास्थितात्मने.

18. B. with Chá. Din. Va. and Su., प्रार्थितावहः, E. प्रार्थनावहं for प्रार्थनावहः; B. व्यक्तिकारणं for व्यक्तकारणं. Between 18-19. C. D. E. H. with He. Chà. Din. Va. Vijay. Su. Dhar. and Vija., read " एकः कारणतस्तां तामवस्थां प्रतिपद्यसे । नानात्वं रागसंयोगात्स्फटिकस्येव ते स्मृतं " । [ D. H. He. Su., स्फुटिकस्य for स्फटिकस्य. H. तव for ते ]. He. commenting on this calls it a क्षेपक.

हृदयस्थमनासन्नमकामं त्वां तपस्विनम्।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९ ॥
सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥

" अव्यक्ताद्व्यक्तयः सर्वाः प्रभवंत्यहरागमे " इति–हे० ] । अनर्थी निःस्पृहः । आवहतीत्यावहः । प्रचारः- ष् । प्रार्थनानामावहः कामदः । [ प्रार्थनामावहति–हे० चा० ] । अजितोऽन्यैर्न जितः । जिष्णुर्जयशीलः । अत्यन्तमव्यक्तोऽतिसूक्ष्मरूपः । व्यक्तस्य स्थूलरूपस्य । [ प्रपञ्चस्य–हे० ] । कारणम् ( हेतुः ) । [ " व्यक्तः स्फुटमनीषिणोः " इति विश्वः–हे० ] ।

१९. हे देव त्वां हृदयस्थं सर्वान्तर्यामितया नित्यसंनिहितं तथाप्यनासन्नमगम्यरूपत्वाद्विप्रकृष्टं च विदुः । संनिकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः । तथाकामम् । न कामोऽभिलाषोऽस्य तं परिपूर्णत्वान्निःस्पृहत्वाच्च निष्कामम् । तथापि तपस्विनं प्रशस्ततपोयुक्तं विदुः । यो निष्कामः स कथं तपः कुरुत इति विरोधः । [ परिपूर्णत्वादकामो लोकयात्रार्थं तपस्यति । तदुक्तं गीतासु । " न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन नानवाप्तमवाप्तव्यं प्रवर्तेऽपि च कर्मणि " इति–हे० ] । परिहारस्तु ऋषिरूपेण दुस्तरं तपस्तप्यते । दयालुं परदुःखप्रहरणपरं । तथाप्यनघस्पृष्टं नित्यानन्दस्वरूपत्वाददुःखिनं विदुः । " अघं दुरितदुःखयोः " इति विश्वः । दयालुरदुःखी चेति विरोधः । " ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते नित्यदुःखिताः " इति महाभारते । पुराणमनादिमजरं ( न विद्यते जरा यस्य तं तथोक्त ) निर्विकारत्वादक्षरं विदुः । चिरंतनं न जीर्यत इति विरोधालंकारः। उक्तं च–"आभासत्वे विरोधस्य विरोधालंकृतिर्मता " इति । विरोधेन चालौकिकमहिमत्वं व्यज्यते । ( हृत्कोटरगुहासीनोऽपि अविज्ञातमाहात्म्यः अवाप्तसमस्तकामोऽपि नरनारायणरूपेण लोकशिक्षार्थं तपश्चरन् परदुःखनिवारणव्यग्रोऽपि स्वयमदुःखभाक् । सृष्टेः प्रागपि अवस्थितत्वादतिप्राचीनोऽपि जन्मजरादिदुःखानाभिज्ञस्त्वं अगम्यस्वरूपोऽसि । " यत्नादपि परक्लेशं हर्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्तिता–" इत्युक्तलक्षणा दया खलु हृदि तदैव समुद्भवति यदा दुःखितेन दयार्हेण समदुःखत्वं जायते दुःखस्याज्ञाने दुःखहरणेच्छोत्पत्तेरसंभवात् । यद्वा । त्वं दयालुत्वात्परदुःखनिवारणेच्छुर्वर्तसे त्वयि तु कस्यापि दयाप्रकाशस्यावकाशो नास्ति नित्यानन्दस्वरूपत्वेन दुःखरहितत्वात् ) ।

२०. त्वं सर्वं जानातीति सर्वज्ञः । [ सर्वेश्वरत्वात्–हे० ] । " इगुपध–" इति कप्रत्ययः । अविज्ञातः । न केनापि विज्ञात इत्यर्थः । त्वं सर्वस्य योनिः कारणम् । [ योनिरित्यसभ्यत्वं–हे० ] । त्वमात्मन एव भवतीत्यात्मभूः ( स्वयंभूः ) । न ते किंचित्कारणमस्तीत्यर्थः । त्वं सर्वस्य प्रभुः । [ सर्गस्थितिप्रलयत्वात्–हे० ] । त्वमनीशः ( न विद्यते ईशो यस्य स तथोक्तः ) । त्वमेकः सर्वरूपभाक् । [ सर्वेषां रूपाणि भजतीति । विश्वात्मकत्वात्–हे० ] । त्वमेक एव सर्वात्मना वर्तस इत्यर्थः ।

---

19. O Lord ! the sages declare thee to be present in the heart ( of all ) and yet not near ( to the comprehension ) ; free from desires yet thou art an ascetic, compassionate yet not affected by grief, old, yet not subject to decay.

20. Though omniscient thou art thyself unknown, though the source of all thou art self-existent ( thyself uncreate ), thou the Lord of all, art thyself without any superior, thou art one and yet assumest all forms.

---

19. B. C. E. H. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., अदयास्पृष्टं for अनघस्पृष्टः.

20. H. omits the 20th stanza.

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥
चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ २३ ॥

२१. हे देव त्वां सप्तभिः सामभी रथंतरादिभिरुपगीतम् । [ सूक्तैः स्तुतं । " रथतरं । बृहद्रथंतरं । वामदेव्यं । वैरूप्यं । पावमान्यं । वैराजं । चान्द्रमसं " इति सप्त सामानि गजोत्पत्तिकारणानि । " सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत । जपतो ब्रह्मणस्तस्मात्समुत्पन्ना मतगजाः " इति पालकाप्यः—हे० ] । " तद्धितार्थे—" इत्युत्तरपदसमासः । सप्तानामर्णवानां जलं सप्तार्णवजलम् । [ क्षारेक्षुरससुरादधिघृतक्षीरपूर्णाः सप्तार्णवाः—हे० ] । पूर्ववत्समासः । तत्र शेते यः स सप्तार्णवजलेशयः । तम् । " शयवासवासिष्वकालात् " इत्यलुक् । सप्तार्चिर्मुखं यस्य तम् । [ सप्तार्चिषो यस्य सोऽग्निर्मुखं यस्य । " काली कराली धमा च लोहिता च मनोजवा । स्फुलिंगिनी विश्वरूपा सप्त जिह्वाः प्रकीर्तिताः " इति गर्गः । यद्वा । " भवति हिरण्या कनका रक्ता कृष्णा च सुप्रभा चान्या । अतिरक्ता बहुरूपेति सप्त सप्तार्चिषो जिह्वाः " इति हलायुधः—हे० चा० ] । " अग्निमुखा वै देवाः " इति श्रुतेः । सप्तानां लोकानां भूर्भुवःस्वरादीनामेकसंश्रयम् । [ सश्रयत्यनेनेति संश्रयः सप्तानां लोकानां एकश्चासौ संश्रयश्च तं तथोक्तं । " भूर्भुवःस्वर्महर्जनस्तपःसत्यं " इति सप्त लोकाः । " भुवनानि च वक्ष्यीयात्त्रीणि सप्त चतुर्दश " इति वाग्भटः—हे० ] । [ " क्षीरोदो लवणोदश्च दध्योदश्च घृतोदकः । स्वादूदकः सुरोदश्च तथैवेक्षुरसोदधिः " इति वायुपुराणे—चा० हे० ] । एवंभूतमाचख्युः ।

२२. चतुर्णां धर्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः । त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः " इत्यमरः । तत्फलकं यज्ज्ञानम् । [ ज्ञानमन्तरेण धर्मादिप्रवृत्त्यभावात्—चा० ] । चत्वारि युगानि कृतत्रेतादीनि यासु ताश्चतुर्युगाः कालावस्थाः कालपरिमाणम् । चत्वारो वर्णाः प्रकृता उच्यन्ते यस्मिन्निति चतुर्वर्णमयः । चातुर्वर्ण्यप्रचुर इत्यर्थः । [ " ब्रह्मक्षत्रियविट्शूद्रा वर्णाः " इति याज्ञवल्क्यः—चा० ] । तत्प्रकृतवचने मयट् । " तद्धितार्थे—" इत्यादिना तद्धितार्थे विषये तत्पुरुषसमासः । स लोकः । इत्येवरूपं सर्वं चतुर्मुखाच्चतुर्मुखरूपिणस्त्वत्तः । जातमिति शेषः । " इदं सर्वमसृजत यदिदं किंचित् " इति श्रुतेः । ( ज्ञानं विना धर्मार्थकाममोक्षरूपचतुर्वर्गसाधनस्यासंभवात् ज्ञानं सृष्टं । योऽसौ वस्तुपरिणामधर्मकः कालः वस्तूनां तत्तत्परिपाकभेदेन चतुर्धा युगरूपेषु विभक्तः स च त्वया सृष्टः । अथ चतुर्वर्गसाधको लोकोऽपि प्रकृतिभेदात् उत्तममध्यमाधमरूपश्चतुर्वर्णमयः सृष्टः चतुर्मुखस्त्वमेव इदं प्रपंचं रचितवानसीत्याशयः ) ।

२३. अभ्यासेन । [ अभ्यस्यत इत्याभ्यासो योगः तेन—हे० ] । निगृहीतं विषयान्तरेभ्यो निवर्तितम् । ( बाह्योपाधिभ्यः पराङ्मुखमर्थार्जितं ) । तेन मनसा योगिनः ( सनकादयः ) हृदयाश्रयं हृत्पद्मस्थं ज्योति-

21. They have declared thee, O lord ! to be the sole refuge ( or one support ) of the seven worlds, resting in the waters of seven oceans thou hast been sung in the seven Sámans and hast ( seven-flamed ) fire for thy mouth ( introduction to thee is through Agni alone ).

22. From thee, having four mouths, have sprung the knowledge resulting in the group of four ends ( purposes ) of life, the arrangement ( division ) of time into the four cycles, and the people consisting of the four castes.

23. With minds checked by practice from the external objects, the Yogins ( or devotees ) seek thee for emancipation ( release from life ), who thou full of light abidest in their hearts.

21. E. H. and Vijay. आचक्षुः for आचख्युः

22. D. with Chà. Din. Va. and Su., कालावस्था for कालावस्थाः; D. with Chá. Din. Va. and Su., चतुर्युगा for चतुर्युगाः.

**अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।**
**स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ २४ ॥**
**शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।**
**पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥**
**बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।**
**त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥**

मयं त्वां । [ " अयं पुरुषः स्वयंज्योतिः " इति श्रुतेः—चा० ] । विमुक्तये मोक्षार्थं विचिन्वन्त्यन्विष्यन्ति । [ विषया यस्मिन्नर्थे निर्लीयन्ते हृदयं तद्विजानीयादिति हृदयमनर्मभेदः—हे० ] । ध्यायन्तीत्यर्थः । ( बहुकालव्यापिना योगसमाधिना भवत्साक्षात्कारलाभाय मुनयः प्रयतन्ते तत्त्वज्ञानस्य संसारविनिवृत्तेः कारणत्वात् ) ।

२४. न जायत इत्यजः । " अन्येष्वपि दृश्यते " इति डप्रत्ययः । तस्याजस्य जन्मशून्यस्यापि जन्म गृह्णतः । मत्स्यादिरूपेण जायमानस्य । निरीहस्य चेष्टारहितस्य । [ निर्व्यापारस्य—हे० निःस्पृहस्य—चा० रागद्वेषादिरहितस्य—मु० ] । अपि हतद्विषः शत्रुघातिनः । शत्रूनहतवत इत्यर्थः । जागरूकस्य सर्वसाक्षितया नित्यप्रबुद्धस्यापि स्वपतो योगनिद्रामनुभवतः । इत्थं विरुद्धचेष्टस्य तव याथार्थ्यं ( यथार्थस्वरूपं ) को वेद वेत्ति । " विदो लटो वा " इति णलादेशः । ( स्वयमयोनिरपि खलदमनेन जगद्भारलघूकरणार्थं पृथिव्यामवतीर्णोऽसि । स्वयं निःस्पृहोऽपि जगदुपकाराय दुष्टनिधनप्रयत्नं करोषि । योगनिद्राधीनोऽपि सर्वेषां हृद्गतं जानासि । एवं परस्परविरोधिनीनामवस्थानामेकभाजनं त्वं न धियां पथि वर्तसे ) ।

२५. किं च कृष्णादिरूपेण शब्दादीन्विषयान्भोक्तुम् । नरनारायणादिरूपेण दुश्चरं तपश्चरितुम् । तथा दैत्यमर्दनेन प्रजाः पातुम् । औदासीन्येन ( उदास्ते असौ उदासीनः तस्य भावः औदासीन्यं तेन ) ताटस्थ्येन वर्तितुं च पर्याप्तः समर्थोऽसि । भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वदन्यः कः समर्थ इत्यर्थः । ( रूपरसादीनां इन्द्रियगोचरपदार्थानां भोगान्निवृत्तिः तपःशब्दस्य प्रवृत्तिनिमित्तं । प्रजापालनमौदासीन्यं च एकाधारे विरुद्धमपि त्वयि अतीन्द्रियस्वरूपं अवाङ्मनसगोचरे संभवत्येव ) ।

२६. आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतवः पुरुषार्थसाधकाः पन्थान उपायाः । जाह्नव्या इमे जाह्नवीया गाङ्गाः । " वृद्धाच्छः " इति छप्रत्ययः । ओघाः प्रवाहाः । तेऽप्यागमैरागतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च । अर्णव इव । त्वय्येव निपतन्ति प्रविशन्ति । येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थः । यथाहुराचार्याः—" किं बहुना कारवोऽपि विश्वकर्मेत्युपासते " इति । ( विभिन्नेष्वपि श्रुतिवचनेषु मुनिमतेषु च तेषां प्रतिपाद्यस्त्वमेवैकः । तथा च महिम्नस्तोत्रे । " त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव " । " शैवाः सौराश्च गाणेशा वैष्णवाः शक्तिपूजकाः । मामेव प्राप्नुवंतीह वर्षाभः सागरं यथा " । " यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो । विशंति सर्वतः सिंधुमध्वानस्त्वां तथाखिलाः " इति पद्मपुराणे ) ।

---

24. Who knows thy real nature ? Though unborn thou takest birth. Though without action yet thou hast destroyed the enemies, and though sleeping ( enjoying the contemplation-sleep ) thou art yet vigilant ( i. e. wide awake ).

25. Thou art ( alone ) able to enjoy the objects of sense such as sound and others, and ( at the same time ) also to practise austere asceticism Thou art able to protect the people and yet to live in indifference.

26. The ways that accomplish the object of human pursuit ( i e. which leads to the path

---

24. B. C. E. with He. Vijay. and Va., याथात्म्य for याथार्थ्य.

त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये ॥ २७ ॥
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥

२७. त्वय्यावेशितं निवेशितं चित्तं ( मनः ) यैस्तेषाम् । तुभ्यं समर्पितानि कर्माणि यैस्तेषाम् । " मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे " इति भगवद्वचनात् । वीतरागाणां ( वीतः निवृत्तः रागो विषयाभिलाषो येषां तथोक्तानां गताभिलाषाणां ) विरक्तानामभूयःसंनिवृत्तयेऽपुनरावृत्तये । मोक्षायेत्यर्थः । त्वमेव गतिः साधनम् । [ उपायः–हे० प्राप्यः–चा० सु० ] । "तमेवं विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय " इति श्रुतेरित्यर्थः । ( अतिमृत्युं अमृतत्वं मोक्षमित्यर्थः । तत्वज्ञानमेव मोक्षप्राप्तेरद्वितीय साधनम् । तथा च वायुपुराणे । " देहिनां याः प्रवर्तन्ते प्रातरारभ्य स्वाः क्रियाः । ताश्च विष्णवर्पणं कुर्वन् कर्मपाशाद्विमुच्यते " ) ।

२८. प्रत्यक्षः प्रत्यक्षप्रमाणगम्योऽपि तव मह्यादिः पृथिव्यादिर्महिमैश्वर्यमपरिच्छेद्यः । इयत्तया नावधार्यः । आप्तवाग्वेदः । " यतो वा इमानि भूतानि जायन्ते " इत्यादिश्रुतेः । अनुमानं क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यादिकम् । ताभ्यां साध्यं । [ साधयितुं शक्यं–हे० प्रतिपाद्यं–चा० ] । गम्यं त्वां प्रति का कथा । [ अतिशयेन ज्ञातुं न समर्थः इत्यर्थः—चा० ] । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यम् । तत्कारणमप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः । [ यः प्रत्यक्षप्रमाणेनापि गृहीतुमशक्यः । तदा प्रमाणान्तरैः कथं ज्ञातव्यो भवेत्–सु० ] । ( प्रत्यक्षप्रमाणगम्यानां मह्यादीनां त्वत्कर्तानां अपरिच्छेद्यमहिमत्वे प्रसिद्धे तेषां सर्वेषां कारणभूतस्य तव वेदप्रमाणैरनुमानैश्च सम्यक्परिच्छेदः सुतरामसंभाव्यः इति किमु वक्तव्यम् ) ।

२९. स्मरणेन केवलं कृत्स्नम् । " केवलः कृत्स्न एकश्च " इति शाश्वतः । पुरुषं स्मर्तारं जनं पुनासि । यतः । यदित्यर्थः । अनेन स्मृतिकार्येणैव त्वयि त्वद्विषये याः शेषा अवशिष्टा वृत्तयः । [ स्नपनचंदना-

---

of supreme felicity ) though many ways differently laid down in the different S'astras all meet, O Lord ! in thee alone, as the streams of the जाह्नवी, though running in different courses, fall at last into the ocean.

27. To persons, whose desires for worldly enjoyments are completely gone, and who have devoted their hearts and consigned their actions to thee, Thou art the refuge for obtaining absolution ( not to return again in this world )

28. Thy greatness, which consists in earth and other elements, though perceptible by senses is yet undefinable, how can then one talk of defining thee, O Lord, who art simply inferrible ( knowable ) by inference and the Vedas ( i. e. reliable words the validity of proof of प्रत्यक्ष is more sound than either आप्तवाक् or अनुमान )

29. Since thou purifiest a person simply when he only remembers thee, the remaining functions of senses with reference to thee, by this act, do declare their effects ( i. e. become at once known ).

---

27. B. C. E. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija. त्वदावेशि° for त्वय्यावेशित°.

29. B. C. E. H. with He. Chà. Din. Va. Su. Dhar. and Vija., अपि for एव; B. C. E. H. with Chà., Din. Va. and Su., यदा for यतः.

उदधेरिव रत्नानि तेजांसीव विवस्वतः।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते॥ ३०॥
अनवाप्तमवाप्तव्यं न ते किंचन विद्यते।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः॥*३१॥
महिमानं यदुत्कीर्त्य तव संह्रियते वचः।
श्रमेण तदशक्त्या वा न गुणानामियत्तया॥ ३२॥

द्याः–हे० त्वदर्चनस्मरणादयः दर्शनस्पर्शनादीन्द्रियवृत्तयो वा—चा० सु० ]। दर्शनस्पर्शनादयो व्यापारास्ता निवेदितफला ( निवेदितानि फलानि यासां ताः तथोक्ताः ) विज्ञापितकार्याः। तव स्मरणस्यैवैतत्फलम्। दर्शनादीनां तु किमदिति नावधारयाम इति भावः। ( " यस्य चेतसि वर्तेथाः स तावत्कृतिनां वरः " इति स्मरणेनैव पुण्यतामापादयतस्तव दर्शनस्पर्शनभाषणादयः सुतरां पावना इति किमु वक्तव्यम्।

३०. उदधेः ( उदकं धीयते इति उदधिस्तस्य ) रत्नानीव। [ इति रम्यतानन्तता च–हे० ]। विवस्वतस्तेजांसीव। [ इति तेजस्वितानन्तता च–हे० ]। दूराण्यवाङ्मनसगोचराणि ते चरितानि स्तुतिभ्यो व्यतिरिच्यन्ते। निःशेषं स्तोतुं न शक्यन्त इत्यर्थः। [एतेन श्रेष्ठत्वमूर्जस्वित्वमानंत्यं चोक्तं–चा०]। ( यथा न कोऽपि रत्नाकरस्य रत्नानि अशिशिररश्मेः दीधितीर्वा गणयितुं शक्नोति तथा वर्णनातीतस्य ते चरितानि स्तुतान्यपि नातिशयोक्तिदूषितानि भवन्ति तथा हि मनुष्यवाचा तेषां वर्णनमसुकरमेव )। [ इदानीं स्तुत्युपसंहारेणैव पूर्ववर्णनशंकां निरस्यति–हे० ]।

३१. अनवाप्तमप्राप्तम्। अवाप्तव्यं प्राप्तव्यं ते तव किंचन किंचिदपि न विद्यते। नित्यपरिपूर्णत्वादिति भावः। तर्हि किंनिबन्धने जन्मकर्मणी। तत्राह—लोकेति। एको लोकानुग्रहः।[ प्रजारक्षणं–चा० सु० ]। एव ते तव जन्मकर्मणोर्हेतुः। [ धर्मत्राणाय ते शरीरग्रहणं। उक्तञ्च गीतायां। " यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं " इति–चा० ]। परमकारुणिकस्य ते परार्थैव प्रवृत्तिः। न स्वार्थेत्यर्थः।

३२. तव महिमानमुत्कीर्त्य वचः संह्रियत इति यत्। तद्वचःसंहरणं श्रमेण वाग्व्यापारश्रान्त्या। अशक्त्या कार्त्स्न्येन वक्तुमशक्यत्वाद्वा। गुणानामियत्तया। [ इदं परिमाणं अस्य इयान् तस्य भावः इयत्ता तया–हे० ]। एतावन्मात्रतया न। [ परिच्छिन्नतया न यावन्तो गुणास्तावन्तो वर्णिता इति वाक्यनिवृत्तिर्नास्तीति भावः–चा० सु० ]। तेषामानन्त्यादिति भावः। ( अतः किमपि नावशेषं वच इतिबुद्ध्या तव गुणानुवादस्योपसंहारो न क्रियते अपि तु अतःपरं वक्तुमशक्यमिति निश्चयेन )।

---

30. As the jewels of the ocean are beyond enumeration, as the rays of the sun baffle description, so thy inscrutable ( i. e. incomprehensible ) nature transcends all praise.

31. There is nothing which thou hast not attained and therefore requirest to obtain it. It is an act of favour to the people that Thou dost condescend to take birth and act like human beings.

32 That the speech is cut short after having praised thy glories—is due to exhaustion or inability and not on account of the limited nature of thy qualities.

---

30. A. तोयानि for रत्नानि. B. C. E. H. with He. Chà. Din. Va. Su. Dhar. and Vija., दूरेण, D. रूपेण for दूराणि.

32. E. reads तदशक्तं for तदशक्त्या.

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥
तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।
भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥
अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान्परिभूतार्णवध्वनिः ॥ ३५ ॥
पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥

३३. इति ते सुरास्तमधोभूतमक्षजमिन्द्रियज ज्ञानं यस्मिंस्तमधोक्षजम् । [ अधःकृतानि जितानि अक्षाणि इन्द्रियाणि यैस्ते अधोक्षजाः वसुदेवादयः तेभ्यो जायते कृष्णादिरूपेणेति । यद्वा । अधःकृतं अक्षजं इन्द्रियज ज्ञानं येन सः । तत्परोक्षप्रियो हरिरिति पुराणं । "परोक्षप्रिया इव हि देवाः" इति श्रुतिश्च—हे० ] । विष्णु प्रसादयामासुः प्रसन्नं चक्रुः । हि यस्मात्परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिर्भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः । "युक्ते क्ष्मादावृते भूतम्" इत्यमरः । न स्तुतिर्न प्रशंसामात्रम् । महान्तो हि यथार्थवचनसुलभा इति भावः । परमे स्थाने तिष्ठतीति परमेष्ठी । "परमे कित्" इत्युणादिसूत्रेण तिष्ठतेरिनिः । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । "स्थास्थिन्स्थॄणाम्" इति वक्तव्यात्षत्वम् । ( त्वद्भिन्नस्यान्यस्य स्तुतिवचनानि अर्थवादपराणि मिथ्यावाददूषितानि च भवन्ति अस्मत्कृतयं स्तुतिस्तु असीमगुणसंपन्नस्य तव कतिपयमात्रगुणव्याख्यानपरा ) ।

३४. सुरा देवाः । कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्यस्य तस्मै । लक्षितप्रसादायेत्यर्थः । अन्यथा अनवसरविज्ञप्तिर्मुखराणामिव निष्फला स्यादिति भावः । तस्मै विष्णवेऽप्रलये । प्रलयाभावेऽप्युद्वेलादुन्मर्यादात् । नैर्ऋता राक्षसः । [ ऋगतौ । निऋच्छतीति निर्ऋतिः निर्ऋतिरेव नैर्ऋतिः नैर्ऋतेरलक्ष्म्या वा अपत्यं । "स्यादलक्ष्मीस्तु नैर्ऋतिः" इति—हे० ] । स एवोदधिः । तस्माद्भयमाचख्युः कथितवन्तः । [ अब्धिस्तु प्रलयोद्वेलात् स तु सदैव—हे० ] । ( प्रलयकालोदधयो वेलामुत्तीर्य जगदाप्लावयन्ति अय निशाचरसमुद्रस्तु तद्व्यतिरिक्तेऽपि काले परित्यक्तमर्यादः सन् अस्माकं भीतिमुत्पादयतीति भावः ) ।

३५. अथ वेलायामब्धिकूले समासन्नानां संनिकृष्टानां शैलानां रन्ध्रेषु गह्वरेष्वनुनादिना प्रतिध्वानिमता स्वरेण परिभूतार्णवध्वनिः ( परिभूतः पराभवं प्रापितः अर्णवस्य समुद्रस्य ध्वनिरुद्घोषो येन सः ) तिरस्कृतसमुद्रघोषो भगवान् ( भगः ऐश्वर्यं अस्यास्तीति भगवान् हरिः ) उवाच । ( समुद्रघोषादपि गम्भीरतरेण स्वरेण वाचमाददे ) ।

३६. पुराणस्य चिरंतनस्य कवेः ( वेदकर्तुः ) तस्य भगवतो वर्णस्थानेषूरःकण्ठादिषु समीरिता सम्यगु-

33. Thus those gods propitiated Him who baffles the perception of senses, for it was no praise of the Supreme Being but a mere exposition of truthful facts

34. The gods mentioned to him whose favour was clearly manifested (expressed) by his enquiry after their welfare, the danger arising from the ocean of the Rakshasas that had overflowed its banks at a time other than that of final dissolution

35. Then the Divine Being began to address them in a voice that resounded in the caverns of the mountains situated on the sea-shore—a voice in which the sound of the ocean itself was drowned.

36. The speech of that Primeval Bard pronounced (articulated) from (by the help of) the different organs of speech and therefore becoming distinct and correct was certainly successful (had gained its end).

35. B. D. E. H. with He. Chá. Din. Va. Su. Dhar. Vijay. and Vija., °रन्ध्रानुवादिना, C. °रन्ध्रानुकारिणा for °रन्ध्रानुनादिना.
36. B. C. E. H. with Chà. Din. Va. Vijay. and Su.. पदसंस्कारा for कृतसंस्कारा.

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७॥
जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८ ॥
विदितं तप्यमानं च तेन मे भुवनत्रयम् ।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥
कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥

च्चारिता । [ " अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च "–हे० ] । अत एव कृतः संपादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नः ।[ प्रकृतिप्रत्ययनिर्वचनं मंत्रतादिर्वा—हे० विहितव्याकरणालंकारादिसंस्कारः—चा० ] । यस्याः सा भारती वाणी चरितार्था कृतार्था बभूवैव । एवकारस्त्वसंभावनाविपरीतभावनाव्युदासार्थः । ( वेदकर्तुस्तस्य मुखादुच्चारिता वर्णस्वरादिविवेकापराधरहिता अधिगतसाफल्या बभूव वाग्देवी स्वरादिविशेषादर्थप्रतिपत्तेः । " पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता । प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी " इत्येव समार्थः श्लोकांशः ) ।

३७. विभोर्विष्णोर्वदनादुद्गता निःसृता । सदशनज्योत्स्ना दन्तकान्तिसहिता । इदं च विशेषणं धावल्यातिशयार्थम् । अत एव सा भारती । चरणाद्गङ्गा निर्याता चासौ शेषा च निर्यातशेषा । [ निर्यातः शेषः यस्याः सा—चा० ] । निःसृतावशिष्टेत्यर्थः । " स्त्रियाः पुंवत्—" इत्यनुवर्त्य " पुंवत्कर्मधारयः—" इति पुंवद्भावः । निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । निर्यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव । ऊर्ध्वप्रवर्तिनी ऊर्ध्ववाहिनी गङ्गेव । ( " गंगा विष्णुपदा जह्नुतनया देवनिम्नगा " इति विश्वः ) । बभौ ( बभासे ) । इत्युत्प्रेक्षा । यदाह भगवांस्तदाह—

३८. हे देवा वो युष्माकमनुभावपराक्रमौ महिमपुरुषकारौ रक्षसा रावणेन । अङ्गिनां शरीरिणां प्रथममध्यमावुभौ गुणौ सत्वरजसी तमसेव तमोगुणेनेव । ( " राहौ ध्वान्ते गुणे तमः " इत्यमरः ) । आक्रान्तौ जाने । वाक्यार्थः कर्म ।

३९. किं च । अकामेनानिच्छयोपनतेन प्रमादादागतेनैनसा पापेन साधोः सज्जनस्य हृदयमिव । तेन रक्षसा तप्यमानं संतप्यमानम् । तपेर्मौवादिकात्कर्मणि शानच् । भुवनत्रयं च मे विदितम् । मया ज्ञायत इत्यर्थः । [ " ते मे शब्दौ निपातेषु त्वया मयेति तस्मिन्नर्थे " इति वामनः–हे० ] । " मतिबुद्धि–" इत्यादिना वर्तमाने क्तः । " क्तस्य च वर्तमाने" इति षष्ठी ।

४०. किं च । एककार्यत्वात् ( एकं कार्यं ययोस्तौ तयोर्भावः तस्मात् ) आवयोरेककार्यकत्वाद्धेतोः । कार्येषु कर्तव्यार्थेषु विषयेषु वज्रिणेन्द्रेणाभ्यर्थ्यः । इदं कुर्विति प्रार्थनीयः । नास्मि । तथा हि । वातः

37. That speech proceeding from the mouth of Lord mixed with the lustre of his teeth looked like a stream of the Ganga–the residue of what had flown from his feet, flowing in an upward direction.

38. I know your authority and prowess to have been superseded by the demon ( Râvana ), as the first and the middle ( i. e. second ) qualities ( Satva and Rajas ) of embodied beings ( animals ) are overpowered by the quality of darkness ( the third or Tamas ).

39. And it is known to me that the three worlds have been oppressed by him, as the heart of a good man by the sin unconsciously committed.

40. Owing to the sameness of business no request to me in these affairs on the part of Indra is needed. For the wind, of itself, assumes the office of a helper to fire.

39. E. omits the 39th stanza.

स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।
स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥
स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥
धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३ ॥
सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

( वायुः ) स्वयमेवाग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति । न तु वह्निप्रार्थनया । [ तथा कुमारसंभवे । " समीरणः प्रेरयिता भवेति । व्यादिश्यते केन हुताशनस्य " इति–हे० ] । इत्येवकारार्थः । प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः । न तु परप्रार्थनया । स्वार्थश्चायं ममापीत्यर्थः । पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकन्धरेण यद्दशमं शिरोऽवशेषितं तन्मच्चक्रार्थमित्याह—

४१. स्वासिधारया स्वखड्गधारया परिहृतः । अच्छिन्न इत्यर्थः । दशमो मूर्धा मे मम चक्रस्य कामं पर्याप्तः । [ स्वेच्छया–हे० ] । लभ्यांशः छेद्यभाग इव तेन रक्षसा स्थापितः । [ चन्द्रहासः नवशिरांसि अच्छिनत् दशमं यन्नाच्छैत्सीत्तन्न मे चक्रभागः इत्युपेक्षा–चा० पुरा महादेवस्याग्रे स्वस्य नवशिरांसि छित्वा पूजां कृत्वा यद्दशमं शिरो न छिन्नं तन्मया छेद्य–सु० । अत्र हि रामायणं । " दशवर्षसहस्रं तु निराहारो दशाननः । पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः । एवं वर्षसहस्राणि गतानि नियतात्मनः । दशवर्षसहस्र तु निराहारो दशाननः । पूर्णे वर्षसहस्रे तु दशमं दशमं शिरः । छेत्तुकामं दशग्रीवे प्राप्तस्तत्र पितामहः । पितामहस्तु सुप्रीतः सार्धं दैवैरुपस्थितः । तव तावद्दशग्रीव प्रीतोस्मीत्यभ्यभाषत"–हे०] । तत्सर्वथा तमहं हनिष्यामीत्यर्थः । तर्हि किं प्रागुपेक्षितमत आह—

४२. किं तु स्रष्टुर्ब्रह्मणो वरातिसर्गाद्वरदानाद्धेतोः । मया तस्य दुरात्मनः रिपोः रावणस्यात्यारूढमत्यारोहणम् ।[आक्रमोत्कर्षः–हे०सु० ] । अतिवृद्धिरित्यर्थः । नपुंसके भावे क्तः । भोगिनः सर्पस्यात्यारूढं । [ दौष्ट्यं–चा० सु० ] । चन्दनेनेव । सोढम् । चन्दनद्रुमस्यापि तथा सहनं स्रष्टुर्नियतेरिति द्रष्टव्यम् । [ यथा चन्दनेन सर्पस्यारोहणं सह्यते तथा मयापि–सु० ] । संप्रति वरस्वरूपमाह—

४३. स राक्षसस्तपसा प्रीतं संतुष्टं धातारं ब्रह्माणम् । मर्त्येषु ( मनुष्येषु ) विषये आस्थापराङ्मुखः । [ आस्थायां पराङ्मुखः । आस्था तात्पर्यं संभावना वा–हे० ] । आदरविमुखः सन् । मर्त्याननादृत्येत्यर्थः । दैवादष्टविधात्सर्गाद्देवसृष्टेरवध्यत्वं ययाचे हि । तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—

४४ सोऽहम् दशरथस्यापत्यं पुमान्दाशरथिः । " अत इञ् " इति इञ्प्रत्ययः । रामो भूत्वा तीक्ष्णैः

41. The tenth head of the demon which has been spared from the edge of his own sword has been, as it were, reserved by him as a worthy tribute to my disk ( as a full portion fit to be severed by my quoit )

42. I have borne the audacious insolence of that wicked enemy in consequence of a boon granted to him by Brahmâ, as a sandal tree bears annoyance caused by a snake

43. That demon averse to any regard ( regardless ) for mortals asked of the Creator( Brahmâ ) who was pleased with his asceticism immunity from death at the hands of a divine creature.

44 Such as I am taking birth as the son of Das'aratha, I shall make the heap of his lotus-like heads a fit oblation for the battle-field with my sharp arrows

41. D. °परिवृतः for °परिहृतः; D.लभ्यांश, B.with Din.Châ.Vijay. Va. andSu., लभ्यांश, H. लभ्यांग for लभ्यांश. Also Malli. who says "लम्यांशः" इति पाठे लम्यांशः प्राप्तव्यभाग इत्यर्थः ।

42. B. C.E. H. च for तु; B. C. E.H. with He. Vijay. Va.and Su., सह्यं for सोढं.

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥
वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥
मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

शरैस्तस्य रावणस्य शिरांस्येव कमलानि तेषामुच्चयं राशिं रणभूमेः ( समरभुवः ) बलिक्षमं पूजार्हं करिष्यामि । पुष्पविशदा हि पूजेति भावः । ( तस्य दुरात्मनः शिरांसि समरांगणस्य बलिरूपेणप रिणमयिष्यामि ) ।

४५. हे देवाः । यज्वभिर्याज्ञिकैः विधिवत्कल्पितमुपहृतं भागं हविर्भागं मायाविभिर्मायावद्भिः । “ अस्मायामेधास्रजो विनिः ” इति विनिप्रत्ययः । निशाचरै रक्षोभिरनालीढमनास्वादितं यथा तथाचिरात्पुनरादास्यध्वे ग्रहीष्यध्वे । [ मया रावणे हते सति लोके यज्ञा भविष्यन्ति—हे० ] । ( पुनरपि यज्ञभागं रक्षोभिरनुपहृतमत्तुं प्रभविष्यथेत्यर्थः ) ।

४६. मरुतां देवानां [ यद्वा वायूनां । “ द्यौः खं नभोऽन्तरिक्षं च मेघवायुपथो यथा ” इति धनञ्जयः —हे० मरुतां देवानां पथीति व्याख्यायाम् मेघाच्छादनं न संभवति इति—चा० ] । पथि व्योम्नि । वैमानिकाः विमानैश्चरन्तः । “ चरति ” इति ठक्प्रत्ययः । मेघावरणतत्परा रावणभयान्मेघेष्वन्तर्धानतत्पराः पुण्यकृतः सुकृतिनः पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन यः संक्षोभो भयचकितं तं त्यजन्तु । “ संक्षोभो भयचकितम् ” इति शब्दार्णवः । ( पुष्पकविमानदर्शनेन रावणगमनशङ्कया मेघेष्वात्मनिगूहनं कुर्वन्तो देवा अधुना निर्भयाः क्रियन्ते इत्यर्थः ) ।

४७. हे देवाः यूयं । शापेन नलकूबरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कचग्रहाः केशाकर्षास्तैरदूषिताननुपहता न्स्वर्गबन्दीनां हृतस्वर्गाङ्गनानां वेणीबन्धान्मोक्ष्यध्वे । पुरा किल नलकूबरेणात्मानमभिसरन्त्या रम्भाया बलात्कारेण संभोगात्क्रुद्धेन दुरात्मा रावणः शप्तः । स्त्रीणां बलाद्ग्रहणे मूर्धा ते शतधा भविष्यतीति भारतीया कथानुसंधेया । [ अनिच्छन्त्याः नार्याः पातिव्रत्यभङ्गात् तव मूर्धा शतधा विशीर्णः स्यादिति नलकूबरस्य शापः । तथा राघवाभ्युदये । “ जोषमासुरमर्यासि [ आस्वरमयासि ] बलाच्चेन्मामहन् [ त्वामहं ] कथय कोऽत्रनियन्ता । पुण्यपाक [ पुण्यकाम ] इव सर्वसतीनां अस्ति पाप नलकूबरशापः ”—हे० पुरा कुबेरपुत्रं नलकूबरमभिसरन्ती रंभामवेक्ष्य काममोहितरावणो निजमदग्रहिलोऽमत एव केशेषु जग्राह ततः साशपत् । अरे अद्यारभ्य ह्यकामयमानां कामपि स्त्रियं गृह्णासि ततस्तव मूर्द्धा शतधा दलिष्यतीति अत एव तेन स्वर्गबंदीनां वेणीबंधा अदूषिता इत्यर्थः—चा० ] । ( रावणेन बन्दीकृताः सुरस्त्रियः भवद्भ्यो वियोगादेकवेणीधराः सन्त्यधुना अचिरेणैव तद्वधे मया कृते भवन्तस्ताभिः सार्धं पुनः संगंस्यन्ते ता अपि पुनर्नैकवेणीधराः स्थास्यंति ) ।

---

45. In a short time, O Gods, you shall again receive the portion (of the offerings) properly offered to you by the sacrificers and untasted (or undefiled) by the night-rangers possessing magical powers.

46. Let the gods (i. e. पुण्यकृत ), riding on their heavenly balloons, hitherto driven to conceal themselves in the clouds, lay aside their dread at the sight of the Pushpaka in the path of the winds (i. e. the sky).

47. You shall, O gods, set free the braids of hair of the captive women of heaven—the braids

---

45. H. reads आदास्यध्वं for आदास्यध्वे.

47. D. and Su., मोक्ष्येऽहं for मोक्ष्यध्वे; B. C. E. H. with He. Va. Dhar. Vija. Vijay. and Su., सुरबंदीनां for स्वर्गबन्दीनां.

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥
पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥
अथ तस्य विशांपत्युरन्ते काम्यस्य कर्मणः ।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥
हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥

४८. स कृष्णः विष्णुः स एव मेघो नीलमेघश्च । विश्रवसोऽपत्यं पुमानिति विग्रहे रावणः । विश्रवः-शब्दाच्छिवादित्वादणि विश्रवसो " विश्रवणरवणौ " इत्यन्तर्गतसूत्रेण विश्रवःशब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम् । स एवावग्रहो वर्षप्रतिबन्धः । तेन क्लान्तं शुष्यमाण मरुतो देवा एव सस्यं तत्। इत्येवंरूपेण वागमृतेन वाक्सलिलेन । " अमृत यज्ञशेषे स्यात्पीयूषे सलिले घृते " इति विश्वः । अभिवृष्याभिषिच्य तिरोदधेऽन्तर्दधे । [ मेघो हि अवग्रहेण क्लान्त शस्यं अमृतेन जलेन अभिवृष्य अन्तर्दधाति–हे० चा० ] । ( अवग्रहविशोषितं शस्यं प्रति मेघैः काले अभिवृष्टं जलमिव तत्कृतमाश्वासवचनं देवानामतीव प्रीतिकरं बभूव ) ।

४९. पुरुहूतप्रभृतयः । [ पुरु भूयिष्ठं हुतं यस्य यज्ञेष्वाह्वानात् पुरुहूतः इन्द्रः प्रभृतिरादिर्येषां ते–हे० ] । इन्द्राद्याः सुराः सुरकार्ये रावणवधरूप उद्यत विष्णुमंशैर्मात्राभिः । द्रुमाः पुष्पैः स्वांशैर्वायुमिव । अनुययुः । [ प्रभृतयते आदौ क्रियते इति प्रभृतिः अनव्यय–हे०] । सुग्रीवादिरूपेण वानरयोनिषु जाता इत्यभिप्रायः । ( एतदेव हेमाद्रिचारित्रवर्द्धनसुमतिविजयादयः ) ।

५०. अथ तस्य विशांपत्युर्दशरथस्य सर्वान्धिनः काम्यस्य । [ कामयितुमर्हस्यार्थात्पुत्रार्थं वांछितस्य–हे० सु० ] । कर्मणः पुत्रकामेष्टेः ।( किंचिद्दृष्टमभिसधाय यत्कार्यं क्रियते तत्काम्यमित्यभिधीयते )। अन्तेऽवसानेऽग्नेः पावकात्पुरुषः कश्चिद्दिव्यः पुमानृत्विजां ( याज्ञिकानां ) विस्मयेन सह प्रबभूव प्रादुर्बभूव । तदाविर्भावात्तेषामपि विस्मयोऽभूदित्यर्थः ।

तमेव पुरुषं विशिनष्टि—

५१. आद्यस्य पुंसो विष्णोरनुप्रवेशादधिष्ठानाद्धेतोस्तेन दिव्यपुरुषेणापि दुर्वहम् । चतुर्दशभुवनोदरस्य भगवतो हरेरतिगरीयस्त्वाद्वोढुमशक्यम् । हेमपात्रगत ( सुवर्णभाजने स्थापितं ) पयसि पक्वं चरु पयश्चरुं पाय-

undefiled by the forcible seizing of ( the hair by ) Paulastya fettered as he is by the curse ( of Nalakubara ).

48. He like a dark watery cloud disappeared after having showered the water of speech on the crop-like gods dried up by the drought of Rávana.

49 The gods Indra and others followed Vishnu who was about to do ( undertake ) the commission of the gods ( work for the interest of gods ) with their portions, as trees follow the wind with flowers ( their own portions ).

50. Then arose out of the fire a being ( along ) with wonder of the officiating priests, at the close of the sacrifice of that Lord of men, which was performed for a particular object ( viz. that of obtaining issue ).

51. That being held in his hands some food consisting of rice boiled in milk, put in a

---

48. D. अभिषिच्य for अभिवृष्य.

51. B. E. H. with He. Vijay. and Va. हेमपात्रीकृतं. C. with Chà. Din. and Su., हेमापात्रकृतं for हेमपात्रगतं; C. D. E. H. with He. Chá. Din. and Va., आददानः for आदधान. H. reads अतिदुर्वहं for अपि दुर्वहं.

प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥
अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।
प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३ ॥
स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥
अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।
अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥

सान्नं दोर्भ्याम् [ कराभ्यां । द्विवचनेनातिगुरुत्वं सूच्यते—चा० ] । "आदधानां वहन् । "अनवस्रावी निरूष्मपक्व ओदनश्चरुः" इति याज्ञिकाः । [ "हव्यपाके चरुः पुमान्" इत्यमरः । "हव्यपाकपुतश्चरुः" इत्यभिधानचिन्तामणिः—हे० सु० ] ।

५२. नृपो दशरथः प्राजापत्येन प्रजापतिसंबन्धिना पुरुषेण । [ प्रजापत्यो यज्ञपुरुषः वशिष्ठो वा तेन—हे० प्रजापतिर्ब्रह्मा तस्यापत्य वशिष्ठः तेन—चा० वशिष्ठेन दिव्यपुरुषेण वा—सु० ] । उपनीतं न तु वशिष्ठेन । "प्राजापत्यं नरं विद्धि मामिहाभ्यागत नृप" इति रामायणात् । तदन्नं पायसान्नम् । [ अद्यते इत्यन्नं—हे० ] । उदन्वतोदधिनाविष्कृतं प्रकाशितं पयसां ( जलानां ) सारममृतं वृषा वासव इव । "वासवो वृत्रहा वृषा" इत्यमरः । प्रत्यग्रहीत्स्वीचकार ।

५३. तस्य राज्ञो दशरथस्यान्यैर्दुर्लभा असाधारणा गुणा अनेन कथिता व्याख्याताः । यद्यस्मात्त्रयो लोकास्त्रैलोक्यम् । [ त्रय एव लोकाः—हे० ] । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य प्रभवः ( प्रभवत्यस्मादिति ) कारणं । [ उत्पत्तिस्थानं—चा० सु० ] । विष्णुरपि तस्मिन्राज्ञि प्रसूतिमुत्पत्तिं चकमे कामितवान् । [ अयादय आर्धधातुके—हे० ] । त्रिभुवनकारणस्यापि कारणमिति परमावधिर्गुणसमाश्रय इत्यर्थः । ( यत् कारणानामपि कारणं आदिपूरुषस्तं पितृत्वेनांगीकृतवानतः जगद्गुरोरपि गुरुः सोऽलौकिकगुणसंपन्न इति गम्यते इत्यभिप्रायः ) ।

५४. स नृपः । चरुसंज्ञास्य संजाता चरुसंज्ञितम् । वैष्णवं तेजः पत्न्योः कौसल्याकैकेय्योः । [ इति दानस्य विवक्षया षष्ठी—चा० ] । द्यौश्च पृथिवी च द्यावापृथिव्यौ । "दिवसश्च पृथिव्याम्" इति चकाराद्दिवःशब्दस्य द्यावादेशः । तयोर्द्यावापृथिव्योः । अह्नः पतिरहर्पतिः ( सूर्यः ) । "अहरादीनां पत्यादिषु वा रेफः" इत्युपसंख्यानाद्वैकल्पिको रेफस्य रेफादेशो विसर्गापवादः । प्रत्यग्रम् ( नूतनं ) आतपं बालातपमिव । विभेजे । विभज्य ददावित्यर्थः । पत्नीत्रये सति द्वयोरेव विभागे कारणमाह—

५५. तस्य राज्ञः । कौ पृथिव्यां सलति गच्छतीति कोसलः । "सल गतौ" । पचाद्यच् । कुशब्दस्य

golden vessel, difficult to be borne even by him by reason of its being charged with the portion of the First Being ( lit on account of the entrance of the Primeval Being into it ).

52. The King accepted the food presented to him by that being of Prajâpati, as Indra took the essence of waters ( i. e. ambrosia ) disclosed by the ocean.

53. That that king was possessed of qualities unattainable by any other was proved from the fact that even He who was the source of the three worlds wanted to be born as a son to him.

54. He divided the lustre ( energy ) of Vishnu called by the name of चरु between his two wives, as the lord of the day ( the sun ) divides his morning rays between heaven and the earth.

55. To him Kausalyâ was one whom he honoured ( being the eldest wife ) and the other who

53. C. E. H. with Din. Vija. and Châ., प्रवृत्तिं. B. with Va. Vijay. and Su., निवृत्तिं for प्रसूतिं; D. यः for यत्.

ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।
चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६ ॥
सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ॥ ५७ ॥
ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥

पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । " वृद्धेत्कोसलाजादाञ्ञ्यङ् " इति ञ्यङ् । " यङश्चाप् " इति चाप् । अतएव सूत्रे निर्देशात्कोसलशब्दो दन्त्यसकारमध्यमः । अर्चिता ज्येष्ठा मान्या । केकयवंशजा कैकेयी प्रियेष्टा । [ इति प्रेमास्पदं—चा० ] । अतो इतोरीश्वरो भर्ता नृपः सुमित्रां ताभ्यां कौसल्याकैकेयीभ्यां संभावितां भागदानेनमानितामैच्छदिच्छति स्म । [ कौसल्याकैकेय्यौ क्षत्रियसुते । सुमित्रासंकरजा इति भट्टिकाव्ये जयमङ्गलकारः—हे० ] । एवं च सामान्य तिसृणां च भागप्रापणमिति राज्ञ्युचितज्ञता कौशलं च लभ्यते ।

५६. बहुज्ञस्य सर्वज्ञस्य । उचितज्ञस्येत्यर्थः । पत्युर्महीक्षितः क्षितीश्वरस्य । विशेषणत्रयेण राज्ञोऽनुसरणीयतामाह । चित्तज्ञे अभिप्रायज्ञे ते उभे पत्न्यौ कौसल्याकैकेय्यौ । चरोर्यावर्धभागौ समभागौ तयोर्यावर्धौ तौ च तौ भागौ चेत्यर्धभागावेकदेशौ । ताभ्यामर्धार्धभागाभ्याम् । " पुंस्यर्धोऽर्धं समेंऽशकं " इत्यमरः । तां सुमित्रामयोजयतां युक्तां चक्रतुः । [ निजान्नस्यार्द्धमर्द्धं सुमित्रायै दत्तवत्याविति भावः—हे० चा० सु० ] । अयं च विभागो न रामायणसवादी । तत्र चरोरर्धं कौसल्याया अवशिष्टार्धं कैकेय्यै शिष्टं पुनः सुमित्राया इत्यभिधानात् । किं तु पुराणान्तरसंवादो द्रष्टव्यः । उक्तं च नारसिंहे—" ते पिण्डप्राशने काले सुमित्रायै महीपतेः । पिण्डाभ्यामल्पमल्पं तु स्वभगिन्यै प्रयच्छतः" इति । एवमन्यत्रापि विरोधे पुराणान्तरात्समाधातव्यम् । न चैवं सत्यपीर्ष्या स्यादित्याह—

५७. सा सुमित्रोभयोरपि । समान एकः पतिर्ययोस्तयोः सपत्न्योः । " नित्यं सपत्न्यादिषु " इति ङीप् । नकारादेशश्च । भ्रमरी भृङ्गाङ्गना । [ " जातेरस्त्रीविषयादयोपधात् " इति ङीप्—चा० ] । वारणस्य गजस्य मदनिस्यन्दरेखयोरिव ( दानक्षरणरेखयोरिव ) । गण्डद्वयगतयोरिति भावः । प्रणयवती प्रेमवत्यासीत् । सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमानं वारणस्येति ।

५८. ताभिः कौसल्यादिभिः प्रजानां । [ संततीनां लोकानां वा—हे० ] । भूत्या अभ्युदयाय । देव-

---

was born of the line of Kekaya kings was his beloved wife. Hence the king wished Sumitrà to be honoured with a share by them both.

56. Both the wives of that lord of the earth who knew all ( that was proper ) knowing that to be the intention of their husband, gave her each a half of her own portion of that Charu

57. She too was tenderly attached even to both of her rivals ( the fellow-wives of the king ), as a female black-bee equally loves both the streams of ichor flowing from the two cheeks of an elephant.

58. A fœtus sprung from the portion of the Supreme Being was borne in their womb by them ( queens ) for the good of the people, as a watery embryo by the name Amrita is borne in their womb by the solar rays.

56. A. Vijay. and He. महीक्षितः, B. Din. and Chà. महीक्षितां, C. and Dhar., महीभुजां, D. E. H. and Su. महीभृतः; B. Vijay. and Su., भागेन for भागाभ्यां.

57. D. अपि for हि; A. °निस्यन्दरेखयोः. D. with He. and Va., °निस्यन्दलेखयोः. B. C. E. with H. Chà. Din. Vijay. and Su., °निष्पन्दलेखयोः.

समभापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः।
अन्तर्गतफलारम्भाः सस्यानामिव संपदः ॥ ५९ ॥
गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः।
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ॥ ६० ॥
हेमपक्षप्रभाजालं गगने च वितन्वता।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१ ॥

स्य विष्णोरंशः संभवः कारणं यस्य स गर्भः। सूर्यस्येमाः सौर्यः। ताभिः सौरीभिः। "सूर्यतिष्य—" इत्युपधायकारस्य लोपः। अमृता इत्याख्या यासां ताभिः। जलवहनसाम्यान्नाडीभिरिव। नाडीभिर्वृष्टिविसर्जनीभिर्दीधितिभिरपां विकारोऽम्मयो जलमयो गर्भ इव। दध्रे धृतः। जातावेकवचनम्। गर्भा दधिर इत्यर्थः। अत्र यादवः—"तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने। शतत्रयं हिमोत्सर्गे तावद्गर्भस्य सर्जने। आनन्दाश्च हि मेध्याश्च नूतनाः पूतना इति। चतुःशतं वृष्टिवाहास्ताः सर्वा अमृताः स्त्रियः" इति। [ जलोपमया गर्भाणां लोकानन्दस्य कारणं–हे० ]। [ सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः" इत्यमरः–हे० ]।

५९. समं युगपदापन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ताः। [ समं एककालं आपन्नं प्राप्तं सत्त्वं गर्भो याभिस्ताः–हे०। "प्राप्तापन्ने च द्वितीयया" इत्यनेन आपन्नाः सत्त्वं आपन्नसत्त्वाः इति विग्रहो द्रष्टव्यः ]। आपन्नसत्त्वा गर्भिण्यः। "आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः। अत एवापाण्डुरत्विषः ( आपाण्डुरा त्विट् कान्तिर्यासां तास्तथोक्ताः ) ईषत्पाण्डुरवर्णास्ता राजपत्न्यः। अन्तर्गता गुप्ताः फलारम्भाः फलप्रादुर्भावा यासां ताः। सस्यानां संपद इव। रेजुर्बभुः। [ सस्यसंपदोऽप्यापाण्डुरत्विषः–हे० ]। संप्रति तासां स्वप्नदर्शनान्याह—

६० सर्वास्ताः स्वप्नेषु। जलजः शङ्खः। जलजासिगदाशार्ङ्गचक्रैः। [ नंदकपाञ्चजन्यकौमोदकीशार्ङ्गधनुःसुदर्शनैः–हे० ]। लाञ्छिताः ( चिह्निताः ) मूर्तयो येषां तैर्वामनैर्ह्रस्वैः पुरुषैर्गुप्तं रक्षितमात्मानं स्वरूपं। [ जातावेकवचनं–हे० ]। ददृशुः।

६१. किं चेति चार्थः। हेम्नः सुवर्णस्य पक्षाणां प्रभाजालं कान्तिपुञ्जं वितन्वता विस्तारयता। वेगेनाकृष्टाः पयोमुचो मेघा येन तेन। सुपर्णेन गरुत्मता गरुडेन गगने ताः ( कौसल्यादयो राजपत्न्यः ) उह्यन्ते स्मोढाः। ( स्वप्नेष्वित्यर्थः )।

---

59. The Queens who conceived all at the same time and whose appearance (therefore) became pale shone like the thriving crop (lit the thriving of the crop) with the appearance of the fruits hidden within.

60. They all saw in dreams that their own shapes were guarded by dwarfs whose persons were furnished with (lit. marked with) conches, swords, maces, S'ārnga bows and quoits (*Chakras*).

61. (They also saw that) they were being borne on Garuda in the sky, who displayed the mass of splendour of his golden wings and who on account of his great speed dragged the clouds in his train.

60. A. E. H. with Va. Vijay. and Su., जलजासिगदाशार्ङ्गचक्र°. So also noticed by Châ. D. जलजासिखड्गगदाचक्र,° D2. जलजासिशंखगदाचक्र°, B. C., with He. Châ. Dhar. and Vija., जलजासिशंखगदाशार्ङ्गचक्र.°

61. B. C. E. with He. Chá. Din. Va. Su. Dhar. Vijay. and Vija., हेमपत्र° H. हेमपात्रं for हेमपक्ष°; D. विचिन्वता for वितन्वता; D. उह्यमानं for उह्यन्ते स्म D. H. वेगात्कृष्ट for °वेगाकृष्ट°.

बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥
कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥
ताभ्यस्तथाविधान्स्वप्नाञ्छ्रुत्वा प्रीतो हि पार्थिवः ।
मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४ ॥
विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥

६२. किं च । स्तनयोरन्तरे मध्ये विलम्बिनं लम्बमानं । [ विलग्नं–चा० ] । न्यस्यत इति न्यासः । कौस्तुभ एव न्यासस्तम् । [ आलिंगनवशात् कौस्तुभमणिमुद्राबिम्बं इति–चा० ] । पत्या कौतुकान्न्यस्तम् । [ भूलोकं गच्छता विष्णुना भूलोकं प्रयोजनार्थमिति श्रियो वक्षसि स्थापित इत्यागमः–हे० ] । कौस्तुभमित्यर्थः । बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्यास्तया लक्ष्म्या पर्युपास्यन्तोपासिताः ।

६३. किं च । दिवि भवायां दिव्यायां । [ दिव्याशब्देन मंदाकिनी उच्यते–हे० ] । त्रिस्रोतस्याकाशगङ्गायां कृताभिषेकैः कृतावगाहैः । परं ब्रह्म वेदरहस्यं गृणद्भिः पठद्भिः । [ उत्कृष्टं ब्रह्म परमात्मानं स्तुवद्भिरिति–चा० सु० ] । सप्तभिर्ब्रह्मर्षिभिः कश्यपप्रभृतिभिः । [ " मरीचिरंगिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तर्षीनाहुश्चित्रशिखण्डिनः " इति प्रतापमार्तण्डः—हे० ] । उपतस्थिरे उपासांचक्रिरे ।

६४. पार्थिवो दशरथस्ताभ्यः पत्नीभ्यः। " आख्यातोपयोगे " इत्यपादानत्वात्पञ्चमी । तथाविधानुक्तप्रकारान्स्वप्नाञ्छ्रुत्वा प्रीतः सन् । आत्मानं जगद्गुरोर्विष्णोरपि गुरुत्वेन पितृत्वेन । [ जगन्ति गच्छन्ति तेषां जगतां गुरुः जगद्गुरुः तस्य भावः गुरुत्वं तेन–सु० ] । हेतुना परार्ध्यं सर्वोत्कृष्टं मेने हि । ( अहो मे भाग्यं यद् ब्रह्माण्डगुरोरपि गुरुरहमिदानीं संजात इत्यात्मनि बहुमानं चक्रे ) ।

६५. एक एकरूपो विभुर्विष्णुस्तासां राजपत्नीनां कुक्षिषु गर्भेषु। प्रसन्नानां निर्मलानामपां ( अम्भसां )

---

62. ( They saw that ) they were waited upon by Lakshmi with a fan of a lotus in her hand, bearing the Kaustubha jewel that suspended between her breasts, and which was deposited with her by her husband.

63. ( They moreover saw that ) they were worshipped by the seven Brahmanical sages who had performed their ablutions in the celestial triple-streamed river ( गंगा ) and who were reciting the hymns of the Vedas.

64 Having heard from them, dreams such as these, the King being greatly pleased thought himself most excellent on account of his being ( in the position of ) the sire of the Lord of the Universe.

65. The all-pervading-Being, himself one, lived in their wombs dividing his self into manifold forms, as the reflected image of the moon though one displays itself ( in manifold forms ) in clear waters.

---

62. D. कौस्तुभं न्यास for कौस्तुभन्यासं. A.D. E. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., विलंबितं for विलंबिनं. D. उपास्यमानं for पर्युपास्यन्त.

63. B. and Va., महर्षिभिः for ब्रह्मर्षिभि; D. समुपस्थितं for उपतस्थिरे.

64. B. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija. अथ, C. H. अपि for हि; D. कृतार्थं for परार्ध्यं.

65. D. प्रभुः for विभुः.

**अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।**
**पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥**
**राम इत्यभिरामेण वपुषा तस्य चोदितः ।**
**नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥**
**रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।**
**रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८॥**

कुक्षिषु ( अभ्यन्तरेषु ) प्रतिमाचन्द्रः । ( प्रतिमा चासौ चन्द्रश्च ) । प्रतिबिम्बचन्द्र इव । ( " प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया " इत्यमरः )। अनेकधा विभक्तात्मा सन् । उवास । ( यथा गगनस्थचन्द्रमा एकोऽपि निर्मलजले संक्रान्तप्रतिमः अनेकधा प्रतीयते तथा विष्णुः राजपत्नीनामुदरेषु विभक्तात्मा अनेकधा प्रतीयते स्म ) ।

६६. अथ राज्ञो दशरथस्य सती प्रतिव्रता । [ प्रशस्ता वा—हे० ] । अग्र्या ( मुख्या ) चासौ महिषी चाग्र्यमहिषी । कौसल्या प्रसूतिसमये प्रसूतिकाले । ( दशमे मासि इत्यर्थः ) । ओषधिः । [ उषो दाहो धीयते इति ओषधिः इति जगद्धितत्वं देव्याः-हे० ]। नक्तं रात्रिसमये । तमोऽपहन्तीति तमोपहम् । [ ओषधिषु तेजः स्थापयित्वा रविरस्तं यातीत्यागमः-सु० ] । " अपे क्लेशतमसोः " इति डप्रत्ययः । ज्योतिरिव । [ अपुत्रस्य लोका न सन्त्येवंरूपं तमोऽपहन्तीति-चा० ] । तमोपहं तमोनाशकरं पुत्रं लेभे प्राप ।

६७. अभिरमतेऽस्मिन्नित्यभिरामं मनोहरम् । अधिकरणार्थे घञ्प्रत्ययः । तेन वपुषा चोदितः प्रेरितो गुरुः पिता दशरथः । [ वशिष्ठो वा-हे० ] । तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं । [ प्रथमोक्तया पश्चाद्रावणादिवधान्मंगलान्तरमपि । अन्वर्था चेयं संज्ञा तथा शृङ्गारप्रकाशे । " कर्मव्यति ( व्यव ) हारे हेतुसंज्ञा । सा चतुर्धा । अन्वार्थिकी, परिभाषिका, नैमित्तिकी, यादृच्छिकी चेति । अर्थमनुगता अन्वर्थिकी । यथा । परन्तपो नाम यथार्थनामेति । अनपेक्षितसंज्ञा पारिभाषिका । यथा । प्रतीप इत्यागमवृद्धसेवीति निमित्तापेक्षा नैमित्तिकी । यथा । तां पार्वतीत्याभिजनेन नाम्ना इति अविद्यमानव्युत्पत्तिर्यादृच्छिकी । यथा । लाङ्गलोल्लिख्यमानायाः यज्ञभूमेः समुद्गता । सीतेत्यमूर्मिलेयं तु द्वितीया जनकात्मजा " इति-हे० जगत्प्रथममंगलमित्युक्त्या पश्चाद्दशग्रीवादिवधेन मंगलानांतरं सूच्यते-चा० ] । राम इति नामधेयं ( नामैव नामधेयं ) चक्रे । अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थः । ( सूतिकागृहे प्रज्वलन्तो दीपास्तस्य शिशोः सहजेन धाम्ना हतत्विषः आलेख्यसमर्पिता इव पुनरुक्तभूता इव वा बभूवुः ) ।

६८. रघुवंशस्य प्रदीपेन प्रकाशकेन । अप्रतिमतेजसा ( अप्रतिममतुल्यं तेजो यस्य ) तेन रामेण रक्षागृहगताः सूतिकागृहगता दीपाः प्रत्यादिष्टाः प्रतिबद्धा इवाभवन् । [ " प्रत्यादेशो निराकृतिः " इत्य-

---

66. Then the Queen consort who was faithful to her husband obtained at the proper time of delivery, a son that removed the darkness of grief, like herbs ( phosphorent plants) obtaining at night the light that dispels darkness.

67. Induced by his charming form the father gave him the n me Ráma—a name which was most auspicious in the world.

68. By him who was the light of the race of Raghus and of unrivalled splendour, the lamps in the lying-in-chamber were, as it were, despi ed ( were eclipsed or out-shone ) .

66. A. B. C. E. H. with Châ. Din. Va. Vijay. and Su.. अग्रमहिषी for अग्र्यमहिषी.

67. B. C. E. H. with He. Châ. Din. Va. Su. Dhar. Vijay. and Vija., नोदितः for चोदितः.

68. E. reads रघुवंशे for रघुवंश°. D. and Su., शय्यागृह° for रक्षागृह°.

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥
कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगागमिता विद्या प्रबोधविनयाविव ॥ ७१ ॥
निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

मरः—हे० ]। महादीपसमीपे नाल्पाः स्फुरन्तीति भावः। [ तं तु दीपाः अयं तु प्रदीपः इत्युत्कर्षः—हे० ]। [ अरिष्टशय्यां परितः इत्यत्रोक्तेः परार्थाभावान्न चौर्यदोषः—हे० ]।

६९. शातोदरी ( शातं कृशं उदरं यस्याः सा ) गर्भमोचनात्कृशोदरी माता शय्यागतेन रामेण। सैकते ( सिकताः अस्मिन्सन्तीति सैकतं तस्मिन् ) पुलिने योऽम्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव। बभौ। [ सैकतोपमया शय्याप्रच्छदस्य धवलत्वसौभाग्य। अम्भोजबल्युपमया शिशोः सौकुमार्य। गंगोपमया देव्याः स्वच्छता पवित्रता च—हे० ]। ( शरत्काले क्षीणजलत्वेन तनुत्वमापन्ना जह्नुकन्या पूजार्थं दत्तेन पद्मोपहारेणेव प्रसवेन गर्भभारविमोचनात् कृशोदरी माता अरिष्टशय्यास्थितेन शिशुना बभौ )।

७०. केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी। " तस्यापत्यम् " इत्यणि कृते " केकयमित्रयुप्रलयानां यादेरियः " इतीयादेशः। तस्या भरतो नाम शीलवांस्तनयो जज्ञे जातः। यस्तनयः। प्रश्रयो विनयः श्रियमिव। जनयित्रीं मातरमलंचक्रे। [ विनयोपमया भरतस्य जनवशीकरणत्वं। संपदुपमया भरतेन कैकेय्याः श्लाघ्यताम्। अलंचक्रे इत्यसभ्यं—हे० जनयित्रीमलंचक्रे इति दुष्प्रतीतिकरं चिन्त्यं—चा० ]।

७१. सुमित्रा लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ। [ " यमो दंडधरे ध्वांक्षे संयमे यमजेऽपि च " इति विश्वः—हे० ]। सम्यगागमिता स्वभ्यस्ता विद्या। [ आगमोऽस्या जातः इति आगमिता। भव्यरीत्या कृताभ्यासा—सु० ]। प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयाविव। सुषुवे।

७२ सर्वं जगद्भूलोको निर्दोषं दुर्भिक्षादिदोषरहितम्। आविष्कृतगुणं ( आविष्कृताः गुणाः यस्मिंस्तत् ) प्रकटीकृतारोग्यादिगुण चाभवत्। अत्रोत्प्रेक्ष्यते—गां भुवं गतमवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गोऽप्यन्वगादिव। स्वर्गो हि गुणवान्निर्दोषश्चेत्यागमः। स्वर्गतुल्यमभूदित्यर्थः।

---

69. The mother with the size of her womb reduced looked beautiful on account of Rāma lying in her bed, as does the stream of the Janhavi reduced in autumn, with the offering of the lotuses on the sandy bank.

70. A son Bharata by name of transcending qualities was born to Kaikeyī, who adorned his mother ( her who gave him birth ) as humility does riches.

71. Sumitrā gave birth to two sons who were twins named Lakshmana and S'atrughna, as does science well studied to knowledge and humility ( restraint over the senses ).

72. The whole world became free from calamities and displayed many blessings; for heaven itself, as it were, followed the Supreme Being who had come to the earth.

---

69. A. B. C. E. °वलिना for °बलिना.

71. C. आवर्जिता, D. आराधिता for आगमिता.

72. A. and Vijay. प्राविष्कृत for आविष्कृत; E reads °गुणोदयं for °गुणं जगत्.

तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥
कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥
दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५ ॥
पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः ।
आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥

७३. चतुर्मूर्तेः रामादिरूपेण चतूरूपस्य सतस्तस्य हरेरुदये सति । पौलस्त्याद्रावणाच्चकिता भीता ईश्वरा नाथा इन्द्रादयो यासां ता दिशश्चतस्रो विरजस्कैः ( विगतं रजो येभ्यः ) । अपधूलिभिर्नभस्वद्भिर्वायुभिः। मिषेण । उच्छ्वसिता इव । इत्युत्प्रेक्षा । श्वसः कर्तरि क्तः । स्वनाथशरणलाभसंतुष्टानां दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थः । चतुर्दिगीशरक्षणं मूर्तिचतुष्टयप्रयोजनमिति भावः । ( " वाता ववुः सौख्यकराः प्रसेदराशा विधूमा हुतभुक् दिदीपे । जलान्यभूवन्विमलानि तत्रोत्सवेऽन्तरिक्षं प्रससाद सद्यः । दिशः प्रसेदुर्मरुतः सुखा ववुः प्रदक्षिणार्चिर्हविरग्निरादद " । एतदनुरूपार्थं श्लोकद्वयं । लोकपालास्तेनोपद्रुतास्तदायत्ततां प्राप्य स्व दासः इव तस्य सेवां चक्रुः । अधुना रामजन्मना तेषां मोक्षोऽचिरभावीति विमृश्य तत्पत्न्यो दिशः आनन्दोल्लासिताः सत्यो भाविदुःखोपशमव्यजकं आनन्दनिर्मलोच्छ्वसितमपदिश्य वातसंचारणं प्रवर्तयामासुः ) ।

७४. रक्षसा रावणेन विप्रकृतावपकृतौ । पीडितावित्यर्थः । कृशानुरग्निः प्रभाकरः सूर्यश्च यथासंख्यमपधूमत्वात् ( अपगतो धूमो यस्मात् तस्य भावः तस्मात् ) प्रसन्नत्वाच्चापविद्धशुचौ ( अपविद्धा शुक् ययोस्तौ ) निरस्तदुःखाविवास्तामभवताम् । ( वस्तुतो महापुरुषजन्मनिबंधनमग्नेर्धूमराहित्यं सूर्यस्य प्रसन्नत्वं च रामोत्पत्त्या अरिनिकारस्य प्रतीकाराशया शोकराहित्याज्जातमित्युत्प्रेक्ष्यते )।

७५. तत्क्षणं तस्मिन्क्षणे रामोत्पत्तिसमये राक्षसश्रियोऽश्रुबिन्दवो दशाननकिरीटेभ्यो मणीनां व्याजेन मिषेण पृथिव्यां पर्यस्ताः पातिताः । रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूदित्यर्थः । [ रक्षोलक्ष्मी रुरोदेति भावः—हे० चा० सु० ] । ( रामजन्मसमये अनिमित्तभूतो रावणकिरीटान्मणिभ्रंशो रक्षोलक्ष्म्याः अश्रुपतनरूपेणोत्प्रेक्ष्यते राक्षसनाशस्याशुभावित्वात् ) ।

७६. पुत्रिणो जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानाम् । वादनीयानामित्यर्थः । तूर्याणां वाद्यानामारम्भमुपक्रमं प्रथमं दिवि ( स्वर्गे ) देवदुन्दुभयः ( देवानां भेर्यः ) चक्रुः । साक्षा-

73. At the advent of that four-fold incarnation ( of him in the four forms ) the ( four ) quarters, whose tutelary deities were made to tremble by Paulastya, breathed a breath of relief as it were, by means of the breezes which were free from dust.

74. The fire and the Sun both of whom were oppressed by the Rákshasa, became, as it were, freed from their grief—the one on account of its smokelessness and the other on account of his clearness.

75. At that moment the Goddess of fortune of the demon shed on earth drops of tears in the form of jewels from the diadems of the ten-mouthed demon ( Rávana ).

76. First in the heavens, the drums of the gods made a beginning of the musical instruments that were to be sounded at the time of the birth of a son to him who ( now ) got a son.

74. A. C. H. with He. and Su., प्रभाकरः, D. Dhar. Vijay. & Vija. दिवाकरः, B. Chà. Din & Va. क्षपाकरः. E. omits this stanza.

76. C. E. with Vijay. and Va., °प्रवेशानां for प्रवेश्यानां; D. and Va. प्रारंभं for आरंभं.

संतानकमयी वृष्टिर्भवने चास्य पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाभवत् ॥ ७७ ॥
कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥
स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा ।
मुमूर्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥
परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्द्योतयामासुर्देवारण्यमिवर्तवः ॥ ८० ॥

त्पितुर्दशरथादपि देवा अधिकं प्रहृष्टा इत्यर्थः । ( " सुखस्वना मंगलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वार-यांषितां । न केवलं सद्मानि मागधीपतेः । पथि व्यजृम्भन्त दिवौकसामपि । गंभीरशङ्खध्वनिमिश्रमुच्चैर्दि-वि ध्रुवा दुंदुभयः प्रणेदुः । दिवौकसां व्योम्नि विमानसंघा । विमुञ्चतां पुष्पचयान् प्रसस्रुः " एता अनुरूपार्थकौ श्लोकौ ) ।

७७. अस्य राज्ञो भवने ( प्रासादे ) संतानकानां कल्पवृक्षकुसुमानां विकारः संतानकमयी ( कल्पवृक्ष-पुष्पप्रकरप्रचुरा ) वृष्टिश्च पेतुषी पपात । " क्वसुश्च " इति क्वसुप्रत्ययः । " उगितश्च " इति ङीप् । सा वृष्टिरेव सन्तः पुत्रजन्मन्यावश्यका ये मङ्गलोपचारास्तेषामादिरचना प्रथमक्रिया । [ प्रशस्तानि मङ्गला-नि तेषां उपचाराणां सामग्रीणां आदिरचना—हे० सद्भिः विद्वद्भिः क्रियमाणानां मंगलानां सन्मंगलानां य उपचाराश्चूर्णधवलनादयस्तेषां प्रथमरचना—चा० सु० ] । अभवत् ।

७८. कृताः संस्कारा जातकर्मादयो येषां ते । धात्रीणामुपमातॄणां स्तन्यानि पयांसि पिबन्तीति तथो-क्ताः । ते कुमाराः ( दारकाः ) । [ धात्रीणां स्तनात् पातुं शीलं येषां ते इति वा—हे० ] । अग्रे जातेनाग्र-जेन ज्येष्ठेनेव स्थितेन पितुरानन्देन समं ववृधिरे । कुमारवृद्ध्या पिता महान्तमानन्दमवापेत्यर्थः । कुमारज-न्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य ।

७९. तेषां कुमाराणां संबन्धि स्वाभाविकं सहजं विनीतत्वं विनयकर्मणा शिक्षया । हविर्भुजाम् ( हवीं-षि भुञ्जन्ते ते हविर्भुजस्तेषां ) अग्नीनां सहजं तेजो हविषाज्यादिकेनेव मुमूर्च्छ ववृधे । निसर्गसंस्कारा-भ्यां विनीता इत्यर्थः । [ स्वाभाविकमित्यनेनैव प्रतीतत्वात् । यद्वा । अर्थावृत्त्यलंकाराभिप्रायेण कविनोक्तं यथा काव्यादर्शे । " अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि । दीपिकास्थान एवेष्टमलंकारत्रयं यथा । वि-कसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः । उन्मीलन्ति च कुंदानि दलन्ति ककुभानि च " इति—हे० ] ।

८०. परस्परमविरुद्धा अविद्विष्टाः । सौभ्रात्रगुणवन्त इत्यर्थः । ते कुमाराः ( रामाद्याः ) तत्प्रसिद्धमनघं

77. The shower of संतानक flowers that fell on his palace became the first display of auspicious ceremonies ( i. e. the auspicious rejoicings that followed ).

78. The princes whose birth ( or natal ) ceremonies were performed and who were sucking the breasts of their nurses, grew up together with the delight of their royal father, which was as it were their elder brother.

79. The natural modesty of these princes improved ( lit. was increased ) by means of the method of education ( or discipline which they under-went ), as the natural splendour of fire is augmented by the oblations ( of *ghee* thrown into it ).

80. Those brothers who were well-disposed towards one another, greatly illuminated

77. B. C. E. with. He. Vijay. Chà. Din. and. Va. तस्य for चास्य. H. reads शोभाद्विगुण्यमादधे for सैवादिरचनाभवत्.

78. D. H. with. Vijay. Din. and Chà. °स्तनपायिनः for स्तन्यपायिनः.

79. C. and Su. विनयकर्मणां for विनयकर्मणा; D. अमूर्छत् for मुमूर्छ.

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥
तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥
ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥
स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४ ॥

निष्पापं रघोः कुलम् । ऋतवो वसन्तादयो देवारण्यं नन्दनमिव । सहजविरोधानामप्यृतूनां सहावस्थानसंभावनार्थं देवविशेषणम् । अलमत्यन्तमुद्द्योतयामासुः प्रकाशयामासुः । सौभ्रात्रवन्तः कुलभूषणायन्त इति भावः । [ ऋतूपमया सर्वजनानन्दकरत्वं वृन्दावनोपमया बहुजनाधारत्वं–हे० ] ।

८१. शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः । " नद्यृतश्च " इति कप्न भवति । वन्दिते भ्रातुरिति निषेधात् । तेषां भावः सौभ्रात्रम् । युवादित्वादण् । तस्मिन्समाने चतुर्णां तुल्येऽपि यथोभौ रामलक्ष्मणौ प्रीत्या ( स्नेहेन ) द्वन्द्वं बभूवतुः । तथा ( तेनैव प्रकारेण ) भरतशत्रुघ्नौ प्रीत्या ( स्नेहेन ) द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ बभूवतुः । [ एकपिण्डोत्पन्नत्वात्–चा० ] । " द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु " इत्यभिव्यक्तार्थे निपातः । क्वचित्कस्यचित्स्नेहो नातिरिच्यत इति भावः । ( अनेन " व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः " इति तात्पर्यं व्यज्यते ) ।

८२. तेषां चतुर्णां मध्ये द्वयोर्द्वयोः । रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः । यथा वायुविभावस्वोर्वातवह्न्योरिव । [ यत्राग्निस्तत्र वायुरिति सहचरत्वं–हे० ] । चन्द्रसमुद्रयोरिव च । [ चन्द्रदर्शने समुद्रस्यैव हर्षः इत्यर्थः–हे० ] । ऐक्यमैकमत्यं कदाचन न बिभिदे । एककार्यत्वं समानसुखदुःखत्वं च क्रमादुपमाद्वयाल्लभ्यते। सहजः सहकारी हि वह्नेर्वायुः । चन्द्रवृद्धौ हि वर्धते सिन्धुस्तत्क्षये च क्षीयत इति ।

८३. प्रजानाथाः ते कुमारास्तेजसा प्रभावेण । [ प्रतापेन–चा० ] । प्रश्रयेण विनयेन । [ प्रीत्या–चा० ] च । निदाघान्ते ग्रीष्मान्ते । श्यामान्यभ्राणि मेघा येषां ते श्यामाभ्राः । नातिशीतोष्णा इत्यर्थः । दिवसा इव । प्रजानां ( लोकानां ) मनः ( चित्तं ) जह्रुः ( हरन्ति स्म ) ।

८४. स चतुर्धा ( चतुर्भिः प्रकारैः ) । " संख्याया विधार्थे धा " इत्यनेन धाप्रत्ययः । व्यस्तो विभक्तः

( glorified ) that unblemished ( pure ) family of Raghu, as the seasons adorn the garden of the gods ( the Nadana forest ).

81 Though the fraternal love existing among all the brothers was equal, still as Râma and Lakshmana formed a pair ( became constant companions ) with affection so did Bharata and S'atrughna.

82. The unity of ideas existing between the members of each of these two couples ( of brothers ) was never broken like that between fire and wind or the moon and ocean.

83. Those princes who were lords of men attracted the minds of their subjects with their power ( prowess or lustre ) and humility ( good discipline ), as do the dark cloudy days at the close of summer ( the hot season ).

84. The issue of the lord of the earth divided as it was into four parts, looked like the embodied incarnation of धर्म, अर्थ, काम and मोक्ष.

---

83. E. reads प्रश्रयेन for प्रश्रयेण.

84. E. व्यस्तप्रसवः for व्यस्तः प्रसवः A. C. D. अङ्गभाक् for अङ्गवान्, Vijay. reads अंगमान्.

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात्परा ववृतिरे क्रियाः ॥ ५६ ॥
वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥
स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥
इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

५६. व्यापत्तिर्मरणम् । नवीभूतः । ( पितृसखस्य पितुः स्थानीयस्य युद्धव्यापारं श्रुत्वेति शेषः ) । पितृव्यापत्तिशोकः ( पितुः दशरथस्य व्यापत्तेः मरणस्य शोकः ) ययोस्तौ तयो राघवयोस्तस्मिन्गृध्रे पितरीवाग्निसंस्कारादग्निसंस्कारमारभ्य परा उत्तराः क्रिया ववृतिरेऽवर्तन्त । तस्य पितृवदौर्ध्वदैहिकं चक्रतुरित्यर्थः ।

५७. वधेन रामकृतेन निर्धूतशापस्य । [ निर्धूतः निराकृतः शापो यस्य—हे० ] । देवभुवं गतस्य कबन्धस्य रक्षोविशेषस्योपदेशतो रामस्य समानव्यसने समानापदि । ( कलत्रवियोगदुःखिते ) । सख्यार्थिनीत्यर्थः । हरौ कपौ सुग्रीवे । "शुकाहिकपिभेकेषु हरिर्ना कपिलं त्रिषु" इत्यमरः । सख्य मुमूर्छ ववृधे । [ मुनिशप्तो हि श्रीदतनयः कबन्धत्वमागतो रामलक्ष्मणाभ्यां बाहुच्छेदेन हतः स्वमूर्तिं प्राप्य प्रत्युपकाराय ऋष्यमूकनिवासिनं समानं सुग्रीवमकथयदित्यागमः—हे० ] । ( उक्तं च रामायणे । "गच्छ शीघ्रमितो वीर सुग्रीवं तं महाबलं । वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव" ) ।

५८. वीरः स रामो वालिनं सुग्रीवाग्रजं हत्वा चिरकाङ्क्षिते ( चिरकालाभिवांछिते ) तत्पदे वालिस्थाने । धातोः स्थान आदेशमिव । आदेशभूतं धात्वन्तरमिवेत्यर्थः । सुग्रीवं संन्यवेशयत्स्थापितवान् । यथा "अस्तेर्भूः" इत्यस्तिधातोः स्थान आदेशो भूधातुरस्ति कार्यमशेषं समभिधत्ते तद्वदितिभावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ।

५९. वैदेहीमन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः कपयो हनुमत्प्रमुखाः । आर्तस्य विरहा-

56. They two whose grief for the death of their father was renewed, performed all the after-life-ceremonies, commencing with the rite of burning (the dead body) in honour of him, in the same way, as they would do in honour of their sire.

57. Through the advice of Kabandha who had his curse shaken (removed) by his death (at the hands of Rama), Rama's friendship grew strong with the monkey (Sugriva) who was labouring under a similar misfortune.

58. That warrior having killed Vali established Sugriva on his throne which he wished for a long time, like an Adesa (substitute) in the place of a root (Dhatu).

59. The monkeys commissioned by their lord wandered here and there (over many countries)

56. B. H. with Va. and Su., °दुःखयोः for °शोकयोः; A. Din. and Dhar., °संस्कारात्परा ववृतिरे क्रियाः, B. E. H. with Chá. Vijay. and Su. °संस्कारानन्तरा ववृते क्रिया, C. He. and Va., संस्कारात्पुनरावव्रते क्रिया, D. and Vija. सस्कारात्परा निववृतिरे क्रियाः

57. B. D. with He. and Din., निर्धौत° for निर्धूत°.

58. A. D. E. H. with Chá. Din. Vijay. Va. and Su. वीरं for वीरः. D. and Vijay. स्वपदे for तत्पदे.

59. D. and Va. अथ for च. D2. आक्रम्य for वैदेहीं. So also noticed by He. B. C. E. H. with He. Chá. Din. Vijay. Va. Su. Dhar. and Vija., °नोदिताः for चोदिताः; P. H. and Vijay. उत्कस्य for आर्त्तस्य. E. reads एव for इव.

प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ६० ॥
दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥
तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२॥

तुरस्य रामस्य मनोरथाः कामा इव । इतस्ततश्चरन्नानादेशेषु बभ्रमुश्च । [ अनेन अखिलगतित्वं मनोरथानामगतिर्न विद्यते-हे० अत्र हि मनोरथपदं श्लिष्टं दृश्यते चेरुरित्युत्तरपदस्य सम्यग्योजनया ध्वनिः पिशुनितः-विजया० ] । ( अत्र सीता द्रष्टव्या तत्र सीता प्राप्तव्येति तस्य मनोरथाः स्थानात् स्थानान्तरं जग्मुः ) ।

६०. संपातिर्नाम जटायुषो ज्यायान्भ्राता । तस्य दर्शनात् । तन्मुखादिति भावः । तस्याः सीतायाः प्रवृत्तौ वार्तायाम् । " वार्ता प्रवृत्तिर्वृत्तान्तः " इत्यमरः । उपलब्धायां ज्ञातायां सत्याम् । मारुतस्यापत्यं पुमान्मारुतिः । [ मारुतिपदेन मारुतात्मजत्वेन समुद्रलंघनसामर्थ्यं सूच्यते—चा० ] । हनुमान्सागरम् । ममेत्येतदव्ययं ममतावाचि । तद्रहितो निर्ममः निःस्पृहः । [ ममत्वान्निर्गतः निर्ममः—हे० निर्गतो ममकारः ( ममत्वं ) यस्मात् सः-विजया० ] । संसारमविद्याबन्धनमिव । तीर्णस्ततार । [ सीता लंकायामस्तीति संपातिना कथिते सति हनूमान्स्वयं पारावारमतरदित्यर्थः—चा० ] । तरतेः कर्तरि क्तः । [ ममेति विभक्तिप्रतिरूपकमव्ययं । तथा गणदर्पणे । " चिरात्राय चिराह्नाय कस्माच्चिरस्य मम " इति—हे० ] । ( उक्तं च रामायणे । " तरुणी रूपसंपन्ना सर्वाभरणभूषिता । ह्रियमाणा मया दृष्टा रावणेन दुरात्मना । क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी । भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती " । तथा च । " श्रूयतां मे कथयतां निलयं तस्य रक्षसः । पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च । अध्यास्ते नगरीं लंकां रावणो नाम राक्षसः " ) ।

६१. लङ्कायां रावणराजधान्यां विचिन्वता मृगयमाणेन तेन मारुतिना राक्षसीभिर्वृता जानकी । विषवल्लीभिः परीता परिवृता महौषधिः सञ्जीवनीलतेव । दृष्टा । ( तथा च रामायणे । " अशोकवनिकामध्ये शोकसागरमाप्लुता । ताभिः परिवृतां तत्र सग्रहामिव रोहिणीं । ददर्श हनुमांस्तत्र लतामकुसुमामिव " ) ।

६२. कपिर्हनुमान्भर्तू रामस्य संबन्ध्यभिज्ञान ( अभिज्ञायते अनेनेति विश्वाससंपादकचिह्नं ) प्रत्यभिज्ञानसाधकमङ्गुलीयमूर्मिकाम् । " अङ्गुलीयकमूर्मिका " इत्यमरः । " जिह्वामूलाङ्गुलेश्छः " इति छप्रत्ययः । तस्यै जानक्यै ददौ । किंविधमङ्गुलीयम् । अनुष्णैः शीतलैस्तस्याः । [ सीताया वल्लभांगुलीयावलोकनसमुल्लसितप्रेमवशतो निर्गतैः—चा० ] । आनन्दाश्रुबिन्दुभिः ( बाष्पलेशैः ) प्रत्युद्गतमिव ( अभ्युत्थितमिव ) स्थितम् । [ मुद्रिकावीक्षणानंतरं प्रीत्या बाष्पं निर्गतमितिभावः—चा० अगुलीयस्य रत्नैरिव प्रत्युद्गमनं यु-

in quest of the Videha-princess like so many thoughts ( lit. mental-chariots ) of Râma who was pining for her.

60. Intelligence about her having been obtained from an interview with Sampâti, Màruti crossed the ocean, as a person with no desire for worldly objects crosses the ocean of worldly life ( frees from the necessity of another birth ).

61. Making his search at Lankà ( the capital of Râvana ) he found the daughter of Janaka surrounded by Ràkshasîs ( demonesses ). She appeared like the great medicinal plant ( life-reviving plant ) entertwined by poisonous creepers.

62. The monkey handed over to her a ring ( as a token ) of recognition from her husband, which was, as it were, received ( wel-comed ) by her with cool tears of joy.

62. B. C. E. H. with He. Châ. Din. Va. Su. Vijay. and Dhar. Vija., हरिः for कपिः; D. °वारिभिः for °बिन्दुभिः.

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात्परा ववृतिरे क्रियाः ॥ ५६ ॥
वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥
स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥
इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

५६. व्यापत्तिर्मरणम् । नवीभूतः । ( पितृसखस्य पितुः स्थानीयस्य युद्धव्यापारं श्रुत्वेति शेषः ) । पितृव्यापत्तिशोकः ( पितुः दशरथस्य व्यापत्तेः मरणस्य शोकः ) ययोस्तौ तयो राघवयोस्तस्मिन्गृध्रे पितरीवाग्निसंस्कारादग्निसंस्कारमारभ्य परा उत्तराः क्रिया ववृतिरेऽवर्तन्त । तस्य पितृवदौर्ध्वदैहिकं चक्रतुरित्यर्थः ।

५७. वधेन रामकृतेन निर्धूतशापस्य । [ निर्धूतः निराकृतः शापो यस्य—हे० ] । देवभुवं गतस्य कबन्धस्य रक्षोविशेषस्योपदेशतो रामस्य समानव्यसने समानापदि । ( कलत्रवियोगदुःखिते ) । सख्यार्थिनीत्यर्थः । हरौ कपौ सुग्रीवे । " शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु " इत्यमरः । सख्यं मुमूर्छ ववृधे । [ मुनिशप्तो हि श्रीदतनयः कबन्धत्वमागतो रामलक्ष्मणाभ्यां बाहुच्छेदेन हतः स्वमूर्तिं प्राप्य प्रत्युपकाराय ऋष्यमूकनिवासिनं समानं सुग्रीवमकथयदित्यागमः—हे० ] । ( उक्तं च रामायणे । " गच्छशीघ्रमितो वीर सुग्रीवं तं महाबलं । वयस्यं तं कुरु क्षिप्रमितो गच्छाद्य राघव " ) ।

५८. वीरः स रामो वालिनं सुग्रीवाग्रजं हत्वा चिरकाङ्क्षिते ( चिरकालाभिवांछिते ) तत्पदे वालिस्थाने । धातोः स्थान आदेशमिव । आदेशभूतं धात्वन्तरमिवत्यर्थः । सुग्रीवं संन्यवेशयत्स्थापितवान् । यथा " अस्तेर्भूः " इत्यस्तिधातोः स्थान आदेशो भूधातुरस्ति कार्यमशेषं समभिधत्ते तद्वदितिभावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ।

५९. वैदेहीमन्वेष्टुं मार्गितु भर्त्रा सुग्रीवेण चोदिताः प्रयुक्ताः कपयो हनुमत्प्रमुखाः । आर्तस्य विरहा-

---

56. They two whose grief for the death of their father was renewed, performed all the after-life-ceremonies, commencing with the rite of burning (the dead body) in honour of him, in the same way, as they would do in honour of their sire.

57. Through the advice of Kabandha who had his curse shaken (removed) by his death (at the hands of Rama), Rama's friendship grew strong with the monkey (Sugriva) who was labouring under a similar misfortune

58. That warrior having killed Vâli established Sugrîva on his throne which he wished for a long time, like an Ades'a (substitute) in the place of a root (Dhâtu).

59. The monkeys commissioned by their lord wandered here and there (over many countries)

---

56. B. H. with Va. and Su., °दुःखयोः for °शोकयोः; A. Din. and Dhar., °संस्कारात्परा ववृतिरे क्रियाः, B. E. H. with Châ. Vijay. and Su. °संस्कारानन्तरा ववृते क्रिया, C. He. and Va., संस्कारात्पुनरावृते क्रिया, D. and Vija. संस्कारात्परा निववृतिरे क्रियाः

57. B. D. with He. and Din., निर्धौत° for निर्धूत°.

58. A. D. E. H. with Chá. Din. Vijay. Va. and Su. वीरं for वीरः. D. and Vijay. स्वपदे for तत्पदं.

59. D. and Va. अथ for च. D2. आक्रम्य for वैदेहीं. So also noticed by He. B. C. E. H. with He. Chá. Din. Vijay. Va. Su. Dhar. and Vija., °नोदिताः for चोदिताः; D. H. and Vijay. उत्कस्य for आर्त्तस्य. E. reads एव for इव.

प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ६० ॥
दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥
तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२॥

तुरस्य रामस्य मनोरथाः कामा इव । इतस्ततश्चेरुर्नानादेशेषु बभ्रमुश्च । [ अनेन अखिलगतित्वं मनोरथानामगतिर्न विद्यते-हे० अत्र हि मनोरथपदं श्लिष्टं दृश्यते चेरुरित्युत्तरपदस्य सम्यग्योजनया ध्वनिः पिशुनितः-विजया० ] । ( अत्र सीता द्रष्टव्या तत्र सीता प्राप्तव्येति तस्य मनोरथाः स्थानात् स्थानान्तरं जग्मुः ) ।

६०. संपातिर्नाम जटायुषो ज्यायान्भ्राता । तस्य दर्शनात् । तन्मुखादिति भावः । तस्याः सीतायाः प्रवृत्तौ वार्तायाम् । " वार्ता प्रवृत्तिर्वृत्तान्तः " इत्यमरः । उपलब्धायां ज्ञातायां सत्याम् । मारुतस्यापत्यं पुमान्मारुतिः । [ मारुतिपदेन मारुतात्मजत्वेन समुद्रलंघनसामर्थ्यं सूच्यते—चा० ] । हनुमान्सागरम् । ममेत्येतदव्ययं ममतावाचि । तद्रहितो निर्ममः निःस्पृहः । [ ममत्वान्निर्गतः निर्ममः—हे० निर्गतो ममकारः ( ममत्वं ) यस्मात् सः-विजया० ] । संसारमविद्याबन्धनमिव । तीर्णस्ततार । [ सीता लंकायामस्तीति संपातिना कथिते सति हनूमान्स्वयं पारावारमतरदित्यर्थः—चा० ] । तरतेः कर्तरि क्तः । [ ममेति विभक्तिप्रतिरूपकमव्ययं । तथा गणदर्पणे । " चिररात्राय चिराह्नाय कस्माच्चिरस्य मम " इति—हे० ] । ( उक्तं च रामायणे । " तरुणी रूपसंपन्ना सर्वाभरणभूषिता । ह्रियमाणा मया दृष्टा रावणेन दुरात्मना । क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी । भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती " । तथा च । " श्रूयतां मे कथयतां निलयं तस्य रक्षसः । पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च । अध्यास्ते नगरीं लंकां रावणो नाम राक्षसः " ) ।

६१, लङ्कायां रावणराजधान्यां विचिन्वता मृगयमाणेन तेन मारुतिना राक्षसीभिर्वृता जानकी । विषवल्लीभिः परीता परिवृता महौषधिः सञ्जीवनीलतेव । दृष्टा । ( तथा च रामायणे । " अशोकवनिकामध्ये शोकसागरमाप्लुता । ताभिः परिवृतां तत्र सग्रहामिव रोहिणी । ददर्श हनुमांस्तत्र लतामकुसुमामिव " ) ।

६२. कपिर्हनुमान्भर्तू रामस्य संबन्ध्यभिज्ञान ( अभिज्ञायते अनेनेति विश्वाससंपादकचिह्नं ) प्रत्यभिज्ञानसाधकमङ्गुलीयमूर्मिकाम् । " अङ्गुलीयकमूर्मिका " इत्यमरः । " जिह्वामूलाङ्गुलेश्छः " इति छप्रत्ययः । तस्यै जानक्यै ददौ । किंविधमङ्गुलीयम् । अनुष्णैः शीतलैस्तस्याः । [ सीताया वल्लभांगुलीयावलोकनसमुल्लसितप्रेमवशतो निर्गतैः—चा० ] । आनन्दाश्रुबिन्दुभिः ( बाष्पलेशैः ) प्रत्युद्गतमिव ( अभ्युत्थितमिव ) स्थितम् । [ मुद्रिकावीक्षणानतर प्रीत्या बाष्प निर्गतमितिभावः—चा० अगुलीयस्य रत्नैरिव प्रत्युद्गमनं यु-

in quest of the Videha-princess like so many thoughts ( lit. mental-chariots ) of Râma who was pining for her.

60. Intelligence about her having been obtained from an interview with Sampàti, Màruti crossed the ocean, as a person with no desire for worldly objects crosses the ocean of worldly life ( frees from the necessity of another birth ).

61. Making his search at Lankà ( the capital of Ràvana ) he found the daughter of Janaka surrounded by Ràkshasîs ( demonesses ). She appeared like the great medicinal plant ( life-reviving plant ) entertwined by poisonous creepers.

62. The monkey handed over to her a ring ( as a token ) of recognition from her husband, which was, as it were, received ( wel-comed ) by her with cool tears of joy.

---

62. B. C. E. H. with He. Châ. Din. Va. Su. Vijay. and Dhar. Vija., हरिः for कपिः; D. °वारिभिः for °बिन्दुभिः.

निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धतः ।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः ॥ ६३ ॥
प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ६४ ॥
स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥ ६५ ॥
श्रुत्वा रामः प्रियोदन्तं मेने तत्संगमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६६ ॥

त्नमिति कविना विद्रुमुक्ताफलस्य समाधिः विवक्षितः । "अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना । सम्यगाधीयते यत्र स समाधिः स्मृता यथा" इति काव्यादर्शे—हे०चा० ] । प्रत्यभिज्ञानदर्शनादानन्दबाष्पो जात इत्यर्थः ।

६३. स कपिः । प्रियस्य रामस्य संदेशैर्वाचिकैः । ( रक्षमां वधूभिः वृतां ) । सीतां निर्वाप्य सुखयित्वा । अक्षस्य रावणकुमारस्य वधेनोद्धतो दृप्तः सन् । क्षण सोढोऽरेरिन्द्रजितः । कर्तुः । निग्रहो बाधो ब्रह्मास्त्रबन्धनरूपो येन स तथोक्तः सन् । लङ्कां पुरीं ददाह भस्मीचकार । [ तेन हि अक्षनामा विद्यमानो रावणकुमारो लंकादाहे हतः —हे० ] ।

६४. कृती कृतकृत्य.। [ कृती त्वं सीताप्रत्यभिज्ञानानयने हेतुः—चा० ] । कपिः स्वयमायातं मूर्तिमद्वैदेह्या हृदयमिव स्थितं तस्या एव प्रत्यभिज्ञानरत्नं । [ सीताचूडामणि—हे० ] । च रामायादर्शयत् । [ स्वरूपोत्प्रेक्षा—हे० ] । ( अतिप्रियत्वात्तद्रत्नस्य वैदेहीहृदयत्वेनोत्प्रेक्षितम् ) ।

६५. हृदये वक्षसि न्यस्तस्य धृतस्य मणेरभिज्ञानरत्नस्य स्पर्शेन निमीलितो मोहितः स रामोऽविद्यमानः पयोधरसंसर्गः स्तनस्पर्शो यस्यास्तां तथाभूता प्रियाया आलिङ्गनेन या निर्वृतिरानन्दस्तां प्राप । [ शेषं आलिंगनस्य सरवेन स्तनयोरेव प्राधान्य—हे० आश्लेषस्य स्तनस्पर्शस्यैव प्राधान्यादपयोधरसंसर्गामित्युक्तं—चा० ] ।

६६. प्रियाया उदन्तं वार्ताम् । " उदन्तः साधुवार्तयो: " इति विश्वमेदिन्यौ । श्रुत्वा तस्याः सीतायाः

63 Having comforted Sita with the messages from her dear husband he, who was emboldened by the destruction of Aksha ( the son of Ravana ), and who for a moment suffered capture at the hands of his enemies, set the city of Lanka on fire

64 The monkey who succeeded in his undertaking, showed the jewel of recognition to Rama, which was, as it were, the very heart of the princess of the Videhas that had come to him of its own free will in a material form

65. He with his eyes closed on account of the delighting sensation of touch caused by the jewel placed on his breast, realised the pleasure of embracing his beloved without the contact with her breasts.

66. On hearing the ( happy ) news of his beloved, Rama became so anxious for her union that he considered the great ocean which surrounded Lanka ( lit. which was its encircling belt ) as an ordinary fordable ditch around a fort

63. B. C. with Chà. Din. Vijay. Va. and Su. अक्षवधोद्धुरः So also noticed by He. D. रक्षोवधोद्धतो for रक्षोवधोद्धतः; B. and Chà. विभोः for पुरीं; A. क्षण सोढारिनिग्रहः, D. and Vijay. क्षणसोढारिविग्रहः for क्षणसोढारिनिग्रहः.

65. A. D. E. with Va. and Din., °संसर्ग for °संसर्गा.

66. E. and Vijay. read परिखा° for परिखा°.

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि संबाधवर्त्मभिः ॥ ६७ ॥
निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमादिश्य चोदितः ॥ ६८ ॥
तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६९॥

संगम उत्सुको रामो लङ्कायाः संबन्धी यो महार्णव एव परिक्षेपः परिवेष्टस्तं परिखालघुं दुर्गवेष्टनवस्तुतरं मेने । ( सीता रक्षोभिर्न खादिता अपि तु जीवति इति हनूमदुपनीतां प्रियां वार्तामधिगम्य मिलनायात्युत्सुको बभूव । औत्सुक्येन चालघ्यमपि समुद्रं सुप्रतरं संभावयामासेत्यर्थः ) ।

६७. केवलमेक भुवः पृष्ठे भूतले न किं तु व्योम्नि ( आकाशे ) च संबाधवर्त्मभिः संकटगामिभिः । [ संबाधं संकट वर्त्म मार्गो येषां तैः संकीर्णमार्गैः । " संकट ना तु संबाधः " इत्यमरः । "संबाधः संकटे भगे " इति विश्वमेदिन्यौ । " मयायं बृहदपि तद्बभूव वर्त्म " इति माघकाव्ये । " अतो धर्मिपरोप्यस्ति " । अनेन कपिसैन्यबाहुल्योक्तिः—हे०चा०सु० ] । हरिसैन्यैः कपिबलैरनुद्रुतोऽन्वितः [ परिवृतः—सु० ] सन्स रामोऽरिनाशाय ( रावणवधाय ) प्रतस्थे चचाल ।

६८. उदधेः ( अब्धेः ) कूले ( तटे ) निविष्टं ( स्थितं ) तं रामम् । विशेषेण भीषयते शत्रूनिति विभीषणो रावणानुजः । राक्षसलक्ष्म्या स्नेहात् ( प्रेमवशात् ) बुद्धिं कर्तव्यताज्ञानमादिश्य उपदिश्य चोदितः प्रेरितः इव । प्रपेदे प्राप । ( उक्तं च रामायणे । " हितमुक्तं मया देव तस्य चाविदितात्मनः । सीतां रामाय वैदेहीं प्रयच्छेति पुनः पुनः । उक्तोऽपि न शृणोत्येषः कालपाशवशं गतः । हन्तुं मां खड्गमादाय प्राद्रवद्राक्षसाधमः " । रामसाहाय्येन त्वमात्मानं रक्षितुं शक्ष्यसि अतस्तमेव शरणं व्रजेति राक्षसश्रीर्विभीषणमुपादिष्टवतीत्यर्थः ) ।

६९. राघवस्तस्मै विभीषणाय । " प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता " इति संप्रदानत्वाच्चतुर्थी । निशाचरैश्वर्यं राक्षसाधिपत्यं [ राज्यं—चा० सु० ] प्रतिशुश्राव प्रतिज्ञातवान् । तथा हि । कालेऽवसरे समारब्धाः प्रक्रान्ता नीतयः फलं बध्नन्ति गृह्णन्ति । [ फलिता भवन्तीति भावः—चा० ] । जनयन्तीत्यर्थः । खलु । ( योग्यसमये उप्तानि नयबीजानि विजयसंपदमुत्पादयन्तीत्यर्थः ) ।

67 He set out for the destruction of his enemy followed by the legions of monkeys, crowding their passage not only on the surface of the earth but ( even ) in the sky.

68 Him who had encamped on the coast of the ocean approached Bibhishana as if urged on out of affection by the Fortune of Rakshasa who first inspired him with wisdom.

69 Raghava promised to him the sovereignty over the Rakshasas. Political expedients made use of at a proper time are sure to put forth fruits ( i. e. bear fruits ).

67. D. धरापृष्ठे for भुवः पृष्ठे; B. C. E. H. with Chá. Din. Vijay. Va. and Su. खेऽपि for व्योम्नि; B. C. °वर्त्मनि, D. °वर्तिभिः for °वर्त्मभिः.

68. D. निविष्ट for निविष्टं; B. C. E. H. with He. Châ. Din. Vijay. Va. Su. Dhar. and Vija., आविश्य for आदिश्य. B. C. E. H. with He. Va. Vijay. and Su. नोदितः for चोदितः.

69. C. D. read प्रतिजज्ञे रघूद्वहः for प्रतिशुश्राव राघवः.

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ ७० ॥
तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः ।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥ ७१ ॥
रणः प्रववृते तत्र भीमः प्लवगरक्षसाम् ।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ॥ ७२ ॥
पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः ।
अतिशस्त्रनखन्यासः शैलरुग्णमतंगजः ॥ ७३ ॥

७०. स रामो लवणं क्षारमम्भो यस्यासौ लवणाम्भास्तस्मिँल्लवणाब्धौ प्लवगैः प्रयोज्यैः । [ " कपिप्लवप्लवग " इत्यमरः—हे० ] । शार्ङ्गिणो विष्णोः स्वप्नाय शयनाय रसातलात्पातालादुन्मग्नमुत्थितं शेषमिव स्थितम् । [ इति आयामवैपुल्योक्तिः—हे० ] । सेतुं [ वरणं—हे० ] बन्धयामास । [ " सेतुर्वरण उच्यते " इति हलायुधः—हे० ] ।

७१. रामस्तेन पथा सेतुमार्गेणोत्तीर्य । सागरमिति शेषः । पिङ्गलैः सुवर्णवर्णैरतएव द्वितीयं । [ द्वयोः पूरणयोः द्वितीयः त—हे० ] । हेमप्राकारं । [ यो नगरपर्यन्तं भवति स प्राकारः कोट्टविशेषः । " प्राकारो वरणः साले " इत्यभिधानचिन्तामणिः—सु० । इष्टकादिरचितं वेष्टनाकारे प्राचीरादौ । " ऊर्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभावहम् । प्रस्थे हस्तद्वयात् पूर्वं दीर्घे हस्तत्रयं तथा । न मध्यदेशे कर्तव्यं किञ्चिन्न्यूनाधिके शुभम् " इति ब्रह्मवैवर्तपुराणे–विजया० ] । कुर्वद्भिरिव स्थितैर्वानरैर्लङ्कां रोधयामास । ( हेमवप्रवलया सा रावणपुरी पिङ्गलैर्वानरैरवरुद्धा अपरेण हेमप्राकारेण वेष्टितेव लक्ष्यते स्म ) ।

७२. तत्र लङ्कायां प्लवगानां रक्षसां च भीमो भयंकरो दिग्विजृम्भिताः काकुत्स्थपौलस्त्ययो रामरावणयोर्जयघोषणा जयशब्दा यस्मिन्सः । [ दिक्षु विजृम्भितयोः विख्यातयोः प्रसिद्धयोः काकुत्स्थपौलस्त्ययोः रामरावणयोः जयस्य घोषणं । यद्वा । दिक्षु श्रुतं रामरावणयोर्जयघोषणं यस्मिन् सः–हे० ] । तथोक्तो रणः प्रववृते प्रवृत्तः । " अस्त्रियां समरानीकरणाः कलहविग्रहौ " इत्यमरः ।

७३. किंविधो रणः । पादपैर्वृक्षैराविद्धा भग्नाः परिघा लोहबद्धकाष्ठानि यस्मिन्स तथोक्तः । " परिघः

70. He caused a bridge to be constructed by the monkeys over the briny ocean—a bridge that appeared like the snake S'esha that rose from the nether regions in order to become the bed of Vishnu ( i. e. for S'arngin to lie down upon ).

71. Having crossed the ocean by that path he caused Lankâ to be besieged by the yellow coloured monkeys, who formed, as it were, another golden rampart around it.

72. There ( at Lankâ ) a terrible conflict ensued between the monkeys and the demons, in which the acclamations ( war cries ) of victory to Kâkutstha and Paulastya spread over all quarters.

73. It was a battle in which clubs studded with iron were broken down by the trees;

70. D. °गै °भी for प्लवगैः; C. Din. and Chà. लवणोदधौ for लवणाम्भसि; A. Dhar. and Vija., उन्मग्नं, B. Chà. Din. and Va., उन्मग्नः, C. E. H. उत्तीर्णं, D. Vijay. and He. उत्तीर्णः, D2. and Su. उदीर्णः. B. D. He .Chá. Din. Va. Su. Dhar. Vijay. and Vija. शेषः for शेषं; A. D. and Va., स्वापाय for स्वप्नाय.

71. D. E. H. and Su., यथा for पथा.

72. E. reads प्रववृते रणं तत्र for रणः प्रववृते तत्र. D. घोरः for भीमः; D. E. H. °घोषिणः for °घोषणः.

73. B. with Din. and Chá. °रुग्ण° C. E. H. with He. Va. Vijay. and Su. °भग्न° for °रुग्ण°.

अथ रामशिरश्छेददर्शनोत्क्रान्तचेतनाम्।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥ ७४ ॥
कामं जीवति मे नाथ इति सा विजहौ शुचम्।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥ ७५ ॥
गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ ७६ ॥

परिघातनः " इत्यमरः। शिलाभिर्निष्पिष्टाश्चूर्णिता मुद्गरा अयोघना यस्मिन्स तथोक्तः। " द्रुघणो मुद्गरघनौ " इत्यमरः। अतिशस्त्राः शस्त्राण्यतिक्रान्ता नखन्यासा यस्मिन्स तथोक्तः। [ एतेन कपीनां नीतिरुक्ता-चा० ]। शैलै रुग्णा भग्ना मतंगजा यस्मिन्स तथोक्तः।

७४. अथानन्तरम्। छिद्यत इति छेदः खण्डः। शिर एव छेद इति विग्रहः। रामशिरश्छेदस्य विद्युज्जिह्वाख्यराक्षसमायानिर्मितस्य दर्शनेनोत्क्रान्तचेतनां। ( उत्क्रान्तमस्वस्थं व्याकुलं वा चेतो मनो यस्याः तां )। गतसंज्ञां सीतां त्रिजटा नाम काचित्। [ रावणानुजा-हे० ]। सीतापक्षपातिनी राक्षसी मायाकल्पितं न त्वेतत्सत्यमिति शंसन्ती ब्रुवाणा। " शप्श्यनोर्नित्यम् "। इति नित्यं नुमागमः। समजीवयत्। ( उक्तञ्च अग्निवेशरामायणे। " आहूयाथ निशाचरान् दशमुखो मायाविनं चाब्रवीत् सीताभर्तृशिरोऽनुजस्य च शिरः सीतापुरः प्रक्षिपत ( त ? )। मायां तेन समाश्रितेन च कृतं शीर्षद्वयं जानकी दृष्ट्वा मोहमुपागता त्रिजटया भूयो विमोहीकृता " )।

७५. सा सीता मे नाथो जीवतीति हेतोः शुचं शोकं कामं। [ " अकामानुमतौ कामं " इत्यमरः-चा० ]। विजहौ ( तत्याज )। किं तु प्राक्पूर्वमस्य नाथस्यान्तं नाशं सत्यं यथार्थं मत्वा जीविता जीवितवत्यस्मीति हेतोर्लज्जिता लज्जावती। [ उक्तञ्च भट्टिकाव्ये। " मृतेऽपि त्वयि जीवन्त्या किं मयानकभार्यया-चा० ]। कर्तरि क्तः। दुःखादपि दुःसहो लज्जाभर इति भावः। ( प्रियस्य रामभद्रस्य मृतिमाकर्ण्य यन्न मृता अतो दुःसहलज्जापीडिता बभूवेत्यर्थः. )।

७६. गरुडस्तार्क्ष्यः। तस्यापातेनागमनेन विश्लिष्ट मेघनादस्येन्द्रजितः। [ " मेघनादस्तु वरुणे रावणस्य सुतेऽपि च " इति विश्वः-हे० ]। अस्त्रेण नागपाशेन बन्धनं यस्मिन्स तथोक्तः क्षणक्लेशः ( क्षणं क्षणमात्रं क्लेशो दुःखं यस्मात्स ) दाशरथ्यो रामलक्ष्मणयोः स्वप्नवृत्तः स्वप्नावस्थायां भूत इवाभवत्। [ अल्पकालं दुःखदायित्वात्स्वप्नः इति-हे० ]। ( यथा स्वप्नेऽनुभूतः क्लेशः क्षणस्थायी भवति तथा गारुडाद्यप्रतीकारं नागपाशबन्धनमपि तयोः क्षणक्लेशकरं बभूवेत्यर्थः )।

---

hammers were crushed to pieces by means of stones, the wounds inflicted by the nails were deeper than those inflicted by weapons and the war-elephants were destroyed by meansof rocks.

74. Then Trijaṭā restored Sītā to life, who had lost her senses at the sight of the decapitation of Rama by telling her that it was a mere delusion ( i. e. a fraud practised by the demon Vidyujjihva ).

75. She gave up ( forgot )her grief with the thought that her lord was certainly alive, but she felt ashamed that she was still living, even after she had thought of ( the fact of ) his death to be true.

76. The sufferings of the two sons of दशरथ became short-lived, as if having occurred in a

---

74. E. °शिरांश्छेद°, H. with Vijay. °शरश्छेद° for °शिरश्छेद°. B. चेतसं, D. E. H. with He. Din. and Chà., °चेतसां for °चेतनां.

76. B. C. E. H. with He. Chà. Din. Va. Vijay. Su. Dhar. and Vija., °विश्लिष्ट and बन्धनं for °विश्लिष्ट and बन्धनः; B. C. E. H. with He. Châ. Din. Va. Su. Vijay. Dhar. and Vija. °क्लेशं for °क्लेशः. B. and Su., वृत्तिं, C. E. H. with He. Din. Chà. Vijay. and Va., °वृत्तं, D. °वृत्तिः for °वृत्तः.

ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीद्विदीर्णहृदयः शुचा ॥ ७७ ॥
स मारुतिसमानीतमहौषधिहृतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥ ७८ ॥
नादं स मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किंचित्पर्यशेषयत् ॥ ७९ ॥

७७. ततः पौलस्त्यो रावणः शक्त्या कासूनामकेनायुधेन । " कासूसामर्थ्ययोः शक्तिः " इत्यमरः [ " शक्तिर्बलप्रभावादौ शक्तिः प्रहरणान्तरे " इति विश्वः—हे० ] । लक्ष्मणं वक्षसि बिभेद विदारयामास रामस्त्वनाहतोऽप्यहतोऽपि शुचा शोकेन विदीर्णहृदय आसीत् । (उक्तञ्चाग्निवेशरामायणे । "शक्त्या रावणमु या च हृदये भिन्नोऽपतल्लक्ष्मणः " ) । [ असंगतिर्नामालंकारः वामनस्तु विरोधाभासत्वं विरोधे इति । " बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः । सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयं सा क्रान् जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं । दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्याद्भुत"—हे०] । ( लक्ष्म आहतो रामस्य तु हृदयं विदद्रे । अहो अलौकिकशक्तिमत्त्वं तदस्त्रस्येत्यर्थः ) ।

७८. स लक्ष्मणो मारुतिना मरुत्सुतेन हनुमता समानीतया महौषध्या संजीविन्या । [ विशल्या न म्न्या—चा० सु० ] । हृतव्यथः स पुनः शरैर्लङ्कास्त्रीणां विलापे परिदेवने । " विलापः परिदेवनम् " त्यमरः । आचार्यकं ( आचार्यस्य भावः आचार्यकं ) आचार्यकर्म ( उपाध्यायत्वं ) । " योपधाद्गुरूपोत्त माद्वुञ् " इति वुञ्प्रत्ययः । चक्रे । [ " मृतसंजीविनी मुख्या विशल्यकरणी परा । संधानकरणी चान् सावर्ण्यकरिणी तथा " इति बहुधा ओषधयः—हे० ] । पुनरपि राक्षसाञ्जघानेति व्यज्यते ।

७९. स लक्ष्मणः । शरत्कालो मेघस्येव । [ शरत्कालः मेघस्येव नादं धनुश्च न सहते—हे० ] । मेघना दस्येन्द्रजितो नादं सिंहनादम् । अन्यत्र गर्जितं च । इन्द्रायुधप्रभं शक्रधनुःप्रभं धनुश्च किंचिदल्पमपि पर्यशेषयन्नावशेषितवान् । [ यथा शरत्काले मेघस्य नादं तथा शक्रधनुश्च नावशेषयति । कालग्रहणं तु योगार्थं अन्यथा शरदा लक्ष्मणस्योपमानं स्यात् चा० सु० ] । समवधीदित्यर्थः । ( यथा शरदि नभोमण्डलान्मेघा अपगच्छन्तीन्द्रधनुश्च दुर्लभदर्शनं भवति तथा लक्ष्मणस्त कथावशेषतामनयदित्यर्थः )

dream, when their binding ( imprisonment ) with a serpent missile discharged by मेघनाद gave way at the approach of गरुड

77. Then the descendant of Pulastya struck Lakshmana on his breast with the Sakti weapon while Rama though not struck had his heart broken by grief

78. Lakshmana having his pain removed by the great medicinal plant brought (to him) by Maruti, again performed the duty of a tutor in teaching lamentation to the women of Lanka by means of his arrows ( i.e. caused the women of Lanka to bewail the deaths of their husbands )

79. He allowed to remain naught of either the war cries of मेघनाद or his bow resplendent as the rain-bow ( weapon of Indra ) as the autumnal season completely annihilates the thunders of clouds and the rain bow

78. D. with He. Dhar. Vija. and Vijay. read मारुतसुतानीत° for मारुतिसमानीत°. A. °हृतव्यथः, D. Din. and Châ., °गतव्यथः for °हृतव्यथः. Between 79-80 D. H. & Su., read " क्लेशेन महतीं निद्रां त्याजित रणदुर्जयम् । रावणः प्रेषयामास युद्धायानुजमात्मनः । स जघान तदादेशात्कर्णानुमानेकशः । विवेश च पुरीं लंकां स्मादाय हरीश्वरं " । [ H. and Su. जघान स for स जघान. ]

79. D. H. read स नादं for नादं स.

कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ८० ॥
अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१ ॥
इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥ ८२ ॥
निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावणमरामं वा जगदद्येति निश्चितः ॥ ८३ ॥
रामं पदातिमालोक्य लङ्केशं च वरूथिनम् ।

८०. कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायास्तुल्यावस्थो नासाकर्णच्छेदेन सदृशः कृतः कुम्भकर्णः । [ रु-धिरावलिप्तत्वात्—वा० ] । टङ्केन शिलाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषो यस्य स तथो-क्तः । " टङ्कः पाषाणदारणः " इति । " धातुर्मनःशिलाद्यद्रेः " इति चामरः । शृङ्गी शिखरीव । रामं रुरोध । ( उक्तञ्च रामायणे । " ततः कराग्रैः सहसोर्ध्वमेत्य राजा हरीणाममरेन्द्रशत्रोः । चकर्त कर्णौ द-शनैश्च नासां ददार पार्श्वेषु च कुंभकर्णम् " ) ।

८१. प्रियस्वप्न इष्टनिद्रोऽनुजो भवान्वृथा भ्रात्रा रावणेनाकाले । [ असमये असंपूर्णे मासषट्के—वा० ] । बोधित इतीवासौ कुम्भकर्णो रामेषुभी रामबाणैर्दीर्घनिद्रां मरणं प्रवेशितो गमितः । [ " निमील-नं दीर्घनिद्रा " इति हलायुधः—हे० ] । यथा लोकेष्विष्टवस्तुविनाशदुःखितस्य ततोऽपि भूयिष्ठमुप-धाप्यते तद्वदिति भावः ।

८२. इतराणि रक्षांस्यपि वानरकोटिषु । समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवा-हेष्विव पेतुः । निपत्य मृतानीत्यर्थः । [ इत्यपुनर्निर्गमः—हे० तथा कायेषु पतिता राक्षसा नालो-किताः—वा० ] ।

८३. अथ पौलस्त्यो रावणः । अद्य जगदरावणं रावणशून्यमरामं रामशून्यं वा भवेदिति निश्चितो नि-श्चितवान् । कर्तरि क्तः । विजयमरणयोरन्यतरनिश्चयवान्पुनर्युद्धाय मन्दिरान्निर्ययौ निर्जगाम । [ पुनः शब्देन आदावपि युद्धमाक्षिप्तं तस्मिन्न पूर्वे एव पक्षः अभवत् उत्तरो नाभवत्—हे० ] ।

---

80. Reduced to a condition similar to that of his sister by the lord of the monkeys, Kumbha-karna made an onslaught towards Râma, like a mountain having its red arsenic ( Manass'ila ) cut down by the stone-cutting instrument.

81. 'Fond of sleep as you are, you have been in vain aroused from sleep by your brother out of time'—with these words of consolation, as it were, he was made to enter into long sleep ( death ) by the arrows of Râma.

82. Other demons also fell on the crores of monkeys. They appeared like dust raised from the battle field falling upon the streams of their blood.

83. Let the world to-day be either destitute of Râvana or of Rama, thus resolved he the son of Pulastya then came out from his palace to fight again.

---

81. B. C. E. H. with He. Vijay. and Va. अनुजः for भवान्. D. with Va. निद्रालुः for वृथा भवान्.

83. D. and Vijay. निश्चितं, H. reads निश्चयः for निश्चितः.

हरियुग्यं रथं तस्मै प्रजिघाय पुरंदरः ॥ ८४

तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः ।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ ८५ ॥

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैव्यमस्त्राण्यापुः सुरद्विषाम् ॥ ८६ ॥

अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात् ।
रामरावणयोर्युद्धं चरितार्थमिवाभवत् ॥ ८७ ॥

८४. पादाभ्यामततीति पदातिः । तं पादचारिणं रामम् । वरूथो रथगुप्तिः । " रथगुप्तिर्वरूथो ना " इत्यमरः । अत्र वरूथेन रथो लक्ष्यते । वरूथिनं रथिनं लङ्केशं चालोक्य पुरंदर इन्द्रः । युगं वहन्तीति युग्या रथाश्वाः । " तद्वहति रथयुगप्रासङ्गम् " इति यत्प्रत्ययः । हरियुग्यं कपिलवर्णाश्वम् । " शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु " इत्यमरः । रथं तस्मै रामाय प्रजिघाय प्रहितवान् ।

८५. राघवो व्योमगङ्गोर्मिवायुभिः ( मन्दाकिनीतरङ्गवातैः ) आधूतध्वजपटम् । [ वियद्गङ्गावीचिसंगमशीतलैः सुखस्पर्शैः मरुद्भिः प्रेङ्खत्केतनांशुकं । इत्युक्तत्वं–हे० ] । मार्गवशादिति भावः । जेतैव जैत्रो जयशीलः । तं जैत्रम् । जेतृशब्दात्तृन्नन्तात् " प्रज्ञादिभ्यश्च " इति स्वार्थेऽण्प्रत्ययः । तं रथं देवसूतभुजालम्बी मातलिहस्तावलम्बः सन्नध्यास्ताधिष्ठितवान् । आसेर्लङ् ।

८६. मातलिरिन्द्रसारथिर्माहेन्द्रम् । तनुश्छाद्यतेऽनेनेति तनुच्छदो वर्म । ( "शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्मदंशनम् । उरश्छदः कंकटको जगरः कवचोऽस्त्रियाम् " इत्यमरः ) । " पुंसि संज्ञायां घः प्रायेण " इति घः । तं तस्य रामस्यामुमोचामुञ्चयामास । [ ददौ–हे० अबध्नात्–चा० ] । यत्र तनुच्छदे सुरद्विषां ( दैत्यानां ) अस्त्राण्युत्पलदलानां यत्क्लैव्यं नपुंसकत्व । [ निर्वीर्यत्वं––हे० असामर्थ्यं—चा० ] । निरर्थकत्वं तदापुः । ( प्रमुक्तान्यसुरास्त्राणि येन संघट्टमवाप्य भेत्तुमशक्नुवन्ति कमलदलानामिव स्वेषां पेशलत्वं दर्शयामासुः ) ।

८७. चिरादन्योन्यदर्शनेन प्राप्तविक्रमावसरं रामरावणयोर्युद्धं योधनं चरितार्थं सफलमभवदिव । प्राप्तपराक्रमावसरयोर्बल्याद्विफलस्याथ तल्लाभात्साफल्यमुत्प्रेक्ष्यते । [ यदि द्वयोः परस्परविलोकनं नाभविष्यत् तदा समराभावात् प्रोद्भूतमपि युद्धं नाफलिष्यदित्यन्योन्यसंगात् सफलमिवासीदिति भावः–चा० ] । ( इतः पूर्वं दशाननस्य कोऽपि तुल्यप्रतिद्वन्द्वी नासीन्नापि रामस्य । अतस्तयोर्युद्धेनोभयोर्विक्रमप्रदर्शनस्य समुचितोऽवसरः संप्राप्तः ) ।

84. Observing Râma standing on foot and the lord of Lanka seated in a chariot, Indra sent him his chariot furnished with bay horses.

85. Râghava supporting himself on the hand of the charioteer of the gods took his seat in that victorious chariot, the banner-cloth of which was shaken by the breezes coming over the waves of the celestial Gangâ.

86. Mâtali accoutred him with the armour that belonged to great Indra on which the missiles of the haters of gods obtained the impotency of lotus leaves ( i. e. proved as weak as lotus leaves ).

87. The fight between Râma and Râvana in which each of them found after a long time an opportunity of showing his prowess at the sight of the other ( i. e. showing their might in their mutual rencountre ), became as it were successful.

86. D. Va. and Su., शस्त्राणि for अस्त्राणि.

87. B. C. D. E. H. with He. Chà. Va. Su Din. Vijay. Dhar. and Vija., वैरं for युद्धं. C. E. with Dhar. and Vija. तदा for इव.

भुजमूर्धोरुबाहुल्यादेकोऽपि धनदानुजः।
ददृशे ह्ययथापूर्वो मातृवंश इव स्थितः॥ ८८॥
जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्।
रामस्तुलितकैलासमरातिं बह्वमन्यत॥ ८९॥
तस्य स्फुरति पौलस्त्यः सीतासंगमशंसिनि।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे॥ ९०॥

८८. यथा भूतः पूर्वं यथापूर्वः। सुप्सुपेति समासः। यथापूर्वो न भवतीत्ययथापूर्वः। निहतबन्धुत्वादद्य-सःपरिवारशून्य इत्यर्थः। अत एवैकोऽपि सन्धनदानुजो रावणः। भुजाश्च मूर्धानश्चोरवः पादाश्च भुजमूर्धो-रु। [ भुजानां मूर्ध्नां च उरु महत् बाहुल्यमिति वा—हे० ]। प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः। तस्य बाहुल्या-द्बहुत्वाद्धेतोः। तद्बहुत्वं यादवः—" दशास्या विंशतिभुजश्चतुष्पान्मातृमन्दिरं। लंकेश्वरो यातुपतिः सप्त-हांऽस्य विलोचकः " इति। मातृवंशे मातुः संबन्धिनि वंशे वर्गे। [ माता पुष्पोत्कटा नाम्नी तस्या वं-शे—हे० मातुर्निकषानाम्न्या राक्षस्या वंशे अन्वये—चा० ]। स्थित इव ददृश दृष्टो हि। " वंशो वे-णौ कुलं वर्गे " इति विश्वः। अत्र रावणमातुः केशिन्या रक्षोजातित्वात्तद्वर्गो रक्षोवर्ग इति लभ्यते। अ-तश्चैकोऽप्यनेकरक्षःपरिवृत इवालक्ष्यतेत्यर्थः। ( अत्र हि चारित्रवर्धनः। स यथापूर्वं इति पाठे स रा-वणो यथापूर्वं रामेण विनाशितो वंश इव दृष्टः। यद्वा। यथापूर्वं शक्रादिसंग्रामवत् इत्यन्ये। तस्य स्वे-च्छाचाररूपत्वादुरुबहुत्व स रावणो यथापूर्वं मातुलगृहं क्रीडनादौ वा ददृशे तथा शिरोभुजबाहुल्यादेकोपि लीलां कुर्वन् ददृशे इत्यन्यः )।

८९. लोकपालानामिन्द्रादीनां जेतारम्। [ इति विक्रमोक्तिः-हे० अनेन शरीरबलञ्चोक्तं एतेन प्रभावो-त्कीर्तनात्संग्रामदुर्द्धर्षत्वं रावणस्याराणि—चा० ]। " कर्तृकर्मणोः कृति " इति कर्मणि षष्ठी। स्वमुखैः स्वशिरोभिरर्चितेश्वरं तुलितकैलासमुत्क्षिप्तरुद्राद्रिं तमेवं शौर्यधैर्यमस्त्वसंपन्नं महावीरमरातिं शत्रुं रामो गुण-ग्राहित्वाज्जेतव्योत्कर्षस्य जेतुः स्वोत्कर्षहेतुत्वाच्च बह्वमन्यत। साधु मद्विक्रमस्यायं पर्याप्तो विषय इति ब-हुमानमकरोदित्यर्थः। बह्विति क्रियाविशेषणम्।

९०. अधिकक्रोधः ( अधिकः क्रोधः यस्य सः ) पौलस्त्यः ( स्फुरतीति स्फुरत् तस्मिन् ) स्फुरति स्प-

---

88. The younger brother of the lord of wealth though alone, not being surrounded by attendants as before, appeared on account of his many arms, heads and thighs, as if standing in the midst of his kinsmen by mother's side (Rakshasas)

89. Rama thought highly of that enemy who had conquered the guardians of the quarters (Indra and others), who had worshipped the god S'iva by offering his own heads and who had raised up the Mount Kailása.

90. The son of Pulastya being greatly incensed, drove deep an arrow in his right arm, which

---

88. B. C. E. H. with He. Va. Vijay. Vija. Su. Din. and Dhar., भुजोरुमर्धं° also noticed by Chà. for भुजमर्धोरु°. This reading is also noticed by He.; Chá. with us. B. C. H. स: D. E. हि; A. He and Chà. अयथापूर्व:, D. अयथा-पूर्व, E. हि यथापूर्व, B. C. H. with Vijay. Va. Din. Dhar. Vija. and Su. स यथापूर्व. So also noticed by Chà We would prefer to read स यथापूर्व with Vijay. Va. Din. Su. Dhar. and Vija. For after the phrase एकोऽपि in the first line, अयथापूर्व: seems superfluous. Hemàdri and Cháritravarddhana have also noticed this reading but have not adopted it.

89. B. and Chà. तमरिं, E. समरे for अरातिं.

90. H. reads निचखान for निचखान. D. अधिकक्रोधात् for अधिकक्रोधः

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥ ९१ ॥
वचसैव तयोर्वाक्यमस्त्रमस्त्रेण निघ्नतोः ।
अन्योन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ९२ ॥
विक्रमव्यतिहारेण सामान्याभूद्द्वयोरपि ।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ ९३ ॥

ध्यमानेऽतएव सीतासंगमशंसिनि । ( सीतायाः संगमं शंसतीत्येवं शीलः सीतासंगमशंसी तस्मिन् ) । तस्य रामस्य सव्य इतरो यस्मात्सव्येतरे दक्षिणे । [ " वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणं " इत्यमरः । दक्षिणबाहुस्फुरणं दृष्ट्वा भावी सीतासंगमसहमानस्तमिवाविदध्यादित्यर्थः। "स्पन्दो भुजस्यंष्टसमागमाय" इति वसन्तराजः-हे० " वामेतरभुजस्पन्दो वरस्त्रीलाभसूचकः "-ध० ] । "न बहुव्रीहौ" इतीतरशब्दस्य सर्वनामसंज्ञाप्रतिषेधः । भुजे शरं निचखान निखातवान् ।

९१. रामेणास्तः क्षिप्त आशुगो बाणः । विश्रवसोऽपत्यं पुमान्रावणः । विश्रवःशब्दादपत्येऽर्थेऽण्प्रत्यये सति " विश्रवसो विश्रवणरवणौ " इति रवणादेशः । तस्य रावणस्यापि हृदय वक्षो भित्त्वा विदार्य । उरगेभ्यः पातालवासिभ्यः प्रियमाख्यातुमिव । ( लोकत्रयकंटको रावणो निहत इति शुभोदन्तं पातालवासिभ्यः कथयितुमिव ) । भुवं विवेश । [ रावणहृदयविदारणवार्तां बाणः पातालभूमौ सर्पाणां वक्तुं प्रविष्टः इति भावः—सु० ] ।

९२. वाक्य वचसैवास्त्रमस्त्रेण निघ्नतोः प्रतिकुर्वतोस्तयो रामरावणयोः । वादिनोः कथकयोरिव । [ वादिनावपि वचसैव वाक्यं निघ्नतोः । प्रमाणादिनियमेन पक्षप्रतिपक्षयोः परिग्रहो वादः—हे० प्रमाणतर्कसाधनोपालंभः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः । पक्षप्रतिपक्षपरिग्रहो वादः इति स विद्यते ययोस्तौ तयोर्वादिनोरिव तयोरपि किंभूतयोः वचसैव वचनेनैव वाक्यं तिरस्कुर्वतोर्यथा विजयावेशः प्रवृद्धमानः स्यात् तद्वदित्यर्थः—चा० ] । अन्योन्यस्य जयविषये संरम्भः [ आवेशः-हे० चा० ] ववृधे ।

९३. जयश्रीः ( जयलक्ष्मीः ) विक्रमस्य व्यतिहारेण पर्यायक्रमेण तयोर्द्वयोरपि । अन्तरा मध्ये ( स्थिता ) । अव्ययमेतत् । वेदिर्वेद्याकारा भित्तिर्मत्तवारणयोरिव । [ अन्तरा मध्ये वेदिं पिण्डकाभित्तिं कृत्वा मध्ये गजौ योध्येते इति प्रसिद्धिः । अन्तरा शब्देनासंबंधाद्वारणशब्दे द्वितीया न-हे० चा० ] । सामान्या साधारणा अभूत् । [ कदाचिद्रामो विजयते कदाचिद्दशग्रीवो विजयते इव । उभयोरपि तुल्यत्वात्कथं अंगीकरोमीति संदेहान्निष्ठा जयश्रीर्मध्यस्थिता इत्यर्थः—चा० ] । न त्वन्यतरनियतेत्यर्थः । अत्र मत्तवारणयोरित्यत्र द्वयोरित्यत्र च " अन्तरान्तरेणयुक्ते " इति द्वितीया न भवति । अन्तराशब्दस्योक्तरीत्याऽव्ययत्वाश्रयात् । मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः । ( कं पक्षमनुग्रहीष्यामीति विजयलक्ष्मीरप्रतिपत्तिमूढा संशयितेव तस्थावित्यर्थः ) ।

---

was throbbing and which therefore prognosticated his union with Sîtâ.

91. An arrow discharged by Râma also having pierced through the breast of Râvana entered into the earth, with a view as it were, to convey that happy news to the serpents.

92. Each of them who met with words the strife of words of the other, and who with missiles met other's missiles, had their impetuous zeal for obtaining victory over the other, increased like that of two disputants.

93. As a wall between two infuriated elephants is common to both, so the fortune of victory

---

91. B. H. Va. and Su., रामास्त्रं for रामास्तः.

92. B. C. E. with He. Chà. and Din. इव for एव.

93. H. omits this stanza, so do Vijay. and Dhar.

कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ९४ ॥
अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमाक्षिपत् ॥ ९५ ॥
राघवोरथमप्राप्तां तामाशां च सुरद्विषाम् ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ॥ ९६ ॥

९४. स्वयमस्त्रप्रयोगः कृतं प्रतिकृतं परकृतप्रतीकारस्ताभ्यां प्रीतैः सुरासुरैः [ देवदैत्यैः । सुरसहिता: असुराः सुरासुराः । शाकपार्थिवादिः । यद्वा । कार्यकृतो हि देवानां विरोधो न जातिकृतः इति । शाश्वतिके वैराभावे नैकवद्भावः । तथा न्यासकृत् । "शाश्वतिको नित्य इति शश्वदिति त्रैकाल्यमुच्यते । तत्र भवः शाश्वतिकः " इति । " मनुजन्मापि सुरासुरान्गणैः " इति माघकाव्ये । तथा च भारविः प्रयुक्तवान् । " सुरासुरैरम्बुनिधिर्ममन्थे " । तर्कदीपिकायामपि । " यत्पादाम्बुजभृङ्गालिच्छलादिवसुरासुराः " इति—हे० चा० ] । यथासंख्यं तयोः रामरावणयोः ( उपरि ) मुक्तां पुष्पवृष्टिम् । द्वयीमिति शेषः । परस्परं शरव्राताः ( बाणगणाः ) न सेहिरे । [ निरंतरापतनादित्यर्थः—हे० ] । अहमेवालं किं त्वयेति चान्तराल एवेतरेतरबाणवृष्टिरितरेतरपुष्पवृष्टिमवारयादित्यर्थः । ( तस्मिंस्तुमुले संग्रामेऽतिसातत्येन प्रयुक्ता बाणाः पुष्पवृष्टिं प्रतिरुद्धां विच्छिन्नसंपातां चक्रुरित्यर्थः ) ।

९५. अथ रक्षो रावणोऽयसः ( लोहस्य ) शङ्कुभिः कीलैश्चितां कीर्णां शतघ्नीं । [ शतानि हन्तीति सुव्युत्पत्तिः । चतुस्तालप्रमाणां लोहगदां शक्तिं । मदनादिनिघंटौ तु । " अयःकण्टकसंछिन्ना शतघ्नी महती शिला " इति तत्र शाल्मल्युपमानात्—हे० चा० ] । लोहकण्टककीलितयष्टिविशेषाम् । " शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता । यष्टिः " इति केशवः । वैवस्वतस्यान्तकस्य हृतां विजयलब्धाम् । कूटशाल्मलिमिव । [ यातनातरुविशेषमिव—चा० ] । शत्रवे राघवायाक्षिपत्क्षिप्तवान् । कूटशाल्मलिरिव कूटशाल्मलिरिति व्युत्पत्त्या वैवस्वतगदाया गौणी संज्ञा । [ कूटशब्देन कुत्सितं द्योत्यते । "दुर्गादौ हि परसैन्यदलनार्थं ह्याक्षिप्यते " इति क्षीरस्वामी—हे० ] । कूटशाल्मलिर्नामकमूलप्रकृतिः कण्टकीवृक्षविशेषः । " रोचनः कूटशाल्मलिः " इत्यमरः । तत्सादृश्यं च गदाया अयःशङ्कुचितत्वादनुसंधेयम् । ( उक्तञ्च रामायणे । " द्रक्ष्यसे शाल्मलीं तीक्ष्णामायसैः कंटकैश्चितां " )

९६. राघवो रथमप्राप्तां तां शतघ्नीं । [ चतुस्तालप्रमाणां लोहशक्तिं—हे० चा० सु० ] । सुरद्विषां रक्ष-

---

became common to them both ( i. e. sometimes sided with the one, sometimes with the other ), on account of the display of valour which each of them made in succession.

94. The groups of arrows of one another did not allow the shower of flowers to be poured over them two ( i. e. Râma and Râva*n*a ) by the gods and the demons pleased with the advance of their own and repulse of the opposite party ( i. e. intercepted the shower of flowers ).

95. Then the राक्षस threw a club ( शतघ्नी ) against his enemy, provided with pointed iron spikes, which he had obtained in war and was like the club of the god of death ( कूटशाल्मली, an instrument of torture described as studded with adamantine thorns ).

96. With crescent-faced arrows Râghava cut it off—and along with it the hope of the enemies

---

94. D. E. H. and He., परस्परं for परस्पर°.

95. C. D. with Chá. Din. Vija. Su. and Dhar. शक्तिं, A. with He. मतां for हृतां. B. C. D. H. with He. Dhar. and Vija. वैवस्वतान्तरूं for वैवस्वतस्येव.

96. B. C. E. H. with He. Va. Châ. Din. Su. Dhar. Vijay. and Vija. सुरद्विषः for सुरद्विषां; C. कदलीमिव for कदलीसुखं. He. also notices this reading.

अमोघं संदधे चास्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ॥ ९७ ॥
तद्व्योम्नि दशधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८ ॥
तेन मन्त्रप्रयुक्तेन निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९ ॥

सामाशां । [ मयैव रावणेन रामो जेतव्यः इत्येवंरूपां—सु० ] । विजयतृष्णां च । " आशा तृष्णादिशोः प्रोक्ता " इति विश्वः । अर्धचन्द्र इव मुखं येषां तैः बाणैः कदलीवत्सुखं यथा तथा चिच्छेद । [ इति आशापाशनिरासः—हे० ] । अथ वा कदल्यामिव सुखमक्लेशो यस्मिन्कर्मणि तदिति विग्रहः ।

९७. एकोऽद्वितीयः [ मुख्यः । " एको मुख्ये प्रधाने च " इत्यमरः—चा० सु० ] । धनुर्धरो रामः प्रियायाः शोक एव शल्यं तस्य निष्कर्षणमुद्धारकं यदौषधं [ उपायभूतं । " मन्त्रादिः " । " अजातौ सर्वमौषधं " इत्यमरः—हे० ] । तदमोघं ( सफल )· ब्राह्मं ब्रह्मदेवताकमस्त्रमभिमन्त्रितं बाणमस्मै रावणाय च । तद्वधार्थमित्यर्थः । धनुषि संदधे । ( अनेन ब्रह्मास्त्रेण दशास्यो घानिष्यते जानकीविरहदुःखशंकुश्च स्वहृदयादुद्धृतो भविष्यतीति मत्वा अव्यर्थसंधानं तदस्त्रं धनुषि योजयामासेत्यर्थः ) ।

९८. व्योम्नि दशधा भिन्नं । [ दशानां रावणशिरसां नाशाय दशधा भिन्नं दशशरीरं । छेद्यस्य दशसंख्यायोगात् । दशधा इत्युक्तं—चा०हे० ] । प्रसृतं दीप्तिमन्ति मुखानि यस्य तद् ब्रह्मास्त्रम् । करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत्तथोक्तम् । " करालो दन्तुरे तुङ्गे करालो भीषणेऽन्यवत् " इति विश्वः । महोरगस्य शेषस्य वपुरिव । [ महोरगत्वं रत्नयोगात्—हे० महोरगत्वेन फणेषु मणयः सूच्यन्ते । तेन च दीप्तिवन्मुखं भवति—चा० सु० ] । ददृशे दृष्टम् ।

९९. स रामो मन्त्रप्रयुक्तेन तेनास्त्रेणाज्ञातव्रणवेदनाम् (अज्ञाता व्रणानां क्षतानां वेदना पीडा यस्यास्तां ) अतिशैघ्र्यादननुभूतव्रणदुःखां रावणशिरःपङ्क्तिं ( मस्तकश्रेणीं ) निमेषार्धादपातयत् पातयामास । [ एतेन रामस्य लघुहस्तता द्योत्यते—चा० ] ।

of the gods—before it had reached his chariot as easily as he would lop off a plantain tree.

97. And that unrivalled archer ( lit. the sole archer ) fixed on his bow the unerring missile presided over by Brahmâ, which was ( as it were ) the physic of extracting from his heart the dart of grief for his beloved.

98. That missile with its blazing points being divided into ten splinters in the sky appeared like the body of the great serpent ( i. e. S'esha ) wearing the ring of his formidable hood.

99. With that missile charged with its appropriate spell ( Mantras ) he caused within half a second the row of Râvana's heads to fall—the heads which did not ( even ) feel the pain of the wound.

---

97. B. with He. Vijay. and Chà. रामः, D. Va. and Su. चासौ, E. तस्मै for चास्मै. He. notices the reading given in our text.

98. A. D. and Dhar शतधा for दशधा. Almost all commentators have read दशधा.

99. B. D. He. & Chá., अज्ञातयत् for अपातयत्. The latter reading is also noticed by He. A. with He. Va. and Su. स रावण°, B. C. H. with Vijay. and Dhar. रामो रिपु°, D. Din. and Chá. रावणस्य.

बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरंपरा ॥ १०० ॥
मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुनः संधानशङ्किनाम् ॥ १०१ ॥
अथ मदगुरुपक्षैर्लोकपालद्विपानामनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥१०२॥

१००. पतिष्यतः ( पतिष्यतीति पतिष्यन् तस्य पतिष्यतः ) आसन्नपातस्य रक्षःकायस्य रावणकलेवरस्य । छिद्यन्त इति छेदाः खण्डाः । कण्ठानां ये छेदास्तेषां परंपरा पङ्क्तिः । वीचिभिः ( कल्लोलैः ) भिन्ना नानाकृताप्सु ( जलेषु ) बालार्कस्य (अरुणतरणिमण्डलस्य ) प्रतिमा प्रतिबिम्बमिव । रराज ( बभौ )। अर्कस्य बालविशेषणमारुण्यसिद्ध्यर्थमिति भावः । [ बालार्कत्वेन शिरसां सरुधिरत्वं आक्षिप्तं । कायग्रहणं तु तपनचलनद्योतनार्थं–हे० ]।

१०१. पतितान्यपि तस्य रावणस्य शिरांसि पश्यतामपि पुनःसंधानशङ्किनाम् । [ विश्वासं न प्रापेत्यर्थः कुतः पुनः संधानं शंकन्ते तेषां ईश्वरेण कृत्तानामपि पुनरुत्पत्तेः साधित्वाच्च रावणस्य–हे० ननु छिन्नेष्वपि मस्तकेषु कथं विश्वासो नाभूदित्याह । यतः पुनः संधानं शंकन्ते इति पुनः संधानशंकिनस्तेषां । महेशतुष्टये शिरांसि छिन्नानि पुनरपि यथा प्ररूढानि तथाधुनापि भविष्यतीति शंकया विश्वासाभावः इत्यर्थः–चा० छिन्नानामपि रावणमस्तकानां पुनः मिलनं भविष्यतीति शंका देवानां अतो न विश्वासः इति भावः–सु० ]। पूर्वं तथादर्शनादिति भावः। मरुताममराणाम् । " मरुतौ पवनामरौ " इत्यमरः । मनः ( चित्तं ) नातिविशश्वासातिविश्वासं न प्राप ।

१०२. अथ मदेन गजगण्डसंचारसंक्रान्तेन गुरुपक्षैर्भारायमाणपक्षैरलिवृन्दैर्लोकपालद्विपानामैरावतादीनां गगनवर्तिनां गण्डभित्तीः ( कपोलपालीः ) विहाय । [ राघवराक्षसराजदिदृक्षयागतानां लोकपालानामिन्द्रादीनां ये द्विपा ऐरावणादयस्तेषां गण्डभित्तीर्गण्डस्थलीर्विहाय परित्यज्य मदोदकेन गुरवः पक्षा येषां ताद्दशैरलिवृन्दैर्भ्रमरसमूहैः । सौरभ्यातिशयात्—चा० ]। अनुगतमनुद्रुतं सुरभि सुगन्धि । " सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । गन्धोपले सौरभेय्यां सल्लकीमातृभेदयोः। सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभि स्मृतम् " इति विश्वः। सुरविमुक्त । ( सुरैः देवैर्विमुक्तं ) । पुष्पवर्षमुपनत आसन्नो मणिबन्धो राज्याभिषेकसमये भावी यस्य तस्मिन् । [ यद्वा । उपनतौ संयुक्तौ मणिबन्धौ प्रकोष्ठप्रदेशौ यस्मिन् कृताञ्जलावित्यर्थः । यदाभिषेकसमये दशरथेन दत्तो मणिरेकोऽस्तीत्येके । तन्न । " पुरं निषादाधिपतेः " इत्यत्र मौलिविसर्जनं वक्ष्यति–हे० उपनतः उपस्थितः मणिबन्धो राज्याभिषेकसमयसंबंधि शिरोरत्नं यस्य तत्रेति भद्रं–चा० ]। पौलस्त्यशत्रो रामस्य मूर्ध्नि ( शिरसि ) पपात । इदमेव राज्याभिषेकसूचकमिति भावः। ( मालिनीवृत्तं ) ।

100. The series of necks severed from the demon's body which was about to drop down, shone (appeared) like the image of the young (new) sun reflected in water broken by the ripples.

101. The mind of the gods who though saw his heads drop down, fearing their re-union did not completely believe the fact of his death.

102. Then on the head of the enemy of the son of Pulastya the placing of the crown on which was soon to take place there fell a shower of fragrant flowers poured down by gods and followed (or attended) by the swarms of black bees which had left the specious temples (lit. wall-like cheeks) of the elephants of the guardians of quarters and which had wings rendered heavy by their temporal ichor.

---

100. D. °प्रतिमेयाः स्युः for °प्रतिमेवाप्सु.
102. B. C. E. H. गल्लभित्तीः for गण्डभित्तीः.

अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥
एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥
वाचंयमत्वात्प्रणतिं ममैष कम्पेन किंचित्प्रतिगृह्य मूर्ध्नः ।
दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि संनिधत्ते ॥ ४४ ॥

सप्तसप्तिः सप्ताश्वः सूर्यो यस्य स तथोक्तः सन् । ( " हयसैन्धवसप्तयः " इत्यमरः ) । तपस्यति तपश्चरति । " कर्मणो रोमन्थतपोभ्यां वर्तिचरोः " इति क्यङ् । " तपसः परस्मैपदं च " इति वक्तव्यम् ।

४२. जनितेन्द्रशङ्कम् ( जनिता इन्द्रस्य शंका भयं येन तं ) । तपस्यन्तमिति शेषः । अमुं सुतीक्ष्णं सहासं प्रहितानीक्षणानि दृष्टयो येषु तानि । व्याजेन केनचिन्निमित्तेन । " पुंस्यर्धोऽर्धं समेंऽशके " इति विश्वः । अर्धमीषत्संदर्शिता मेखला ( काञ्ची ) येषु तानि सुराङ्गनानां ( देवदाराणां ) इन्द्रप्रेषितानां विभ्रमा विलासा एव चेष्टितानि विकर्तुं स्खलयितुमलं समर्थानि न । बभूवुरिति शेषः ।

४३. ऊर्ध्वबाहुरेष सुतीक्ष्णोऽक्षमालैव वलयं यस्य तं मृगाणां । ( कर्मणि षष्ठी ) । कण्डूयितारम् । कुशा एव सूचयस्ता लुनातीति कुशसूचिलावस्तम् । " कर्मण्यण् " इत्यण् । एभिर्विशेषणैर्जयशीलत्वं भूतदया कर्मक्षमत्वं च द्योत्यते । सव्यादितरं दक्षिणं भुजं मे मम सभाजने संमाननिमित्ते । [ प्रीत्युत्पादनार्थमेतत्—चा० ] । " निमित्तात्कर्मयोगे " इति सप्तमी । इतः । [ अस्यां दिशि—सु० ] । प्राध्वं प्रकृतानुकूलबन्धं प्रयुङ्क्ते ( प्रेरयति ) । [ "प्राध्वं नम्रानुकूलयोः " इति विश्वः । " प्राध्वन्तु प्रणते चातिदूरवर्त्मनि बन्धने " इति मेदिनी—हे० ] । " आनुकूल्यार्थकं प्राध्वम् " इत्यमरः । अव्ययं चैतत् ।

४४. एष सुतीक्ष्णः । वाचं यच्छति ( नियमयति ) इति वाचंयमो मौनव्रती । " वाचि यमो व्रते " इति खच्प्रत्ययः । " वाचंयमपुरंदरौ च " इति मुम् । तस्य भावस्तत्त्वान्मम प्रणतिं किंचिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मान्मुक्ताम् । " अपेतापोढमुक्तपतित—" इत्यादिना पञ्चमीसमासः । दृष्टिं पुनः सहस्रार्चिषि सूर्ये संनिधत्ते । सम्यग्धत्त इत्यर्थः । अन्यथाकर्मकत्वप्रसङ्गात् ।

---

42. Him who had aroused a suspicion in Indra, the blandishments ( lit. graceful gestures ) of the celestial damsels in which they cast ( on him ) glances attended with smiles and under some pretext or other partially manifested their zones, were not able to corrupt.

43. Here he with one of his arms ( i. e. left ), always raised up directs his right arm this way ( i. e. in the direction of the car ) so as to greet me ( i. e. in a manner suitable to greeting me )—the arm that has the rosary of रुद्राक्ष for its bracelet, and which scratches the deer and cuts the sharp ends of the Kus'a-grass.

44. This sage having accepted of my salutation with a slight nod of the head on account of his vowed taciturnity again directs his eyes freed from the obstruction caused by my celestial car towards the thousand-rayed sun.

---

42. D. महास° for सहास°. So also noticed by He.

43. B. and Su. संभावने for सभाजने; D. उग्रतेजाः for ऊर्ध्वबाहुः. B. C. E. H. with Va. and Su. प्रांशु for प्राध्वं. Vijay. omits this stanza.

44. A. E. H. with He. and Vijay. कंपेन मूर्ध्नः प्रतिगृह्य किंचित् for कंपेन किंचित्प्रतिगृह्य मूर्ध्नः. B. and Cha. मुक्ते for मुक्तां.

अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।
चिराय संतर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५ ॥
छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेष्वमीषु ।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६ ॥
धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥
एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥ ४८ ॥

४५. शरणे रक्षणे साधु शरण्यम् । पावयतीति पावनम् । अदो दृश्यमानं तपोवनमाहिताग्नेः ( आहिताः अग्नयो येन स तस्य तथोक्तस्य ) शरभङ्गनाम्नो मुनेः संबन्धि । यः शरभङ्गश्चिराय चिरमग्निं समिद्भिः ( पवित्रैन्धनैः ) संतर्प्य तर्पयित्वा ततो मन्त्रैः पूतां शुद्धां तनुमप्यहौषीद्धुतवान् । [ " शरभङ्गो महातेजाः प्रविवेश हुताशनम् " इति रामायणोक्तिः—हे० चा० सु० ] । जुहोतेर्लुङ् ।

४६. अधुनास्मिन्काले तस्य शरभङ्गस्य संबन्धिन्यतिथीनां सपर्यातिथिपूजा । " पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः " इत्यमरः । छायाभिर्विनीतोऽपनीतोऽध्वपरिश्रमो यैस्तेषु भूयिष्ठानि बहुतमानि संभाव्यानि श्लाघ्यानि । [ मनोहराणि–हे० प्राप्यानि–चा० सु० ] । फलानि येषां तेष्वमीषु पादपेष्वाश्रमवृक्षेषु सुपुत्रेष्विव स्थिता । तत्पुत्रैरिव पादपैरनुष्ठीयत इत्यर्थः ।

४७. धारा निर्झरधाराः । यद्वा धारया सातत्येन स्वनोद्गारिदर्येव मुखं यस्य सः । [ उद्गिरतीति उद्गारि धाराणां स्वनोद्गारि दरी एव मुखं यस्य सः । यद्वा । धारया स्वनन्तं उद्गारि उच्चरितं दरी एव मुखं यस्यासौ–हे० ] । शृङ्गं शिखरं विषाणं च । तस्याग्रे लग्नोऽम्बुद एव वप्रपङ्को वप्रक्रीडासक्तपङ्को यस्य सः । [ " तटोवप्रः पितावप्रो वप्रः केदारइत्यपि " इत्यनेकार्थः । " गिरिसानुन्यपि वप्रम् " इति हलायुधः । " विषाणोत्कर्षयोश्चाग्रे शृङ्गस्यान्तकुशीर्षके " इति विश्वः । वृषपक्षे धारास्वनः उत्कर्षस्वनः । " धाराम्बुवर्षेचोत्कर्षे " इति विश्वः । दरीवन्मुखं । शृंगाग्रे लग्नः अम्बुदवत् वप्रपंको यस्येति–हे० ] । असौ चित्रकूटो हे बन्धुरगात्रि उन्नतानताङ्गि । " बन्धुरं तून्नतानतम् " इत्यमरः । दृप्तः ककुद्मान्वृषभ इव । [ ककुद् तकारान्तः । यवादित्वाद्वत्वाभावः—हे० ] । मे चक्षुर्बध्नात्यनन्यासक्तं करोति । ( दृष्टान्तराभिवृत्त्यात्मनि स्थापयति ) ।

४८. प्रसन्नो निर्मलः स्तिमितो निःस्पन्दः ( निश्चलः ) प्रवाहः ( ओघः ) यस्याः सा विदूरस्यान्तरस्य

---

45. This purifying penance grove before us which is a place of refuge ( which offers protection to all ) belongs to the sage named S'arabhanga who had kept a sacred fire and who having propitiated it with the sacred fuel for a long time, at last offered his body consecrated with Mantras to that fire.

46. At present, the duty of reception ( or hospitality ) of the guests has devolved upon these trees which are, as it were, the virtuous sons of the sage, which remove the fatigue of journey by offering their shade and which abound with fruits worthy of praise.

47. O thou of un-even limbs, yonder the mount Chitrakuta with its mouth of caves resounding with the sound of rivulets, and having the clouds resting on its peaks and hence appearing like a wild bull whose cave-like ( yawning ) mouth emits a thundering sound ( bellowing ).with mud sticking to the points of its horns on account of वप्रक्रीडा ( i. e. playfully butting against a rock or mound ), rivets my eyes.

48. Yonder is the river Mandákini with its limpid and serene currents of water, appearing

---

47. E. H. with Vijay. °वप्रकंपः for °वप्रपंकः.

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥ ४९ ॥

अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात्फलबन्धिवृक्षम् ।
वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ॥ ५० ॥

अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्तयामास किलानसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥

मध्यवर्त्यवकाशस्य भावात्तन्वी दूरदेशवर्तित्वात्तनुत्वेनावभासमाना मन्दाकिनी नाम काचिच्चित्रकूटनिकटवर्तिन्येषा सरिन्नगोपकण्ठे । [ तृतीयामसम्योर्बहुलमित्यम् । भावाभावपक्षे रूपं–हे० ] । भूमेः कण्ठगता मुक्तावलीव । भाति । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वं च गम्यते ।

४९. गिरेः समीपेऽनुगिरम् । "गिरेश्च सेनकस्य" इति समासान्तष्टच्प्रत्ययः । सुजातः । [ रम्यः । "सुजातं सुन्दरे प्रोक्तं सम्यग्जाते च वस्तुनि" इति त्रिविक्रमः–हे० ] । स तमालोऽयं दृश्यते । यस्य तमालस्य । शोभनो गन्धो यस्य तत्सुगन्धि । "गन्धस्य–" इत्यादिनेकारः समासान्तः । प्रवालं पल्लवमादाय ( कुसुमं गृहीत्वा । "प्रवालमंकुरेऽप्यस्त्री" इत्यमरः ) । मया ते यवाङ्कुरवदापाण्डौ कपोले शोभी शोभते यः सोऽवतंसः ( कर्णालंकारः ) परिकल्पितः । [ वसन्त इति पक्षे "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यल्लोपः–हे० ] ।

५०. अनिग्रहत्रासाः ( न निग्रहः अनिग्रहः अनिग्रहेण अशिक्षया त्रासो भयं येषां ते ) दण्डभयरहिता अपि विनीताः सत्त्वा जन्तवो यस्मिंस्तत् । अपुष्पलिङ्गात्पुष्परूपनिमित्तं विनैव फलबन्धिनः फलग्राहिणो वृक्षा यस्मिंस्तत् । अत एवाविष्कृतोदग्रतरप्रभावं ( आविष्कृतः प्रकटीकृतः उत्कृष्टो वा उदग्रतरः अधिकः प्रभावो यत्र तत् ) अत्रेर्मुनेस्तपसः साधनं वनमेतत् ।

५१. अत्र वनेऽनसूयात्रिपत्नी । सप्त च त ऋषयश्च सप्तर्षयः । "दिक्संख्ये संज्ञायाम्" इति तत्पुरु-

---

thin on account of the intervention of a long distance looks like a pearl necklace hanging from the neck of the earth near the mountain.

49. There stands by the side of the mountain the noble Tamála tree having taken a fragrant blossom of which I made for you an ear-ornament which shone like the sprout of Yavas on your slightly pale cheeks.

50. This is the holy grove of Atri, a means of accomplishing asceticism, the wild animals in which have been tamed without the fear of chastisement, where the trees have been bearing fruits without having put forth flowers the cause ( of fruits ) and which therefore displays the mighty power of the sage.

51. Here for the ablutions of the ascetics ( those whose wealth is their penance ) Anasuyá is said to have caused the three-streamed river ( the Gangá ) to flow--the river that serves as a chaplet on the crown of the three-eyed-god ( S'iva ), the golden lotuses in which are plucked by the hands of the seven sages.

49. D. and Su. प्रवृद्धः, B. सरूढः for सुजातः; D. and Su. नवप्रवालोपचयेन., B. तव प्रवालावचयेन, E. तव प्रवालोपचयेन for प्रवालमादाय सुगन्धि; B. E. कर्णार्पितनाकरवं कपोलमप्राप्यकालागरुपत्रलेखं for the last two Pádas. [ E. अप्राप्य for अप्राप्यं ]. E. reads °लंबी for °शोभी.

50. D. अपुण्यलिङ्गाल्पमपुण्य°, B. and Va. अपुष्पहिंसाफलबन्धि° for अपुष्पलिङ्गात्फलबन्धि°; D. प्रवाहं for प्रभावं.

वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥
त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥ ५३ ॥

षःसमासः । तेषां हस्तैरुद्धृतानि ( त्रोटितानि ) हेमपद्मानि यस्यास्तां त्र्यम्बकमौलिमालां ( त्र्यम्बकस्य शम्भोः मौलेर्मुकुटस्य मालां स्रजं ) हरशिरःस्रजं त्रिस्रोतसं भागीरथीं तपोधनानामृषीणामभिषेकाय स्नानाय प्रवर्तयामास प्रवाहयामास । किलेत्यैतिह्ये । [ सप्तर्षिरित्यादिना आकाशस्थत्वं सूचितं । हेमपद्म इति पुण्यत्वं । सप्तऋषयस्तु वराहसंहितायां । " सैकावलीव ( च ) राजती ( राजे ) सुसीतोत्पलमालिनी । सुहासेव नाप्यवसती च दिदयैः कौबेरि सप्तभिः मुनिभिः पूर्वे भगवान् मरीचिरपरेस्थितो वसिष्ठोऽस्मात् । तस्यांगिरास्ततोत्रिस्तस्यासन्नः पुलस्त्यः पुलहः क्रतुः इति भगवानासहस्रानुखारेषा ( भगवानाम्नानुक्रमेण ) पूर्वाद्यास्तत्र वसिष्ठं मुनिं वरमुपाश्रितामरुन्धती साध्वीति । ये तु प्रवराध्याये ऋषयस्ते तु अष्टौ । तथा स्मृत्यर्थसारे । " जमदग्निर्भरद्वाजविश्वामित्राऽत्रिगौतमाः । वसिष्ठकश्यपागस्त्याः मुनयो गोत्रकारिणः " इति?–हे० ] ।

५२. वीरासनैर्जयसाधनैः । ध्यानं जुषन्ते सेवन्त इति ध्यानजुषः ( समाधिसेविनः ) । तेषां तैरुपविश्य ध्यायतामृषीणां संबन्धिनः समध्यासितवेदिमध्याः । इदं वीरासनस्थानीयम् । अमी शाखिनोऽपि निवाते निष्कम्पतया । [ वातस्याभावे निवातं तेन निष्कम्पतया निश्चलतया–हे० ] । योगाधिरूढा इव ध्यानभाज इव विभान्ति । ध्यायन्तोऽपि निश्चलांगा भवन्ति । वीरासने वासिष्ठः— " एकपादमथैकस्मिन्विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथाचान्यं वीरासनमुदाहृतम् " । [ चतुर्वर्गचिन्तामणौ तु । वृत्तांगभूतनियमप्रशंसायां गरुडपुराणे । " उत्थितस्तु दिवा तिष्ठदुपविष्टस्तथा निशि । एतद्वीरासनं प्रोक्तं महापातकनाशनं " इति—हे० " एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितः । इतरस्मिंस्तथाचोरुं वीरासनमुदाहृतं—चा० सु० ] । इति ।

५३. त्वया पुरस्तात्पूर्वं य उपयाचितः प्रार्थितः । [ " दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः " इति—हे० ] । तथा च रामायणे—" न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । नमस्तेऽस्तु महावृक्ष पालयेन्मे व्रतं पतिः " इति । ( एतदेव हेमाद्रिचारित्रवर्द्धनयोः ) । श्याम इति प्रतीतः । [ प्रसिद्धः–हे० प्रख्यातः–चा० सु० ] । स वटोऽयं फलितः सन् । सपद्मरागो गारुडानां हरिन्मणीनां मरकतानां राशिरिव । विभाति । " क्वचित्–" इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासंगमं वर्णयति—

---

52. Even these trees in the middle of the Vedis of the sages who devote themselves to meditation in the Virâsana posture, appear, absorbed in ( Yoga ) meditation, as it were, on account of their stillness caused by the absence of breeze.

53. This is the same Banian tree known by the name of S'yâma, whose help was solicited by you on some former occasion. Covered with fruits it appears like a heap of emeralds mixed with rubies.

---

52. B. Châ. and Su., मुनीनां for ऋषीणां; B. C. and He. बन्धाः for मध्याः. So also noticed by He.; A. निवातनिष्कम्पितया, B. निवातनिष्पंदतया, D. E. निर्वातनिष्कम्पतया. So also noticed by He., for निवातनिष्कम्पतया.

53. B. C. E. H. with Va. Vijay. and Su. प्रकाशः for प्रतीतः.

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥ ५४ ॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६ ॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरंगैः ॥ ५७ ॥

५४–५७. हे अनवद्याङ्गि यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रौघा गङ्गा जाह्नवी विभाति । त्वं पश्य । केव । क्वचित्प्रदेशे प्रभया लिम्पन्ति संनिहितमिति प्रभालेपिभिरिन्द्रनीलैरनुविद्धा । सह गुम्फिता मुक्तामयी यष्टिरिव हारावलिरिव । विभाति । अन्यत्र प्रदेश इन्दीवरैर्नीलोत्पलैरुत्खचितान्तरा ( उत्खचितं प्रोतमन्तरं यस्याः सा ) । सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां मालेव । विभातीति सर्वत्र संबन्धः । क्वचित्कादम्बसंसर्गवती नीलहंससंसृष्टा प्रियं मानसं नाम सरो येषां तेषां खगानां राजहंसानां पङ्क्तिरिव । [ नभो नीलमिति प्रसिद्धिः–हे० चा० ] । "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः । अन्यत्र कालागरुणा दत्तपत्रा रचितमकरिकापत्त्रा भुवश्चन्दनकल्पिता भक्तिरिव । ( "भक्तिर्विभागे सेवायां" इति विश्वः ) । क्वचिच्छायासु विलीनैः स्थितैस्तमोभिः शबलीकृता कर्बुरीकृता । ( "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः) । चान्द्रमसी प्रभा चन्द्रिकेव । अन्यत्र रन्ध्रेष्वालक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिरिव । [ कलहंसानां ईषद्धूसरपक्षत्वाद्यमुनातरंगसादृश्यं । उक्तञ्च । "कादम्बास्तु कलहं-

54-57. Look here O lady of faultless limbs, here is the stream the Gangâ which with its current broken by the waves of the Yamunâ appears at one place like a necklace full of pearls interwoven with emeralds covering them with splendour, at another place like a chaplet of white lotuses the interval of which is set with blue ones. In some place it looks like a row of birds ( flamingoes ) fond of the Mânasa-lake, coming in contact with the geese having dark grey wings ; in another place it appears like a piece of ground ornamented with ( white ) sandle, and bearing on it ornamental leaves painted with black sandle paste. Somewhere it appears like the splendour of the moon variegated by darkness lying in the shade ; at others it looks like a white streak of autumnal cloud through the openings in which the surface of the sky is little discernible. And in some others it looks like the body of Is'vara ( S'iva ) annointed with ashes and adorned with black snakes.

54. E. °लोपिभिः, H. °सेविभिः for °लेपिभिः. D. उद्ग्रथित° for उत्खचित°.

56. B. and Châ. निलीनैः, C. H. and Va. अभिलीनैः, D. and Su, विमानैः for विलीनैः. E. reads शबलैः कृतेव for शबलीकृतेव.

57. A. D. भीषणेव for भूषणेव. So also noticed by He. Between 57-58 B. E. He. Châ. Din. Va. Su. Vijay. Dhar.aud Vija. read the following:–

"तमिस्रया शुक्लनिशेव भिन्ना कुन्दस्रगिन्दीवरमालयेव । क्वचिद्धरः कृष्णमृगत्वचेव भूतिः स्मरारेरिव कण्ठभासा । द्दश्यार्द्धया शारदमेघलेखा निर्धौतनिस्त्रिंशरुचा दिशेव । गवाक्षकालागरुधूमराज्या हर्म्यस्थलीलेपसुधानवेव । तुषारसंघातशिलाहिमाद्रेर्ज्यात्यञ्जनप्रस्तरशोभयेव । पतत्त्रिणां मानसगोचराणां श्रेणीव कादम्बविहङ्गपङ्क्त्याः । नितान्तशुद्धस्फटिकाक्षयोगाद्वैदूर्यकान्त्या रशनावलीव । गंगारवेरात्मजया समेत्य पुष्पत्युदारं परभागमेषा" ।

समुद्रपत्न्योर्जलसंनिपाते पूतात्मनामत्र किलाभिषेकात्।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥ ५८ ॥
पुरं निषादाधिपतेरिदं तद्यस्मिन्मया मौलिमणिं विहाय।
जटासु बद्धास्वरुदत्सुमन्त्रः कैकेयि कामाः फलितास्तवेति ॥ ५९ ॥
पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः।
ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥

सा: पक्षे: स्फुरंति धूसरैः" इत्यभिधानचिन्तामणौ—चा० ]। क्वचित्कृष्णोरगभूषणा भस्माङ्गरागेश्वरस्य तनुरिव। विभाति। शेषं व्याख्यातं। कलापकम्।

५८. अत्र समुद्रपत्न्योर्गङ्गायमुनयोर्जलसंनिपाते संगमेऽभिषेकात्स्नानात्पूतात्मनां। [ इति स्नानस्यापि महाफलोक्तिः—हे० ]। तनुत्यजां शुद्धात्मनां पुंसां तत्त्वावबोधेन तत्त्वज्ञानेन। [ ब्रह्मज्ञानेन—चा० ]। विनापि प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगो नास्ति किल। [ तथा श्रुतिः। "सितासिते सरिते यत्र संगते" इत्यादि। "या गतिर्योगमुक्तस्य तत्त्वज्ञस्य मनीषिणः। सा गतिस्त्यजतः प्राणान् गंगायमुनसंगमे" इति स्मृतिः—हे० "सितासिते यत्र सरितौ संगमे तत्राप्लुतासो दिवमुत्पतन्ति" "ये वै तन्वां विसृजन्ति धीरास्ते वै जना अमृतं भजन्ते" इत्यन्या श्रुतिः—चा० सु० ]। अन्यत्र ज्ञानादेव मुक्तिः। अत्र तु स्नानादेव मुक्तिरित्यर्थः।

५९. निषादाधिपतेः ( निषादानां कैवर्तानां अधिपतेः स्वामिनः ) गुहस्य तत्पुरमिदम्। यस्मिन्पुरे मया मौलिमणिं ( मुकुटरत्नं ) विहाय ( परित्यज्य ) जटासु बद्धासु रचितासु सतीषु सुमन्त्रः ( दशरथमंत्री ) हे कैकेयि तव कामा मनोरथाः फलिताः सफला जाता इत्यरुदत् ( विललाप )। "रुदिरश्रुविमोचने" इति धातोर्लुङ्।

६०. पुण्यजनाङ्गनानां यक्षस्त्रीणां पयोधरैः स्तनैर्निर्विष्ट उपभुक्तो हेमाम्बुजरेणुर्यस्य तत्। [ "भवेत्पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च" इति विश्वः—हे० ]। तत्र ताः क्रीडन्तीति व्यज्यते। ब्रह्मण इदं ब्रा-

---

58. Persons with their souls purified by bathing at this confluence of the two wives of the ocean, are never indeed again confined in body even without obtaining the true knowledge of the Supreme Being after they have left their mortal frame.

59. Here is the town of the lord of the Nishádás in which when I tied my matted hair having first put aside the crown, Sumantra began to weep exclaiming "O Kaikeyi, your desires have been fulfilled".

60. This is the river Sarayu whose source persons of reliable testimony declare to be the lake Bráhma, the pollen of whose golden lotuses is enjoyed by ( has on account of their sporting in it adhered to ) the breasts of the wives of the Punyajanas ( the Yakshas ), as the Invisible Principle (प्रकृति or productive principle ) is the cause of intelligence, the great principle.

---

| शङ्कनिशेत° | निर्धौत | स्फटिकाक्ष | समेत्य | पुष्पाति |
|---|---|---|---|---|
| शुभ्रनिवेश° | निर्धूत | स्फुटिकाक्ष | समेता | पुष्णाति |
| | | स्फटिकाख्य | | पुष्यति |

58. D. शरीरिणां for तनुत्यजां.

59. E. reads पुरस्ताद् for इदं तद्. D.E. with Vijay. °मणीन् for °मणिं. E. H. सुमंतुः, Vijay. सुमंतः for सुमंत्रः.

60. D. निर्घृष्ट° for निर्विष्ट°.

जलानि या तीरनिखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरंगमेधावभृतावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥
यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।
सामान्यधात्रीमिव मानसं मे संभावयत्युत्तरकोसलानाम् ॥ ६२ ॥
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरंगहस्तैरुपगूहतीव ॥ ६३ ॥

ह्मम् । " नस्तद्धिते " इति टिलोपः । ब्राह्मं । [ ब्रह्मणः आगतं ब्राह्मं ब्रह्मकमण्डलोरित्यर्थः–हे० ] । सरो मानसाख्यं यस्याः सरय्वाः । बुद्धेर्महत्तत्त्वस्याव्यक्तं प्रधानमिव । [ मूलप्रकृतिरिव । अनुत्पादितकार्याणि सत्त्वरजस्तमांसि मूलप्रकृतिः । यथा कुसूलस्थव्रीहयः विष्णावप्यर्जिताव्यक्तावित्यत्र शब्दादव्यक्तं प्रकृतिरिति क्षीरस्वामी–हे० " कथयन्त्यवं सांख्या महदाद्याः प्रकृतिविकृतयः सप्त " इति प्रकृतेर्महान् भूतोऽहंकारस्तस्माद्गणश्च षोडशकः तस्यापि षोडशकात्पञ्चकस्य पञ्चभूतानि । "अभिमानोऽहंकारस्तस्माद्द्विविधः प्रवर्तते सर्गः । एकादशकश्च गणस्तन्मात्रः पञ्चकस्यैव"–चा० यथा सांख्या योगिनः बुद्धेरव्यक्तं कारणं वदन्ति । यदुक्तं । "अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके" अव्यक्तात्किल बुद्धेरुत्पत्तिरिति सांख्याः–व० ] । कारणं ( उत्पत्तिस्थानं ) आप्तस्य वाच आप्तवाचो वेदाः । यद्वा बहुव्रीहिणा मुनयः । [ आप्ताश्च ता वाचश्च । आप्तानां ऋषीणां इति वा–हे० ] । उदाहरन्ति प्रचक्षते । [ यथा बुद्धेः कारणं आप्तवाचः वेदाः तथा सरय्वाः कारणं मानससरोवर इत्यन्वयः–सु० ] ।

६१. यूपः संस्कृतः पशुबन्धनार्हो दारुविशेषः । तीरनिखातयूपा या सरयूस्तुरंगमेधा अश्वमेधास्तेष्ववभृथार्थमवावतीर्णैरवगाढैरिक्ष्वाकुभिरिक्ष्वाकुगोत्रापत्यैर्नृपैः पूर्वैः । तद्राजत्वादणो लुक् । पुण्यतरीकृतान्यतिशयेन पुण्यानि कृतानि जलानि । [ यद्वा । नौस्तरणी तरीः—हे० ] । अयोध्यां राजधानीं । ( राजानो धीयन्तेऽस्यां तां तथोक्तां । इत्यधिकरणेल्युट् टित्वान्ङीप् ) । नगरीमनु समीपे । तया लक्षितयेत्यर्थः । अनुशब्दस्य " लक्षणेत्थंभूत—" इत्यादिना कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । वहति प्रापयति ।

६२. यां सरयूं मे मानसं । कर्तृ । सैकतं पुलिनम् । तदेवोत्सङ्गः । तत्र यत्सुखं तत्रोचितानां प्राज्यैः प्रभूतैः । ( " प्रभूतं प्रचुरं प्राज्यं " इत्यमरः ) । पयोभिरम्बुभिः क्षीरैश्च । " पयः क्षीरं पयोऽम्बु च " इत्यमरः । परिवर्धितानां पुष्टानामुत्तरकोशलानामुत्तरकोशलेश्वराणां सामान्यधात्रीं साधारणमातरमिव । [ उपमातरमिव हे० चा० ] । " धात्री जनन्यामलकी वसुमत्युपमातृषु " इति विश्वः । संभावयति ।

६३. मदीया जननी कौशल्येव मान्येन पूज्येन तेन राज्ञा दशरथेन वियुक्ता सेयं सरयूर्दूरे वसन्तम् ।

---

61. Which with the sacrificial posts erected on its banks propels her waters (flows) by the capital of Ayodhyá,—the waters which are made more holy (than before) by Ikshváku kings who entered into them for the sacred ablutions necessary for the अश्वमेध sacrifice.

62. Whom my mind honours as the common mother (or nurse) of the lords of the Uttarakos'alas, who are familiar with the pleasure of moving on her lap of sandy banks, and who are nourished (or brought up) by the abundance of milk-like waters.

63. And this I say is the river Sarayu which like my mother being separated from the

---

61. B. C. E. H. with He. Chá. Din. Va. Su. Dhar. Vijay. and Vija. °यूपैः for °यूपा.

62. E. reads पुण्यैः for प्राज्यैः. D. प्रभूतपुण्यैरिव for सामान्यधात्रीमिव. So also noticed by He.

63. B. and Va. मान्येन for मान्येन. So also noticed by He.; D. and Vijay. विमुक्ता for वियुक्ता; B. C. E. H. with Chà. Din. Va. Vijay. and Su. अपि सन्तं for वसन्तं.

विरक्तसंध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥
अद्धा श्रियं पालितसंगराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन्संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥
असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥

ओष्यागच्छन्तमित्यर्थः । मां पुत्रभूतं शिशिरानिलैः ( शिशिरैः शीतलैः अनिलैः वातैः ) तरंगैरेव हस्तैः (करैः ) उपगूहतीवालिङ्गतीव ।

६४. विरक्तातिरक्ता या संध्या तद्वत्कपिशं ताम्रवर्णम् । पृथिव्या इदं पार्थिवम् रजो धूलिः पुरस्तादग्रे यतो यस्मात्कारणादुज्जिहीते उद्गच्छति । तस्मात् । हनूरस्यास्तीति हनुमान् । [ हनुर्वदनैकदेशः । " कुत्सितौ यस्य " इति निन्दायामतुप् । अन्येषामपि दृश्यते इति दीर्घः । यथा पुरुषः पूरुषः इति । तस्य हि किल जातमात्रस्य रविरथमुत्पद्य पक्वं फलं इति रविं जिघांसोः रणे हनुर्भग्ना इति श्रूयते । " कपोलौ तत्परा हनुः " इत्यमरः । " हनूमान् हनुमानपि " इति शब्दभेदप्रकाशे । भरतस्य वार्तानिवेदनार्थं हनुमान् प्रेषितः इत्यनेनैव ज्ञेयं । श्रीरामवनप्रवेशसमये राम चतुर्दशवर्षेष्विति विहितेषु समनन्तरं दिने मध्याह्नसमये यदि भवान्नागतः तदाग्निं प्रवेक्ष्यामीति भरतस्य प्रतिज्ञापि सूचिता—हे० ] । " शरादीनां च " इति दीर्घः । तेन कथिता प्रवृत्तिरस्मदागमनवार्ता यस्मै स भरतः ससैन्यः सन्मां प्रत्युद्गत इति शङ्के तर्कयामि । " शङ्का भयवितर्कयोः " इति शब्दार्णवे । अत्र यत्तदोर्नित्यसंबन्धात्तच्छब्दलाभः ।

६५. किं च । साधुः सज्जनः स भरतः । " साधुर्वार्धुषिके चारौ सज्जने चापि वाच्यवत् " इति विश्वः । पालितसंगराय । [ पालितः संगरः चतुर्दशवर्षाणि वनवासरूपा रावणवधविषया वा प्रतिज्ञा येन तस्मै । " प्रतिज्ञागूश्च संगरः " इत्यभिधानचिन्तामणिः—हे० चा० सु० ] । पालितपितृप्रतिज्ञाय मे मह्यमनघामदोषां भोगाभावादनुच्छिष्टां किं तु संरक्षितां श्रियम् । मृधे युद्धे खरादीन्हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वामिव प्रत्यर्पयिष्यत्यद्धा सत्यम् । " सत्ये त्वद्धाञ्जसा द्वयम् " इत्यमरः । [ खरदूषणत्रिशिरसां युद्धे सीता सौमित्रिहस्ते स्थापिताभूत् । तथा द्वादशसर्गे । " निदधे विजयाशंसां चापे सीतां च लक्ष्मणे " इति—हे० ] ।

६६. असौ पदातिः ( पद्भ्यां अतति गच्छतीति पदातिः ) पादचारी चीरवासाः ( चीरं मुनिवस्त्रं वा-

honourable king, my sire, as it were, embraces me being yet at a distance, with her arms of waves the breeze coming from which is cool.

64. Since the dust of the earth as ruddy as the crimson twilight, is rising up before me, I think Bharata to whom the news of my arrival has been communicated by Hanumân is coming up to me with the army.

65. No doubt that good man will restore to me, who have kept the promise of my father, the Royal Fortune ( kingdom ) well-protected ( but not polluted by enjoyment ), as Lakshmana restored you well-protected and faultless to me when returned after having killed Khara and others in the battle.

66. Here is Bharata dressed in rags with अर्घ्य ( provisions of worship ) in his hand, advanc-

64. B.C. E. H. with He. Châ. Din. Va. Su. Vijay. Dhar. and Vija. °परुषं for °कपिशं; A. and Châ., यतः., B. C. E. H. with He. Vijay. Va. and Su., यथा, D. यस्मात्. D2. एतत्; D. हनुमान् for हनूमत्°.

65. B. C. E. H. with He. Châ. Din. Vijay. and Va., अत्र for अद्धा. Châ. notices the reading given in our text. E. reads रणे for मृधे.

66. B. C. E. H. with Châ. Din. Va. Vijay. and Su., अर्धं° for अर्घ्य°.

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥
एतावदुक्तवति दाशरथौ तदीयामिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभिरुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥
तस्मात्पुरःसरविभीषणदर्शितेन सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन मार्गेण भङ्गिरचितस्फाटिकेन रामः ॥ ६९ ॥

सी यस्य सः ) वल्कलवसनो भरतः पश्चात्पृष्ठभागेऽवस्थापिता वाहिनी सेना येन स तथोक्तः सन् । [ इति विनयोक्तिः—हे० चा० ] । " नद्यृतश्च " इति कप् । गुरुं वसिष्ठं पुरस्कृत्य वृद्धैः । [ विजयधर्मपालसिद्धार्थसुमंत्रराष्ट्रवर्द्धमानाद्यैः-हे० ] । अमात्यैः सहार्घ्यपाणिः । [ अर्घार्थमिदं अर्घ्यं अर्घ्यं पाणौ यस्य सः । गड्वादेः परा सप्तमी । अर्घ्यसहितः पाणिर्यस्य इति शाकपार्थिवादिः वा-हे० ] । सन्मामभ्युपैति ।

६७. यो भरतः पित्रा विसृष्टां दत्तामङ्कमुत्सङ्गं च गतामपि । यां श्रियं युवापि मदपेक्षया मद्भक्तया भोक्ता सन् । तृन्नन्तत्वात् " न लोक—" इति षष्ठीनिषेधः । इयन्ति वर्षाण्येतावतो वत्सरान् । [ चतुर्दश वर्षाणि-हे० चा० ] । अत्यन्तसंयोगे द्वितीया । तया श्रिया सह । स्त्रियेति च गम्यते । उग्रं दुश्चरमासिधारं नाम व्रतं । [ व्रतस्थेन चिरकालं एकशयनस्थापि स्त्री नोपभुज्यतं तदसिधाराव्रतं—हे० " यत्रैकशयनस्थापि प्रमदा नोपभुज्यते । असिधाराव्रतं नाम वदन्ति मुनिपुंगवाः " । अथ वा । शयने मध्ये खड्गं विधाय स्त्रीपुंसौ यत्र ब्रह्मचर्येण स्वपितस्तदसिधाराव्रतमिति कश्चित्—चा० सु० ] । अभ्यस्यतीव वर्तयतीव । " युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरत् । अन्तर्निवृत्तसङ्गः स्यादासिधारव्रतं हि तत् " इति यादवः । इदं चासिधाराचंक्रमणतुल्यत्वादासिधारव्रतमित्युक्तम् ।

६८. दाशरथौ राम एतावदुक्तवति ( अभिदधाने ) सति विमानं पुष्पकम् । कर्तृ । तदीयां रामसंबन्धिनीमिच्छामधिदेवतया मिषेण विदित्वा । तत्प्रेरितं सदित्यर्थः । सविस्मयाभिः ( साश्चर्याभिः ) भरतानुगाभिः प्रकृतिभिः प्रजादिभिरुद्वीक्षितं ( ऊर्ध्वदृष्टं ) सज्ज्योतिष्पथादाकाशादवततार । [ इसुसोः सामर्थ्ये इति वा षत्वं—हे० चा० ] ।

६९. रामः सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेन दत्तो हस्तो हस्तावलम्बो यस्मै तादृशः सन्

ing on foot accompanied by the old-ministers, having placed Vasistha our family preceptor in front and stationed his army behind.

67. Who though in youth out of regard for me did not enjoy the fortune transmitted to him by our father, even though it was placed on his lap ( thrust on him ). It appears that he has been, as it were, practising with her the rigid vow of असिधारा for so many years ( i. e. fourteen years ).

68 When the son of Das'aratha said so, the celestial vehicle, having known his wish through ( under the direction of ) the presiding deity, alighted from the path of luminaries ( the sky ) being gazed at by the subjects who had come after Bharata in wonderment.

69. Then Râma supporting himself on the arm of the king of monkeys who was clever in his attendance, alighted from the vehicle by a way formed of a flight of steps that were made of marble not far from the surface of the earth, which was pointed out to him by Bibhishana advancing in front.

67. B. C. E. H. with He. Vijay. and Châ., निसृष्टां for विसृष्टां; D. अङ्गगतां for अंकगतां; B. D. and Châ. नितान्तकष्टं for तया सहोग्रं.

68. B. C. E. H. with He. Châ. Din. Vijay. Va. Su. Dhar. and Vija. ज्योतिःपथात् for ज्योतिष्पथात्.

69. E. reads स्फुटिकेन for स्फटिकेन.

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य स भ्रातरं भरतमर्घ्यपरिग्रहान्ते ।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥
श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान् ॥
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातैर्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥
दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरःप्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥७२ ॥

स्थलत्वात्पुरःसरः ( अग्रेसरः ) विभीषणस्तेन दर्शितेनादूरमासन्नं महीतलं यस्य तेन भङ्गिभिर्विच्छित्तिभिः । [ " भङ्गिर्व्याकृतौ विच्छितौ च " इति केशवः—चा० व० ] । रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्वणा मार्गेण तस्माद्यानात्पुष्पकादवातरदवतीर्णवान् । तरतेर्लङ् ।

७०. प्रयतः ( नियमवान् ) स राम इक्ष्वाकुवंशगुरवे वशिष्ठाय । [ इति कर्मणि द्वितीया व्याख्या क्रियया यमभिप्रैतीति चतुर्थी इति रूपमालायां । कुमारसंभवेऽपि । " प्रणम्य शितिकण्ठाय " इति—हे० ]। प्रणम्य नमस्कृत्यार्घ्यस्य परिग्रहः स्वीकारस्तस्यान्ते ( अवसाने ) पर्यश्रुः [ अश्रुपरिगतः । कुगतीति समासः—हे० ] । परिगतानन्दबाष्पः सन् । भ्रातरं भरतमस्वजतालिङ्गत् । तस्मिन्रामे भक्त्यापोढः प्रतिहतः पितृराज्यमहाभिषेको येन तस्मिन्मूर्धन्युपजघ्रौ च । [ प्रेमातिशये एष वृद्धाचारः–हे० चा० ] । " घ्रा गन्धोपादाने " लिटि रूपम् ।

७१. श्मश्रूणां मुखरोम्णां प्रवृद्ध्या संस्काराभावादभिवृद्ध्या निबन्धनया वा जनिता आननेषु विकृतिर्येषां तानत एव प्ररोहैः शाखावलम्बिभिरधोमुखैर्मूलैर्जटिलाञ्जटावतः प्लक्षान्न्यग्रोधानिव स्थितान् । प्रणमतो मन्त्रिवृद्धांश्च शुभैः कृपार्द्रैर्दृष्टिपातैः ( अवलोकनैः ) वार्तस्यानुयोगेन कुशलप्रश्नेन । ( " वार्तं फल्गुन्यरोगे च" । "प्रश्नोऽनुयोगः पृच्छा च " इत्युभयत्राप्यमरः ) । मधुराक्षरया वाचा चान्वग्रहीदनुगृहीतवान् ।

७२. अयं मे दुर्जातबन्धुरापद्बन्धुः । " दुर्जातं व्यसनं प्रोक्तं " इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः । ए-

---

70. Pure in mind and body as he was, he having bowed down to the spiritual head of the Ikshváku family, after the acceptance of the provisions of worship ( अर्घ्य ), suffused with tears, embraced his brother Bharata and smelt his head which had been deprived, through his ( Bharata's ) attachment to him, of the great coronation—water conferring ( on Bharata ) the kingdom of his father.

71. By casting looks of favour and with a speech full of sweet ( kind ) words of inquiry about their well-being he received the old ministers who were bowing down to him, and a change on whose appearance was produced by the growth of hair, and who therefore appeared like the fig trees bushy with root-fibers ( hanging down from their branches ).

72. "This is the king of bears and monkeys who was my friend in adversity,—here is the son

---

70. B. C. E. H. with Va. Vijay. and Su., स भ्रातरं for सभ्रातरं; B. C. E. H. with He. Chà. Din. Va. Su. Vijay .Dhar. and Vija. अर्घं° for अर्घ्य°,

71. A. D. E. °आकृति° for°आनन°. B. C. with Chà. Va. and Su., तान् for च; B. Su. and Din., वृक्षान् for प्लक्षान्; D. मंत्रिपुत्रान् for मंत्रिवृद्धान्. So also noticed by He.; D.प्रत्यग्रहीत् for अन्वग्रहीत्; B. C. E. H. with He. Vijay. and Va., °दृष्टिदानैः for दृष्टिपातैः.

72. A. दुर्जानबन्धुः, B. C. E. H. with He. Châ. Din. Va. Su. Dhar. Vijay. and Vija., दुःखैकबन्धुः, D. अज्ञातबन्धुः. So also noticed by He.; D. समरे च for समरेषु. A. D. आदरेण for आदृतेन. So also noticed by He.

सौमित्रिणा तदनु संससृजे स चैनमुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ॥
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३ ॥
रामाज्ञया हरिचमूपतयस्तदानीं कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान् ।
तेषु क्षरत्सु बहुधा मदवारिधाराः शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४ ॥

च समरेषु पुरःप्रहर्ता ( अग्रयोधी ) पौलस्त्यो विभीषणः । इत्याहतेनादरवता । कर्तरि क्तः । रघूणां नन्दनेन रामेण कथितावुभौ विभीषणसुग्रीवौ लक्ष्मणमनुजमपि व्युत्क्रम्य आलिङ्गनादिभिरसंभाव्य भरतो ववन्दे । [ अत्र हि चारित्रवर्द्धनः । व्युत्क्रम्य रामनमस्क्रियानंतरोचितं लक्ष्मणाश्लेषं विहाय भरतो ववन्दे नमश्चकार । अथ वा । लक्ष्मणं व्युत्क्रम्य लक्ष्मणप्रणतिं परित्यज्य तौ ववन्दे इति व्याख्यायां लक्ष्मणस्य ज्येष्ठत्वं प्रतीयते इति ।

७३. तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे संगतः । " सृजविसर्गे " दैवादिकात्कर्तरि लिट् । नम्रशिरसं प्रणतमेनं सौमित्रिमुत्थाप्य भृशं गाढमालिलिङ्ग च । किं कुर्वन् । रूढेन्द्रजित्प्रहरणव्रणैः ( रूढानि जातानि इन्द्रजितः रावणेः प्रहरणेन आयुधेन यानि व्रणानि क्षतानि तैः ) कर्कशेनास्य सौमित्रेरुरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन्निव पीडयन्निव। क्लिश्नातिरयं सकर्मकः। "क्लिश्नाति भुवनत्रयम्" इति दर्शनात् । ननु रामायणे- " ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः । अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् " इति भरतस्य कानिष्ठ्यं प्रतीयते। किमर्थं ज्यैष्ठ्यमवलम्ब्यानार्जवेनश्लोको व्याख्यातः। सत्यम् । किं तु रामायणश्लोकार्थष्टीकाकृतोक्तः श्रूयताम् । " ततो लक्ष्मणमासाद्य-" इत्यादिश्लोक आसादनं लक्ष्मणवैदेह्योः । अभिवादनं तु वैदेह्या एव ।अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्येतेति ।[ इह हि हेमाद्रिः । सौमित्रिः एनं नम्रशिरसं भरतं उत्थाप्य भृशं गाढं आलिलिंग च । नम्रशिरस्त्वं च भरतस्य रामानुगमनयुद्धशुश्रूषाद्यभावादित्येके । चारित्रवर्द्धनस्तु एतदेव । स च भरतः अस्यलक्ष्मणस्योरःस्थलेन । स्वभुजमध्यं क्लिश्यन्निवालिलिंग । एतदेव सुमतिविजयस्य ] ।

७४. तदानीं हरिचमूपतयो रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रानारुरुहुः । बहुधा [ सप्तभिः प्रकारैः । बहुगणेति संख्यात्वं संख्याया धा-हे० ] । मदवारिधाराः ( दानोदकधाराः ) क्षरत्सु वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखान्युपलेभिरेऽनुबभूवुः ।

---

of Pulastya who was foremost in dealing a blow in the battle-field, "—thus introduced by the descendant of Raghu with great regard, Bharata saluted them both passing over Lakshmana ( without greeting him ).

73. Then he joined with the son of Sumitrá, and he ( i. e. Lakshmana ) having made him rise who had his head bent down at his feet, embraced him closely with his chest ( lit. the surface of his chest ) hardened by the scars made by the weapons of Indrajit thereby paining as it were, his ( Bharata's ) breast.

74. Then the chiefs of the monkey legions having assumed human forms on the occasion at the order of Ráma, mounted the back of huge elephants. Herein they enjoyed the pleasure of sitting on mountains since the streams of ichor were dripping down from the various parts of their bodies.

---

73. H. reads उरस्थलेन for उरःस्थलेन.

74. B. C. E. H. with Chà. Din. Va. Vijay. and Su., येषु for तेषु.

सानुप्लवः प्रभुरपि क्षणदाचराणां भेजे रथान्दशरथप्रभवानुशिष्टः ।
मायाविकल्परचितैरपि ये तदीयैर्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥
भूयस्ततो रघुपतिर्विलसत्पताकमध्यास्त कामगति सावरजो विमानम् ।
दोषातनं बुधबृहस्पतियोगदृश्यस्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६ ॥
तत्रेश्वरेण जगतां प्रलयादिवोर्वीं वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७॥

७५. सानुप्लवः सानुगः । ( प्लुगतौ । " पचाद्यच् " ) । "अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः" इति यादवः । क्षणदाचराणां ( क्षणदासु रात्रिषु चरन्तीति क्षणदाचरास्तेषां रक्षसां ) प्रभुर्विभीषणोऽपि । प्रभवत्यस्मादिति प्रभवः । जनको दशरथः प्रभवो यस्य स दशरथप्रभवो रामः । तेनानुशिष्ट आज्ञप्तः सन् रथान्भेजे । तानेव विशिनष्टि——ये रथा मायाविकल्परचितैः संकल्पविशेषनिर्मितैरपि तदीयैर्विभीषणीयैः स्यन्दनै रथैस्तुलितकृत्रिमभक्तिशोभास्तुलिता समीकृता कृत्रिमा क्रियया निर्वृत्ता भक्तीनां शोभा येषां ते तथोक्ता न भवन्ति । तेऽपि तत्साम्यं न लभन्त इत्यर्थः । कृत्रिमेत्यत्र "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययः । " क्त्रेर्मम्नित्यम् " इति मबागमः ।

७६. ततो रघुपतिः सावरजो भरतलक्ष्मणसहितः सन् । विलसत्पताकं कामगति स्वेच्छाचारि कामेनेच्छानुसारेण गतिर्यस्य तद्विमानं भूयः पुनरपि । बुधबृहस्पतिभ्यां योगेन । [ सज्जीकरणार्थं शत्रुघ्नः पुर्यामेव स्थितः अतो बुधबृहस्पतियोगसाम्यं–हे० ] । दृश्यो दर्शनीयस्तारापतिश्चन्द्रो दोषाभवं दोषातनम् । [सच्छायत्वात्–हे० ] । " सायंचिरंप्राह्णे–" इत्यादिना दोषाशब्दादव्ययाट्ट्युप्रत्ययः । तरलविद्युच्चञ्चलतडिद्व । [ इति पताकासाम्यं–हे० ] । अभ्रवृन्दमिव । अध्यास्ताधिष्ठितवान् ।

७७. तत्र विमाने । जगतामीश्वरेणादिवराहेण प्रलयादुर्वीमिव । [ इति भूतपूर्वः सर्वथा नाशः सूच्यते–हे० ] । वर्षात्ययेन शरदागमेनाभ्रघनान्मेघसंघातादिन्दो रुचं चन्द्रिकामिव । [ इति कान्त्यतिशयोक्तिः–

---

75. Even the lord of the night-rangers with his attendants ordered by the son of Das'arath, took his seat upon the chariots which were not equalled in the beauty of their artificial construction even by his own ( Bibhishana's ) chariots, though the latter were formed according to the desigus formed in imagination.

76. Then the lord of the Raghus accompanied by his two younger brothers again took his seat npon the celestial vehicle with flags fluttering in air which moved at the will of the rider, as the lord of the stars ( moon ) beautiful in conjunction with Budha ( Mercury )and Brihaspati ( Jupiter ) takes his place, in the midst of a cluster of clouds, displaying itself in the evening and having a tremulous flash of lightning.

77. There Bharata saluted the daughter of the Mithila king now happy who was rescued from the torments ( or clutches ) of the ten-headed demon by Rāma, like the earth rescued from the deluge of waters by the Lord of the worlds ( three worlds ), or like the moonlight rescued from a cluster of clouds by the departure of rainy season.

---

75. B. C. E. H. with He. Chà. Din. Va. Su. Dhar. Vijay. and Vija., रथं for रथान्; B. C. E. H. with He. Chà. Din. Va. Su. Dhar. Viiay. and Vija., अनुशिष्टं for अनुशिष्टः; A. C. E. H. with He. Va. Vijay. and Su.; विकल्परचितैः, B. विकल्पितविधैः, D. and Châ., विकल्परचनैः; B. C. E. H. with Cha. Din. and Su., यः for ये; B. C. E. H. with Chà. Din. Va. Vijay. and Su., °शोभः for °शोभाः.

76. A. D. E. H. and Va., ताराधिपः. for तारापतिः; B. E. H. and Va., °कूटं for °वृन्दं.

77. B. D. with Chà. Din. Va. Vijay. and Su., अभ्युद्धृतां for प्रत्युद्धृतां.

लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्वन्द्यं युगं चरणयोर्जनकात्मजायाः ।
ज्येष्ठानुवृत्तिजटिलं च शिरोऽस्य साधोरन्योन्यपावनमभूदुभयं समेत्य ॥ ७८ ॥
क्रोशार्धं प्रकृतिपुरःसरेण गत्वा काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः साकेतोपवनमुदारमध्युवास ॥ ७९ ॥

हे० ] । ( "घनः सान्द्रे दृढे दार्ढ्ये विस्तारे लोहमुद्गरे " इति विश्वः ) । रामेण दशकण्ठ एव कृच्छ्रं संकटं तस्मात्प्रत्युद्धृतां धृतिमतीं संतोषवतीं मैथिलसुतां सीतां भरतो ववन्दे ।

७८. लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन निरासेन दृढव्रतमखण्डितपातिव्रत्यमत एव वन्द्यं ( नमस्करणीयं ) तज्जनकात्मजायाश्चरणयोर्युगं ज्येष्ठानुवृत्त्या ( अनुसारेण ) जटिलं जटायुक्तं साधोः सज्जनस्यास्य भरतस्य शिरश्चेत्युभयं समेत्य मिलित्वान्योन्यस्य पावनं शोधकमभूत् ।

७९. आर्यः । [ महाकुलीनः—हे० ] । पूज्यः काकुत्स्थो रामः प्रकृतयः प्रजाः पुरःसर्यो यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण । [ शत्रुघ्नस्य पुरःसरकरणे व्यापृतत्वात्—हे० ]। क्रोशोऽध्वपरिमाणविशेषः । क्रोशार्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिता उपकार्याः पटभवनानि यस्मिंस्तदुदारं महत्साकेतस्यायोध्याया उपवनमध्युवासाधितष्ठौ । [ " उपान्वध्याङ्वसेति कर्म "—हे० ] । " साकेतः स्यादयोध्यायां कोशला नन्दिनी तथा " इति यादवः ।

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये दण्डकाप्रत्यागमनो नाम त्रयोदशः सर्गः ।

## चतुर्दशः सर्गः ।

भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥
संजीवनं मैथिलकन्यकायाः सौन्दर्यसर्वस्वमहानिधानम् ।
शशाङ्कपङ्केरुहयोः समानं रामस्य वन्दे रमणीयमास्यम् ।

१. अथोपवनाधिष्ठानानन्तरं दाशरथी रामलक्ष्मणौ । उपघ्नतरोराश्रयवृक्षस्य। "उपघ्न आश्रये " इति निपातः । तस्य छेदाद्व्रतत्यौ लते इव । " वल्ली तु व्रततिर्लता " इत्यमरः । भर्तुर्दशरथस्य प्रणाशात् । [उ-

78. That adorable pair of feet of the daughter of Janaka, which had observed the firm vow of spurning the supplications of the lord of Lankâ, and the head of the good man, the hair on which had become matted on account of his following the course of his elder brother, coming together, became mutually sanctifying.

79. The noble descendant of Kakutstha having gone over half a koss ( or a part of koss ) in his Pushpaka-car whose speed was gentle and in the front of which the people of अयोध्या were moving, made a halt in an extensive garden out-side the city of Sâketa ( Ayodhyá ), where tents were pitched by order of S'atrughna.

1. Then there the two sons of Das'aratha had together an interview with their mothers

78. A. D. °जटिलेन for °जटिलं च.

79. D. °पुरःसरोऽपि for °पुरःसरेण.

1. B. with Chà. Din. Vijay. and Su., read the following for the first stanza:—" मन्याबली तत्र चिरप्रवासादपश्यतां दाशरथी जनन्यौ । कुमुद्वतीशीतमरीचिलेखे दिवेव रूपान्तरदुर्विभाव्ये " । So also noticed by He.; Chà. commenting on this calls it a क्षेपक; B. अनु for अथ.

उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ।
विस्पष्टमस्त्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥
आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिस्यन्द इवावतीर्णः ॥ ३ ॥
ते पुत्रयोर्नैर्ऋतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ।
अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४ ॥

पसर्गादसमासेति णत्वम्—हे० ]। शोचनीयं ( शोच्यं ) दशान्तरमवस्थान्तरम्। " अवस्थायां वक्रान्ते स्याद्दशापि " इति विश्वः। प्रपन्ने प्राप्ते जनन्यौ कौशल्यासुमित्रे तत्र साकेतोपवने समं युगपदपश्यताम्। दृशेः कर्तरि लङ्।

२. यथाक्रमं स्वस्वमातृपूर्वकं प्रणतौ। [ प्रवृद्धानुक्रमेण–हे० ]। नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तावुभौ रामलक्ष्मणावुभाभ्यां मातृभ्यामस्त्रैरश्रुभिरन्धतया हेतुना। ( आनन्दबाष्पपरिप्लुतनेत्रत्वात् )। " अस्त्रमश्रु च शोणितम् " इति यादवः। विस्पष्टं न दृष्टौ किं तु सुतस्पर्शेन यत्सुखं तस्योपलम्भादनुभवाज्ज्ञातौ। [ गात्रस्पर्शजनिता या निर्वृतिस्तयोरभूत् तयैव पुत्राविस्यनुमितौ। प्राक् पुत्रालिङ्गनसुखस्य परिचितत्वात् सुतस्पर्शसुखस्योपालंभोऽनुभवस्तस्माज्ज्ञातौ–इति चा० ]।

३. तयोर्मात्रोरानन्दजः शिशिरः ( शीतलः ) बाष्पः शोकजमशीतमुष्णमश्रु। उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोर्जलम्। कर्म। अवतीर्णो हिमाद्रेर्निस्यन्दो निर्झर इव। बिभेद। [ दूरीचकार। गंगासरय्वौ हि हैमवत्यौ ग्रीष्मे हिमं क्षरतः इति प्रसिद्धिः—चा० ]। आनन्देन शोकस्तिरस्कृत इत्यर्थः।

४. ते मातरौ पुत्रयोरङ्गे शरीरे नैर्ऋतशस्त्राणां राक्षसशस्त्राणां मार्गान्व्रणान्। ( शस्त्रघातकिणान् )। आर्द्रान्सरसानिव। [ नूतनानिव—चा० ]। सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानामीप्सितमिष्टमपि वीरसूर्वीरमातेति शब्दं नाकामयेताम्। वीरप्रसवो दुःखहेतुरिति भावः।

who had been reduced to a lamentable change of condition on account of their husband's death, like a pair of creepers at the destruction of the tree which gives them support.

2. These two who had killed their enemies and who appeared magnificent for their achievements when bowing down ( saluting or paying obeisance ) to their mothers in order, were not distinctly seen by them ( their mothers ) in consequence of blindness caused by tears; but were ( simply ) recognized by experiencing the agreeable sensation of the touch of a son.

3. As the flow of melted snow from the Himālaya entering into the water of the गंगा and the सरयू heated in summer drives it off, so their cool tears of joy displaced the hot tears caused by grief.

4. They both compassionately passing their hands over the scars of wounds, caused by the weapons of the demons, on their body, as if they were still fresh, did not like for themselves the title of " mother of heroes " which is so eagerly coveted by the females of the kshatriya race.

2. A. सुतस्पर्शरसा°, D. मुखस्पर्शसुखो° for सुतस्पर्शसुखा°. H. with Vijay. विशिष्टमस्त्रान्धतया for विस्पष्टमस्त्रान्धतया.

3. B. C. D. E. H. with He. Chá. Din. Va. Su. Vijay. Dhar, and Vija. read °निस्पन्द for °निस्यन्द.

4. A. D. °घातान् for °मार्गान्. A. अकारयेतां, D. अपाकरोति for अकामयेतां. D2. reads this in a slightly different way :—"ते पुत्रयोर्नैर्ऋतशस्त्रमार्गान् स्थिरमस्त्रमार्ग वत्सलत्वात्। आर्द्रानिवाङ्गे सदयं स्पृशन्त्यौ भूयस्तयोर्जन्म समर्थयेताम् "।

क्लेशावहा भर्तुरलक्षणाहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥
उत्तिष्ठ वत्से ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥
अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥
सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

५. आवहतीत्यावहा । भर्तुः क्लेशावहा क्लेशकारिणी । अत एवालक्षणाहं सीतेति स्वं नामोदीरयन्ती स्वर्गः प्रतिष्ठास्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ वधूः स्नुषा । "वधूः स्नुषा वधूर्जाया" इत्यमरः । अभक्तिभेदेन । [तुल्यया भक्त्या—चा०] । ववन्दे । स्वर्गप्रतिष्ठस्येत्यनेन श्वश्रूवैधव्यदर्शनदुःखं सूचितम् । [ यद्विवाहसमनन्तरं भर्तुर्वनवासः श्वशुरस्य स्वर्गस्थित्या च भवत्योर्वैधव्यमभूदित्यात्मनो दुर्लक्षण्यं सूचितवतीत्यभिप्रायः इति—चा० ] ।

६. ननु वत्से ( पुत्रि ) उत्तिष्ठ । असौ सानुजो भर्ता तवैव शुचिना ( अपापेन ) वृत्तेन ( आचारेण ) महत्कृच्छ्रं दुःखं तीर्णस्तीर्णवान् । ( ननु इति पदं हेमाद्रिचारित्रवर्द्धनौ अत्र व्याचक्षाते ) । इति प्रियार्हां ( प्रियवचनयोग्याम् ) तां वधूं प्रियमप्यमिथ्या सत्यं ते श्वश्र्वावूचतुः । उभयं दुर्वचमिति भावः । ( तथाहि । " सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् " इति " नविव्यथे तस्य मनो नहि प्रियं प्रवक्तुमिच्छंति मृषा हितैषिणः " इति किराते च ) ।

७. अथ जनन्योरानन्दजलैरानन्दबाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतोः । [ " केतुर्ध्वजे पताकायां विग्रहोत्पातलक्ष्मसु " इति विश्वः—हे० ] । रामस्याभिषेकममात्यवृद्धाः ( अमात्येषु वृद्धाः मंत्रिप्रवराः ) तीर्थेभ्यो गङ्गाप्रमुखेभ्य आहृतैरानीतैः काञ्चनकुम्भतोयैः ( सुवर्णघटनीरैः ) निर्वर्तयामासुर्निष्पादयामासुः ।

८. रक्षःकपीन्द्रैः सरितो गङ्गाद्याः समुद्रान्पूर्वादीन्सरसीर्मानसादीश्च गत्वा । उपपादितान्युपनीतानि जलानि जिष्णोर्जयशीलस्य । " ग्लाजिस्थश्च ग्स्नुः " इति ग्स्नुप्रत्ययः । तस्य रामस्य मूर्ध्नि । विन्ध्यस्य वि-

---

5. " Here is the ill-omened Sitá who brought misery to her lord "—thus declaring her own name the daughter-in-law saluted with no difference of respect both the queens of her father-in-law who was tten dwelling in heaven.

6. " Rise, O daughter : why, was it not on the contrary by your own virtuous conduct that your husband got safe through the great calamity ( trial ) with his brother ? "—these pleasing and yet unfeined words they spoke to her who deserved kind treatment.

7. Then with waters brought in godlen jars from sacred water-places, the aged ministers performed the coronation-ceremony of the Banner of Raghu's race, which was already commenced by the tears of joy of the mothers.

8. On the head of that victorious Ráma fell waters fetched by the chiefs of the demons and leaders of monkeys, who went to rivers, seas, and lakes, as waters poured down by clouds fall on the top of the Vindhya.

5. B. with Chà. Va. and Su., उदाहरन्ती for उदीरयन्ती; A. D. स्वर्ग प्रविष्टस्य for स्वर्गप्रतिष्ठस्य.

7. H. reads तीर्थाभृतैः for तीर्थाहृतैः.

8. D. and Su., सरितः समुद्रान् for सरित्समुद्रान्.

तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत्पुनरुक्तदोषा ॥ ९ ॥
स मौलरक्षोहरिभिः ससैन्यस्तूर्यस्वनानन्दितपौरवर्गः ।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥ १० ॥
सौमित्रिणा सावरजेन मन्दमाधूतबालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन साक्षादुपायसंघात इव प्रवृद्धः ॥ ११ ॥
प्रासादकालागुरुधूमराजिस्तस्याः पुरो वायुवशेन भिन्ना ।
वनान्निवृत्तेन रघूद्वहेन मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

न्ध्याद्रेर्मूर्ध्नि ( शृंगे ) मेघप्रभवा आपः ( जलानि ) इव । अपतन् । [ विन्ध्यस्येति प्रत्यहं जायमानवृद्धिसूचकं—हे० ] ।

९. यो रामस्तपस्विवेषक्रिययापि तपस्विवेषरचनयापि सुतरामत्यन्तं प्रेक्षणीयस्तावद्दर्शनीय एव बभूव । तस्य राजेन्द्रनेपथ्यविधानेन राजवेषरचनयोदिता या शोभा सा पुनरुक्तं नाम दोषो यस्याः सा पुनरुक्तदोषा द्विगुणासीत् । [ पूर्वमपि तस्य रमणीयत्वात्किमाभरणैः प्रयोजनमिति भावः—हे० " रम्याणां विकृतिरपि श्रियं तनोति " । " किमिव हि मधुराणां मण्डनं नाकृतीनाम् " चा० ] ।

१०. स रामः ससैन्यस्तूर्यस्वनैरानन्दितपौरवर्गः सन् । मूले भवा मौलाः ( कुलक्रमागताः ) मन्त्रिवृद्धाः ( अमात्यमुख्याः ) तै रक्षोभिर्हरिभिश्च सह सौधेभ्यः ( हर्म्येभ्यः । धवलगृहेभ्यः ) उद्गतलाजवर्षां । ( भ्रष्टव्रीहीणां वर्ष वृष्टिर्यस्यास्तां ) । उत्तोरणां ( उच्छ्रिततोरणां वन्दुरमालां ) अन्वयराजधानीं ( रघुवंशराजधानीं ) अयोध्यां विवेश प्रविष्टवान् । ( " अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः " इत्येवं समार्थः श्लोकांशः ) ।

११. सावरजेन शत्रुघ्नयुक्तेन सौमित्रिणा लक्ष्मणेन मन्दमाधूते बालव्यजने चामरे यस्य स रथस्थो भरतेन धृतातपत्रः । ( धृतं आहितं आतपत्रं राजचिह्नं छत्रं यस्य तथोक्तः ) । एवं चतुर्व्यूहो रामः प्रवृद्धः साक्षादुपायानां सामादीनां संघातः समष्टिरिव । विवेशेति पूर्वेण संबन्धः ।

१२. वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमस्तस्य राजी रेखा । वनान्निवृत्तेन रघूद्वहेन रामेण

9. In him who already appeared exceedingly beautiful even by putting on an ascetic's dress, the beauty rising from wearing royal suit had a charge of repetition.

10. Accompanied by the aged ministers, demons and monkeys, he with his army, giving joy to the multitudes of citizens, by the sounds of the trumpets entered the capital of his forefathers, over the streets of which triumphal arches were raised, and ( filled ) with showers of Lâjas poured from the white-washed mansions.

11. He driving in a chariot gently fanned with two Châmaras by Saumitri with his younger brothers and with an umbrella held up by Bharata over his head, appeared like a visibly living collection of the four political expedients.

12. The line of smoke of the incense of Kâlâgaru issuing from the palace, being dispersed a

9. E. reads पुनरुक्तिदोषा for पुनरुक्तदोषा.

10. A. मौलरक्षोहरिभिः ससैन्यः, B. E. H. with He. Vijay. and Va., मौलरक्षोहरिमिश्रसैन्यः, C. मौलिरक्षोहरिमिश्रसैन्यः, D. Châ. and Su., पौररक्षोहरिमिश्रसैन्यः, D2. मौलिरक्षोहरिभिः सुसैन्यः; B. C. with Su. Vijay. Va. and Din., °पौरवर्गा, E. reads °पौरवर्ग for °पौरवर्गः. D. has °राजमार्गम् for °पौरवर्गः·

11. B. with H. Vijay. and Su., प्रसिद्धः. C. E. and Va., प्रवृत्तः for प्रवृद्धः.

12. A. D. °धूपराजिः for धूमराजिः; A. D. वायुवशाच्च, C. H. Din. and Châ.,

तस्य पूर्वोदितां निन्दां द्विजः पुत्रसमागतः ।
स्तुत्या निवर्तयामास त्रातुर्वैवस्वतादपि ॥ ५७ ॥
तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ ५८ ॥
दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥ ५९ ॥
उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६० ॥

परासुर्मृतो द्विजात्मजः प्राग्रामात्पूर्वं निववृते । ( जिजीवेत्यर्थः ) ।

५७. पुत्रसमागतः पुत्रेण संगतो द्विजो वैवस्वतादन्तकादपि त्रातू रक्षकस्य । ( " दत्ताभये त्वयि यमादपि दण्डधारे संजीवितः शिशुरयं मम चेयमृद्धिः " इति एवं समार्थः श्लोकांशः ) । "भीत्रार्थानां भयहेतुः " इत्यपादानात्पञ्चमी । तस्य रामस्य पूर्वोदितां पूर्वोक्तां निन्दां स्तुत्या निवर्तयामास ।

५८. अध्वरायाश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः सुग्रीवबिभीषणादयो राजानश्च । मेघा अम्भोभिः सस्यमिव । उपायनैरभ्यवर्षन् ।

५९. निमन्त्रिता आहूता महर्षयश्च भूम्याः संबन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न । " धिष्ण्यं स्थाने गृहे भेऽग्नौ " इत्यमरः । किं तु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्य एनं राममभिजग्मुः ।

६०. चत्वारि द्वाराण्येव मुखानि यस्याः सा चतुर्द्वारमुख्ययोध्या । उपशल्येषु ग्रामान्तेषु निविष्टैः । "ग्रामान्त उपशल्यं स्यात् " इत्यमरः । तैर्महर्षिभिः । सद्यः सृष्टलोका पितामहस्येयं पैतामही ( वैधसी ) तनुर्मूर्तिरिव । बभौ । ( वैधसी तनुरपि सद्यः सृष्टैः महर्षिभिः परिवारिता आसीदित्यर्थः ) ।

to his' capital bearing the ornament on his arm which had ceased to entwine round the neck of मैथिली.

57. The Bráhma*n*a who was reunited to his son undid the censure which he had first passed, by bestowing praises upon him who was a protector even from the god of death.

58. As the clouds pour down rain upon the crops, so the leaders of the Ràkshasas and the monkeys as well as the kings poured many presents upon him who had allowed his steed to move freely for the sacrifice.

59. Being invited great sages came to him from several quarters, leaving behind not only their earthly residences but even the starry ( luminous ) ones.

60. Ayodhyá with its four gates like so many mouths appeared owing to the sages having been quartered in the open space outside the town, like the form of Brahmà, with the newly created beings around it.

---

57. A. D. °समन्वितः E. °समागतैः for ° समागतः. H. reads पुत्रेण संगतः for पुत्रसमागतः.

59. E. reads उपजग्मुः for अभिजग्मुः.

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी ॥ ६१ ॥
विधेरधिकसंभारस्ततः प्रववृते मखः ।
आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ ६२ ॥
अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥
वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किंनरस्वनौ ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ ६४ ॥

६१. वैदेह्यास्त्यागोऽपि श्लाघ्यो वर्ण्य एव । कुतः । यस्मात् । प्राग्वंशः प्राचीनस्थूणो यज्ञशालाविशेषः । तद्वासिनः । नास्त्यन्या जाया यस्य तस्यानन्यजानेः । " जायाया निङ् " इति समासान्तो निङादेशः । पत्यू रामस्य हिरण्मयी सौवर्णी । " दाण्डिनायन"–आदिसूत्रेण निपातः । सा निरैव जाया पत्न्यासीत् । [ " यस्तु पिण्डः पितुः पाणौ विज्ञानो न च दत्तवान् । शास्त्रार्थातिक्रमाद्भीतः सपत्नीकः कथं यजेत् "–हे० ] । कविवाक्यमेतत् ।

६२. ततो विधेः शास्त्रादधिकसंभारोऽतिरिच्यमानपरिकरो मखः प्रववृते प्रवृत्तः । यत्र मखे । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । " घञर्थे कविधानम् " इति कः । अत्र कर्तृत्वलक्षणायाः क्रियाया विघ्ना अनुष्ठानविघातका राक्षसा एव रक्षिणो रक्षका आसन् ।

६३. अथ मैथिलेयौ मैथिलीतनयौ । " स्त्रीभ्यो ढक् " । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ । प्राचेतसो वाल्मीकिः । [ " प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन " इति रामायणे—हे० ] । उपज्ञायत इत्युपज्ञा । " आतश्चोपसर्गे " इति कर्मण्यङ्प्रत्ययः । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम् । प्राचेतसेनादौ ज्ञातमित्यर्थः । " उपज्ञा ज्ञानमाद्यं स्यात् " इत्यमरः । " उपज्ञोपक्रमं तदाद्याचिख्यासायाम् " इत्यादिना नपुंसकत्वम् । अय्यते ज्ञायतेऽनेनेत्ययनम् । रामस्यायनं चरितं रामायणं रामायणाख्यं काव्यम् । " पूर्वपदात्संज्ञायामगः " इति णत्वम् । उत्तरायणमितिवत् । इतस्ततो जगतुः । गायतेर्लिट् ।

६४. रामस्य वृत्तं वर्ण्यम् । वस्त्विति शेषः । वाल्मीकेः कृतिः काव्यम् । गेयमिति शेषः । तौ कुशलवौ

---

61. His repudiation of वैदेही was also commendable for while residing in the shed of sacrifice the golden image of सीता was a wife to him who did not take another wife.

62. Then sacrifice was begun with preparations larger and more grand than those laid down in the S'ástras as necessary. In this sacrifice the Rákshasas who are naturally its obsructors became themselves its protectors.

63. Meanwhile, being directed by their preceptor the two sons of Maithilí Kus'a and Lava, went about chanting the Rámáyana, first known by the son of Prachetas, in different parts of the world ( lit. here and there ).

64. With the incidents of Ráma's life——the composition of Válmíki——their voice like Kinnar's———why should they not be able to captivate the hearts of the hearers ?

---

61. D. with Vijay. reads प्राग्वंशजन्मनः for प्राग्वंशवासिनः. B. C. E. H. with Vijay. and Va., यस्यासीत्सैव, D. and Su. आसीद्यत्सैव, D2. and Cha. तस्यासीत्सैव for सैवासीद्यस्मात्.

63. Vijay. reads कलगिरैः for कुशलवौ. B. C. E. H. with He. Va. Vijay. and Su., °नोदितौ for °चोदितौ.

64. B. C. E. H. with He. Chá. Din. Va. Su. Dhar. Vijay. and Vija., °स्वरौ for °स्वनौ.

रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५ ॥
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥ ६६ ॥
वयोवेषविसंवादि रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७ ॥
उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥

किंनरस्वनौ किंनरकण्ठौ गायकौ । पुनरिति शेषः। अत एव तात्विक येन निमित्तेन तौ शृण्वतां मनो हर्तुमलं शक्तौ न स्याताम् । सर्वं सरसमित्यर्थः ।

६५. तं जानन्तीति तज्ज्ञाः । तैस्तज्ज्ञैरभिज्ञैर्निवेदितं ( ज्ञापितं ) तयोः कुशलवयो रूपे आकारे गीते च माधुर्यं रामणीयकं सानुजो रामः कुतूहली सानन्दः सन्यथासंख्यं ददर्श शुश्राव च ।

६६. तयोर्गीतश्रवण एकाग्रासक्ताश्रुमुखी । आनन्दादिति भावः । संसत्सभा । प्रातर्हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थलीव । बभौ शुशुभे । आनन्दपारवश्यान्निष्पन्दमास्त इत्यर्थः ।

६७. जनता जनानां समूहः । " ग्रामजनबन्धुसहायेभ्यस्तल् " इति तल्प्रत्ययः । वयोवेषाभ्यामेव विसंवादि विलक्षणं ( वयोवेषाभ्यामन्यत्र सर्वत्र सौसादृश्यं ) तदा तयोः कुशलवयोः रामस्य च सादृश्यं प्रेक्ष्य । ( तथा च रामायणे । " ऊचुः परस्परं चेदं सर्व एव समाहिताः। उभौ रामस्य सदृशौ बिम्बाद्बिम्बमिवोद्धृतौ । जटिलौ यदि न स्यातां न वल्कलधरौ यदि । विशेषं नाधिगच्छामो गायतो राघवस्य च " ) । नास्त्यक्षिकम्पो यस्मिन्कर्मणि तद्यथा तथा । नञर्थस्य नशब्दस्य बहुव्रीहिः । व्यतिष्ठितातिष्ठत् । " समवप्रविभ्यः स्थः " इत्यात्मनेपदं । विस्मयादनिमिषमद्राक्षीदित्यर्थः ।

६८. लोको जन उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान्यथा नृपतेः प्रीतिदानेषु । [ तथा च रामायणे । " श्रुत्वा विंशतिसर्गांस्तान् भ्रातरं भ्रातृवत्सलः । अष्टाद-

65. Being informed of the charming beauty and the fascinating power of music of the two boys, by persons able to appreciate them he with his brothers feeling curious saw their personal beauty and heard their ravishing songs.

66. The assembly, closely listening to their singing, with their faces streaming forth tears (of joy), appeared like a forest-ground unshaken by the breeze——dripping dews in the morning.

67. The people observing their resemblance to Râma in everything except age and dress stood gazing with unwinking eyes.

68. The people were astonished not much at their proficiency in the art of music as at the

65. B. C. with Vijay. and Châ., तज्ज्ञनिवेदितं for तज्ज्ञैर्निवेदितं.

66. B. C. E. H. with Châ. Din. Va Vijay. and Su., निस्पन्दिनी for निष्यन्दिनी; D. निवाता for निर्वाता. So also noticed by He.

67. B. C. E. H. He. with Châ. Din. Va. Su. Dhar. Vijay. and Vija., च सा for तदा; B. H. with Châ. Din. and Su., वीक्षापन्ना, C. with Vijay. and, Va., वीक्ष्यापन्ना So also noticed by He., D. व्रीडापन्ना, A2. विस्मयेन, D2. निर्निमेषं, E. व्यक्षिकंपं for नाक्षिकम्पं.

68. A. D. and Va., प्रीतिदानेन for प्रीतिदानेषु.

गेये केन विनीतौ वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७० ॥
स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः संपरिग्रहम् ॥ ७१ ॥

शसहस्राणि सुवर्णस्य महात्मनोः । प्रयच्छ शीघ्रं काकुत्स्थ यद्न्यदभिकांक्षितं "—वि० ]। वीतस्पृहतया नेःस्पृह्येण विसिष्मिये ।

६९. गेये को नु विनेता वामिति वा पाठः। वामिति युष्मदर्थप्रतिपादकं अव्ययं द्रष्टव्यं । तथा चायमर्थः—केन पुंसा वां । [ तथा प्रक्रियाप्रसादे वां इति युवां इत्यर्थे–हे० ]। युवां गेये गीतविषये विनीतौ शिक्षितौ । कर्मणि निष्ठाप्रत्ययः। इयं च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिमशंसतामुक्तवन्तौ । [ युवयोर्मध्ये कस्य च कवेरिति वा–हे० । युवयोः संबंधिनः कस्य कवेः इति केचिद्विपक्षितां व्याचक्षिरे–चा० ]। विनेतारं कविं चेत्यर्थः ।

७०. अथ सावरजो रामः प्राचेतसं वाल्मीकिमुपेयिवान्प्राप्तः सन् । देहमात्मन उरीकृत्य ( अंगीकृत्य )। आत्मानं स्थापयित्वेत्यर्थः। राज्यमस्मै प्राचेतसाय न्यवेदयत्समर्पितवान् ।

७१. करुणा प्रयोजनमस्य कारुणिको दयालुः । " प्रयोजनम् " इति ठञ् । " स्याद्दयालुः का-

disinterestedness of the king in making the generous gifts to them.

69. " By whom you ( two ) are instructed in the art of music, and of what poet is this the composition ? "—These queries being asked by the king himself they declared ( the name of ) Vâlmiki.

70. Then Râma together with his younger brothers went to Prâchetasa and offered to him the kingdom, and everything with the exception of his person.

71. Mentioning to Râma that the two sons of Maithili were his ( Rama's ) own sons, that tender-hearted poet requested him to take Sitá back ( lit for the acceptance of Sitá) .

69. A. गेये केन विनीतिर्वां also adopted by Dakshinâvarta, so says Châ.; D. गेये को नु विनेता वां also Malli. notices this and says:—गेये गीतविषये को नु वां युवां युवयोर्विनेता शिक्षकः। नुशब्दः प्रश्ने। " नु पृच्छायां वितर्के च " इत्यमरः. D2. गेये कोऽत्र विनेता वां. So also noticed by He., for गेये केन विनीतौ वां. The reading of our text is supported by eight commentators and also by B. C. E. H. and the Lakshmisena Ms. of Kolhapure collection; B. D. E. He. Châ. Din. Va. Vijay. and Su., कवेः कृतिः for कृतिः कवेः. E. reads वाल्मीकिं तौ for तौ वाल्मीकिं.

70. B. C. E H. with Chá. Din. Va. Su. Vijay. Dhar. and Vija., दूरीकृत्य for उरीकृत्य.

71. B. D. H. with He. Châ. Din. Va. Su. Dhar. Vijay. and Vija., रामस्य for रामाय; B. C. E. H. with He. Va. Vijay. Châ. Din. Su. Dhar. and Vija., तथात्मजौ for तदात्मजौ; D. तं परिग्रहं for संपरिग्रहं. Between 71-72. D. and Su., read " तदाकर्ण्य वचस्तस्य रामो राजीवलोचनः । सह हर्षविषादाभ्यां युक्तस्तं प्रोक्तवान् मुनिं " ।

| | | |
|---|---|---|
| तदाकर्ण्य वचस्तस्य. D. | सह. D. | युक्तस्तं प्रोक्तवान् मुनिं. D. |
| तदाकर्ण्य कर्णाभ्यां Su. | सम Su. | युयुजे नीतिकोविदः Su. |

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥
ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥
इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ७४ ॥
अन्येद्युरथ काकुत्स्थः संनिपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥
स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ ७६ ॥

त्विकः" इत्यमरः । स कवी रामाय तौ मैथिलेयौ तदात्मजौ रामसुतौ व्याख्याय सीतायाः संपरिग्रहं स्वीकार वव्रे ययाचे ।

७२. हे तात । ते स्नुषा सीता नोऽस्माकमक्ष्णोः समीपं समक्षम् । " अव्ययीभावे शरत्प्रभृतिभ्यः " इति समासान्तष्टच् । जातवेदसि वह्नौ शुद्धा । नास्माकमविश्वास इत्यर्थः । किं तु रक्षसो रावणस्य दौरात्म्यादत्रत्याः प्रजास्तां न श्रद्दधुर्न विशश्वसुः ।

७३. मैथिली स्वचारित्रमुद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु । विश्वासस्य बुद्धिरूपत्वात् " णौ गमिरबोधने " इति इणो गम्यादेशो नास्ति । ततोऽनन्तरं पुत्रवतीमेनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ।

७४. राज्ञेति प्रतिश्रुते प्रतिज्ञाते सति मुनिराश्रमाज्जानकीं शिष्यैः प्रयोज्यैः। स्वसिद्धिं स्वार्थसिद्धिं । [ स्वर्गापवर्गलक्षणां इति–हे० व० । यथा कश्चित्पुमान् नियमैः उपवासादिपुण्यैः स्वसिद्धिमानयति तथा–हे०] । नियमैस्तपोभिरिव । आनाययामास । ( नीवह्योः कर्मसंज्ञानिषेधात् शिष्यैरिति तृतीया ) ।

७५. अथ काकुत्स्थो रामः । अन्येद्युरन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्यानुसंधानाय पुरौकसः पौरान्संनिपात्य मेलयित्वा कविं वाल्मीकिमाह्वाययामासाकारयामास ।

७६. अथ । स्वर उदात्तादिः । संस्कारः शब्दशुद्धिः । तद्वत्या ऋचा सावित्र्योदर्चिषं सूर्यमिव । पुत्राभ्यामुपलक्षितया सीतया करणेनोदर्चिषं राममसौ मुनिरुपस्थित उपतस्थे ।

72. Worthy Sire ! thy daughter-in-law was proved to be pure in fire ( i. e. tested in fire ) in our very presence , but people of this place did not believe in her purity ( or fidelity ) on account of the wicked nature of the demon.

73. Let therefore मैथिली produce confidence in the minds of the people in respect of her conduct, then in obedience to your command I will take her and her sons back.

74. When the king made this promise, the sage caused Jânakî to be brought from the hermitage by his disciples, as his success was brought about by means of his austerities.

75. Then on the next day, calling together ( assembling ) the citizens to introduce to them the matter in hand, the descendant of Kakutstha sent for the poet.

76. Then the Muni attended on ( came to ) the resplendant Rama together with Sîtâ

74. D. आह्वाययामास for आनाययामास.

75. A. C. संविमंत्र्य for संनिपात्य.

76. B. C. E. H. with He. Vijay. and Va., इव, D. Châ. and Su., च for असौ. C. E. H. with He. Châ. Din. Va. Su. and Vijay. सह for अथ; C. सा तथा for सीतया; B. वह्निं for सूर्यं D. उपास्थित: for उपस्थितः. So also noticed by He.

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥
जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ ७८ ॥
तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ ७९ ॥
अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८० ॥
वाङ्मनः कर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वंभरे देवि मामन्तर्धातुमर्हसि ॥ ८१ ॥

७७. कषायेण रक्तं काषायम् । "तेन रक्तं रागात्" इत्यण् । तेन परिवीतेन संवृतेन स्वपदार्पितचक्षुषा ( अधोदृष्टिना ) शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वीत्यन्वमीयतानुमिता ।

७८. तस्याः सीतायाः कर्मण आलोकपथाद्दर्शनमार्गात्प्रतिसंहृतचक्षुषो निवर्तितदृष्टयः सर्वे जनाः । फलिताः शालय इव । अवाङ्मुखा अवनतमुखास्तस्थुः । ( एवं शुद्धसमाचारायाः सीतादेव्याश्चारित्रभ्रंशोऽस्माभिराशंकित इति लज्जयेवेत्यर्थः ) ।

७९. आस्थितविष्टरोऽधिष्ठितासनो मुनिः । हे वत्से भर्तुर्दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते विषये लोकं निःसंशयं ( संदेहरहितं ) कुरु । इति तां सीतामशाच्छास्ति स्म ।

८०. अथ वाल्मीकिशिष्येणावर्जितं दत्तं पुण्यं ( पवित्रं ) पयः ( अम्बु ) आचम्य सीता सत्यां । [ शपथरूपां—चा० ] । सरस्वतीं वाचमुदीरयामासोच्चारयामास ।

८१. वाङ्मनःकर्मभिः पत्यौ विषये मे व्यभिचारः स्वालित्यं न यथा नास्ति यदि तथा तर्हि । विश्वं बिभर्तीति विश्वंभरा भूमिः । "संज्ञायां भृतृ—" इत्यादिना खच्प्रत्ययः । "अरुर्द्विषत्—" इत्यादिना मुमागमः । हे विश्वंभरे देवि मामन्तर्धातुं गर्भे वासयितुमर्हसि । [ "सर्वान्समागतान् दृष्ट्वा सीता

---

accompanied by her two sons, as on the refulgent sun with the Vedic verse ( Sâvitrî ) accompanied by proper intonation and purity.

77. That she was chaste ( pure ) was infered from her very form that was peaceful and clad in red garments, with the eyes directed towards her feet ( as a sign of modesty ).

78. All people withdrawing their eyes from the range of her sight stood with their heads down-cast like paddy plants with the burden of fruits.

79. The Muni sitting in his seat ordered her, saying "Dear child, make the people free from doubt concerning your own conduct in the presence of your husband."

80. Then sipping the holy water poured on her hand by a disciple of Vâlmiki, Sítâ gave utterance to these truthful words.

81. "If there is no violation of duty from me towards my husband whether in words, thought or action, O divine Earth! the supporter of universe! please to hide me in thy womb."

---

78. B. H. and Va., उर्वीमुखाः, C. E. and Châ., अधोमुखाः, D. with He. Vijay. and Su., अवाङ्मुखाः for तेऽवाङ्मुखाः.

79. E. reads वृत्ते स्वे for स्ववृत्ते.

81. B. विश्वंभरा for विश्वंभरे; B. देवी for देवि; B. अर्हति for अर्हसि.

एवमुक्ते तया साध्व्या रन्ध्रात्सद्योभवाद्भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२ ॥
तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्ररशना साक्षात्प्रादुरासीद्वसुंधरा ॥ ८३ ॥
सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन्पातालमभ्यगात् ॥ ८४ ॥
धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः ।
गुरुर्विधिबलापेक्षी शमयामास धन्विनः ॥ ८५ ॥

काषायवासिनी । अब्रवीत्प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी । यथाहं राघवादन्यं मनसापि न चिन्तये । तथ मे माधवी देवी विवरं दातुमर्हति । मनसा कर्मणा वाचा यथा रामं समर्चये । तथा मे माधवी देवी वि वरं दातुमर्हति " इति रामायणे—ध० ] ।

८२. साध्व्या पतिव्रतया तया सीतयैवमुक्ते सति सद्योभवाद्भुवो रन्ध्राच्छातह्रदं वैद्युतं ज्योतिरि प्रभामण्डलमुद्ययौ ।

८३. तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुष्यासीना । [ नागस्य शेषस्य फणा तस्यां उ त्क्षिप्तं च तत् सिंहासनं च तस्मिन्निषेदुषी—हे० ] । समुद्ररशना समुद्रमेखला साक्षात् । वसूनि धारयतं ति वसुंधरा भूमिः । " खचि ह्रस्वः " इति ह्रस्वः । प्रादुरासीत् । [ " ध्रियमाणं शिरोभिस्तु नागैरमिताि क्रमैः " इति रामायणे-हे० ] ।

८४. सा वसुंधरा भर्तरि प्रणिहितेक्षणां दत्तदृष्टिं । ( " ध्यातं प्रणिहितं लब्धे विन्यस्ते च समाहिते ' इति विश्वः ) । सीतामङ्कमारोप्य तस्मिन्भर्तरि रामे मा मेति मा हरेति व्याहरति वदत्येव । व्याहरन्तम नादृत्येत्यर्थः । " षष्ठी चानादरे " इति सप्तमी । पातालमभ्यगात् ।

८५. सीताप्रत्यर्पणमिच्छतीति तथोक्तस्य धन्विन आत्तधनुष्कस्तस्य रामस्य धरायां विषये संरम्भं [ को पं । उक्तं च रामायणे । वसुधे देवि भवति सीता निर्यात्यतां मम । दर्शयिष्यामि वा रोषं यथा मामवग च्छसि । न मे दास्यति चेत्सीतां यथारूपां महीतले । सपर्वतवनां कृत्स्नां व्यथयिष्यामि ते स्थितिं–ध० ]

82. No sooner were these words uttered by the chaste सीता than there rose up a halo of ligh like that of lightning from a chasm in the earth that manifested itself at once.

83. In the centre of that halo of light there appeared the Goddess Earth herself having fo her girdle the ocean, seated on a throne held up on the expanded hood of the snake शेष.

84. She placed on her lap सीता whose eyes were directed towards her husband and took he away to the nether world, before her husband had time to exclaim "Oh, do not; pleas do not".

85. Brahmá knowing that fate is powerful appeased Ráma whose anger was excited agains the earth and who had taken up the bow, wishing for the restoration of सीता.

---

82. D. ततः for भुवः.

83. B. D. Chá. and Va., °निषादिनी for निषेदुषी; B. C. E H. with He. Chà. Din. Va. Vijay. Su. Dhar. and Vija., °वसना for °रसना.

84. A. D & Chá., भर्तरि प्रणिहिते,° E. H. भर्तरि प्रहिते° for भर्तृप्रणिहिते°; B. अभ्ययात्, D. and Chà., सम्यगात् for अभ्यगात्.

85. B. C. E. H. with Chà. Vijay. Va. Din. and Su. रसायां for धरायां; D. सीताभ्युद्धरणैषिणः for सीताप्रत्यर्पणैषिणः.

ऋषीन्विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान् ।
रामः सीतागतं स्नेहं निदधे तदपत्ययोः ॥ ८६ ॥
युधाजितश्च संदेशात्स देशं सिन्धुनामकम् ।
ददौ दत्तप्रभावाय भरताय धृतप्रजः ॥ ८७ ॥
भरतस्तत्र गन्धर्वान्युधि निर्जित्य केवलम् ।
आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥ ८८ ॥
स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥ ८९ ॥

विधिबलापेक्षी दैवशक्तिदर्शी गुरुर्ब्रह्मा । [ " पितामहं पुरस्कृत्य सर्व एव समागताः । आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणाः । साध्याश्च देवाः सर्वे ते सर्वे च परमर्षयः " इति रामायणे–ध० ] । शमयामास ( वारयामास ) । अवश्यंभावी विधिरिति भावः । [ " एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते । ब्रह्मा सुरगणैः सार्द्धमुवाच रघुनन्दनं । राम राम न संतापं कर्तुमर्हसि सुव्रत " इति रामायणे—ध० ] ।

८६. रामो यज्ञान्ते पुरस्कृतान्पूजितानृषीन् ( वाल्मीकिप्रभृतीन् ) सुहृदश्च ( विभीषणादींश्च ) विसृज्य सीतागतं स्नेहं तदपत्ययोः ( तस्याः सीतायाः पुत्रयोः ) कुशलवयोर्निदधे ( निचिक्षेप ) ।

८७. किं च धृतप्रजः ( धृताः रक्षिताः प्रजाः लोकाः संततिर्वा येन ) स रामो युधाजितो भरतमातुलस्य संदेशात्सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्याय । [ प्रभावश्च यत्तेजः कोशदंडजं । दत्तात्रेयतुल्यसामर्थ्याय वा । " संज्ञायामेकदेशव्यवहाराद्दत्तो दत्तात्रेयः भीमो भीमसेनवत्—" हे० ] । रामेणेति शेषः । भरताय ददौ । [ आह च वत्स मातुलेन संदिष्टं यथा दुष्टैर्गन्धर्वैराक्रान्तोऽयं देशस्तद्गच्छ तद्विद्रावणाय—व० ] ।

८८. तत्र सिन्धुदेशे भरतोऽपि युधि गन्धर्वान्निर्जित्य केवलमेकमातोद्यं वीणाम् । " ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् " इत्यमरः । [ तथा भरतः । " ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधमिदं ज्ञेयमातोद्यं लक्षणान्वितं । ततं तन्त्रिगतं ज्ञेयमवनद्धं च पौष्करं । घनं कांस्यमयं ज्ञेयं सुषिरं वंशमेव च "—हे० ] । ग्राहयामास । आयुधं समत्याजयत्त्याजितवान् । ग्रहित्यज्योर्ण्यन्तयोर्द्विकर्मकत्वं नित्यमित्यनुसंधेयम् ।

८९. स भरतः । अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः । तक्षपुष्कलाख्ययोरित्यर्थः । पुष्क-

86. At the end of the sacrifice Ràma dismissed the sages and his friends duly honoured and centred his affection for सीता in her sons.

87. Ràma who supported his subjects gave at the request of युधाजित् the country named Sindhu to Bharata to whom he also made over a part of the wealth he possessed.

88. There भरत having conquered the Gandharvas in a battle forced them simply to take up their lute and to forego their arms.

89. Having installed his two sons, Taksha and Pushkala, who deserved the coronation ( on

86. B. D. with Va. and Su., विधदे for निदधे.

87. D. with He. Chà. Din. Va. and Su., युधाजितस्य, E. यधागुतस्य for युधाजितश्च; D. दिष्टप्रभावाय, A. Chà. दृष्टप्रभावाय, C. E. Va. and Su., जंतु सपुत्राय for दत्तप्रभावाय; C. E. H. and Chà. धृत° A. D. with Vijay. भृत. B. omits this verse.

88. D. आयुधान् for आयुधं.

89. A. D. with He. Chà. Din. Va. and Su., तक्षपुष्करौ for तक्षपुष्कलौ.

अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसंभवौ ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥ ९० ॥
इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्तृलोकप्रपन्नानां निवापान्विदधुः क्रमात् ॥ ९१ ॥
उपेत्य मुनिवेषोऽथ कालः प्रोवाच राघवम् ।
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ९२ ॥
तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्व शासनात्परमेष्ठिनः ॥ ९३ ॥

च पुष्कलावत्यां तक्षं तक्षशिलायामिति राजधान्योर्नगर्योरभिषिच्य पुना रामान्तिकमगात् । [ संज्ञायामेकदेशव्यवहारात्तक्षशिलापुष्करावत्योः तक्षपुष्करव्यपदेशः—हे० चा० ] ।

९०. लक्ष्मणोऽपि रघुनाथस्य रामस्य शासनादङ्गदं चन्द्रकेतुं च तदाख्यावात्मसंभवौ पुत्रौ । कारापथो नाम देशः । तस्येश्वरौ चक्रे ।

९१. इत्यारोपितपुत्रास्ते जनेश्वरा रामादयो भर्तृलोकप्रपन्नानां स्वर्यातानां जननीनां क्रमान्निवापान् । ( " निवापः पितृतर्पणम् " इति विश्वः ) । श्राद्धादीन्विदधुश्चक्रुः ।

९२. अथ कालोऽन्तको मुनिवेषः सन्नुपेत्य राघवं प्रोवाच । किमित्याह—रहस्येकान्ते संवादिनौ संभाषिणावावां यः पश्येत् । रहस्यभङ्गं कुर्यादित्यर्थः । तं त्यजेरिति । [ समयः कृतः। उक्तं च रामायणे। " कस्यचित्त्वथ कालस्य रामे धर्मपरे स्थिते । कालस्तापसरूपेण राजद्वारमुपागमत् । यः शृणोति समीक्षेद्वा स वध्यो भविता तव"–ध० ] ।

९३. स कालस्तथेति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजस्वरूपः सन् । परमेष्ठिनो ब्रह्मणः शासनाद्दिवमध्यास्वेत्याचख्यौ ।

---

the thrones ) in the capitals named after them ( Takshas'ilâ and Pushkalâvatî ), he again went to Râma.

90. लक्ष्मण also in obedience to the command of his brother made his two sons named अंगद and चंद्रकेतु the lords of the country called कारापथ.

91. The lords of men having thus settled their sons on the throne performed, in due order, the funeral obsequies of their mothers who had departed to the region of their husband.

92. Once upon a time Death in the disguise of a hermit came to Râghava and said " you should abandon him who will see us conversing together in private. "

93. Then to the king who assented to his proposal by saying, " so be it " he disclosed himself and told him to retnrn to heaven in obedience to the command of the Creator.

---

90. E. reads रामचन्द्रस्य, for रघुनाथस्य A. कारुपथेश्वरौ. B. कारपथेश्वरौ, D. तारपथेश्वरौ, D2. तारापथेश्वरौ, A2. and He., उत्तरापथेश्वरौ for कारापथेश्वरौ.

91. B. with Vijay. and Châ., रोपित° for आरोपित°.

92. C. E. with He. Va. Châ. Din. Su. Vijay. Dhar. and Vija., मुनिवेषेण for मुनिवेषोऽथ.

93. D. आरोहं for अध्यास्व. Between 94-95. A. D. E. and He. read " गच्छ लक्ष्मण शाखं त्वं माभूद्धर्मविपर्ययः । त्यागो वापि वधो वापि साधूनामुभयं सम " ।

विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत्।
भीतो दुर्वाससः शापाद्रामसंदर्शनार्थिनः॥ ९४॥
स गत्वा सरयूतीरं देहत्यागेन योगवित्।
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः॥ ९५॥
तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि।
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव॥ ९६॥
स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम्।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम्॥ ९७॥

९४. द्वाःस्थो द्वारि नियुक्तो लक्ष्मणो विद्वानपि पूर्वश्लोकोक्तं जानन्नपि रामसंदर्शनार्थिनो दुर्वाससो मुनेः शापाद्भीतः सन्। तयोः कालरामयोः समयं संवादमभिनाद्बिभेद। [" तथा तयोः संवदतोर्दुर्वासा भगवानृषिः रामस्य दर्शनाकांक्षी राजद्वारमुपागमत्। सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः। रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते। अस्मिन्क्षणे मां सौमित्रे रामाय प्रतिवेदय। विषयं त्वां पुरं चैव शपिष्ये राघव तथा। भरतं चैव सौमित्रे युष्माकं या च संततिः। न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि" इति रामायणे—ध०]।

९५. योगविद्योगमार्गवेदी स लक्ष्मणः सरयूतीरं गत्वा। [उक्तं च रामायणे। " स गत्वा सरयूतीरं उपस्पृश्य कृतांजलिः। निगृह्य सर्वस्रोतांसि (सर्वेन्द्रियद्वाराणि) निश्वासं न मुमोच ह"–ध०]। देहत्यागेन पूर्वजन्मनो भ्रातुः प्रतिज्ञामवितथां सत्यां चकार।

९६. चतुर्थो भागश्चतुर्भागः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं शतांशवत्। आत्मचतुर्भागे तस्मिंल्लक्ष्मणे प्राङ्नाकमधितस्थुषि पूर्वं स्वर्गं जग्मुषि सति राघवो रामः। भुवि त्रिपाद्धर्म इव। शिथिलं तस्थौ। पादविकलो हि शिथिलं तिष्ठतीति भावः। त्रेतायां धर्मस्त्रिपादित्याहुः। [उक्तं च भागवते। " तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः"–हे०]। पादश्चतुर्थांशः। अङ्घ्रिश्च ध्वन्यते। "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः। त्रयः पादा यस्यासौ त्रिपात्। " संख्यासुपूर्वस्य " इत्यकारलोपः समासान्तः।

९७–९८. युग्मम्। स्थिरधीः। ["दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतराग भयक्रोधः स्थीरधीर्मु-

94. लक्ष्मण who stood at the gate afraid of being cursed by Durvâsas who wanted an immediate interview with Râma, interrupted them in their discourse, though he was aware of the agreement made between them.

95. He who was conversant with the art of Yoga going over to the bank of the river Sarayû made the promise of his elder brother true by abandoning his body.

96. When that fourth part of his own self ( i. e. of Râma ) preceded him to heaven, Râghava like the three-legged virtue remained on earth with his hold slackened.

97-98. Having placed कुश on the throne of कुशावती who was to his enemies like a goad to an elephant, and लव on the throne of शरावती who by his wise sayings caused good men to shed tears, he who was of steady mind accompanied by his younger brothers placed the fire-

95. D. and Su., वितथां for अवितथां. A. with Vijay. पूर्वजन्मनि for पूर्वजन्मनः.

96. C. शिथिलः for शिथिलं.

97. B. with Va. Vijay. and Châ. श्रावस्त्यां च, C. H. with He. and Su., श्रावत्यां च, D. सरावत्यां for शरावत्यां.

98. D. स्थितधी for स्थिरधीः So also noticed by He.

उदक्प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ॥ ९८ ॥
जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ।
कदम्बमु[illegible]स्थूलैरभिवृष्टां प्रजाश्रुभिः ॥ ९९ ॥
उपस्थित[illegible]मानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥१००॥
यद्गोप्रतरकल्पोऽभूत्संमर्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ १०१ ॥

निरुध्यते" इति गीतासु—हे० ]। स रामः। रिपव एव नागा गजास्तेषामङ्कुशं निवारकं कुशं कुशावत्यां पुर्यां निवेश्य स्थापयित्वा। सूक्तैः समीचीनवचनैः सतां जनिता अश्रुलवा अश्रुलेशा येन तं लवं लवाख्यं पुत्रम्। "लवो लेशे विलासे च छेदने रामनन्दने" इति विश्वः। शरावत्यां पुर्याम्। "शरादीनां च" इति शरकुशशब्दयोर्दीर्घः। निवेश्य। सानुजोऽग्निपुरःसरः सन्। पत्यौ भर्तरि वात्सल्यादनुरागात्। गृहान्वर्जयित्वा गृहवर्जम्। [ वर्जनं वर्जः गृहाणां वर्जस्त्यागो यस्मिन्कर्मणि तत्तथा इति—हे० ]। "द्वितीयायां च" इति णमुल्। अयं क्वचिदपरिप्सायामपीष्यते। "अनुदात्तं पदमेकवर्जम्" इत्येकाचः शेषतया व्याख्यातत्वात्। परीप्सा त्वरा। अयोध्ययान्वितोऽनुगत उदक्प्रतस्थे।

९९. चित्तज्ञाः ( चित्ताभिप्रायवेदिनः ) हरिराक्षसाः कदम्बमुकुलस्थूलैः। [ कदम्बमुकुलवत्स्थूलैः-हे० ]। प्रजाश्रुभिरभिवृष्टां ( सिक्तां ) तस्य रामस्य पदवीं मार्गं जगृहुः। तेऽप्यनुजग्मुरित्यर्थः। [ "कदम्बमाहुः सिद्धार्थे नीपेऽपि निकुरम्बके" इति विश्वः— हे० ]।

१००. उपस्थितं प्राप्तं विमानं यस्य तेन। भक्ताननुकम्पत इति भक्तानुकम्पिना। तेन रामेणानुयायिनां सरयूस्त्रिदिवनिःश्रेणिः स्वर्गाधिरोहणी चक्रे। "निःश्रेणिस्त्वधिरोहणी" इत्यमरः।

१०१. यद्यस्मात्तत्र सरय्वां मज्जतां ( जनानाम् ) संमर्दः। गोप्रतरो गोप्रतरणम्। तत्कल्पोऽभूत्। [ प्रतरः प्रतारः। "ऋदोरप्"। ईषन्न्यूनः गवां प्रतरः गोप्रतरकल्पः—हे० ]। अतस्तदाख्यया गोप्रतराख्यया पावनं शोधकं तीर्थं भुवि पप्रथे।

---

pan before himself and proceeded towards the north. All the people of अयोध्या leaving their homes followed him on account of their great love for him.

99. The monkeys and the demons who knew his intentions followed his track which was drenched by the tear drops of the people as large as buds of Kadamba-tree.

100. Then Râma who was kindly disposed towards persons devoted to him and on whom a celestial car had attended made the river सरयू a staircase for his followers to ascend to heaven.

101. Because the concourse of the people who swam there was very great like that of cows swimming, therefore the place became celebrated as a holy spot on earth by the name of गोप्रतर.

---

99. B. C. H. with He. Chà. Din. Vijay. and Su., वृत्तज्ञाः D. वर्मज्ञाः, for चित्तज्ञाः; A. D. कपिराक्षसाः for हरिराक्षसाः; B. अभिहृष्टं for अभिवृष्टां.

100. A. B. E. H. with Dhar. and Vija. निःश्रेणी for निःश्रेणिः.

101. A. B. D. विमर्दः for संमर्दः; A. D. with He. and Chà, तत्र for भुवि.

स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्तिषु ।
त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् ॥ १०२ ॥

निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणां
विष्वक्सेनः स्वतनुमविशत्सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा
कीर्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ १०३ ॥

१०२. विभुः प्रभुः स रामो विबुधानामंशेषु सुग्रीवादिषु प्रतिपन्नात्ममूर्तिषु ( प्रतिपन्ना लब्धाचात्मनां मूर्तिर्यैस्तेषु ) सत्सु त्रिदशीभूता देवभुवनं गतां ये पौरास्तेषां नूतनसुराणां स्वर्गान्तरमकल्पयत् । [ यदुक्तं रामायणे । सर्वे संतानकं यान्तु ब्रह्मलोकादनन्तरं । स्वस्वयोनिं प्रविष्टास्तु ऋक्षवानरराक्षसाः ” —हे० ] ।

१०३. विष्वक्सेनो विष्णुरेवं सुराणां दशमुखशिरश्छेदकार्यं निर्वर्त्य निष्पाद्य । लङ्कानाथं विभीषणं पवनतनयं हनूमन्तं चोभयं कीर्तिस्तम्भद्वयमिव । दक्षिणे गिरौ चित्रकूटे । [ सुवेलाशैले—हे० ] । चोत्तरे गिरौ हिमवति । [ गन्धमादनाद्रौ—हे० ] । च स्थापयित्वा । सर्वलोकप्रतिष्ठां सर्वलोकाश्रयभूतां स्वतनुं स्वमूर्तिमविशत् ।

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये श्रीरामस्वर्गारोहणो नाम पञ्चदशः सर्गः ।

## षोडशः सर्गः ।

अथेतरे सप्त रघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च ।
चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि ॥ १ ॥

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥

१. । [ इदानीं रामायणादधिकमागमान्तरप्रसिद्धमर्थं सर्गचतुष्टयेनाह—हे० ] । अथ रामनिर्वाणानन्तरमितरे लवादयः । [ लवतक्षकपुष्करांगदचन्द्रकेतुशत्रुघातिसुबाहवः इति—हे० ] । सप्त रघुप्र-

---

102. When Sugrîva and others who were portions of gods resumed their original forms, the lord of the universe created a separate heaven for his citizens who had attained divinity.

103. Vishnu having thus accomplished the object ( commission ) of the gods by cutting off the heads of the ten-headed demon and established the lord of Lankâ ( विभीषण ) and the son of Wind on the northern and southern mountains like two pillars as a monument of his deeds, entered into that form of himself which serves as a refuge to all created beings.

1. Then the seven other ( viz. other than Kus'a ) heroic princes of the family of Raghu made Kus'a, the eldest both in point of birth and personal qualities, the sharer of everything best of its kind; for good brotherly feeling was a hereditary virtue in their family.

102. B. C. E. H. with He. Va. Chà. Din. Su. Vijay. Dhar. and Vija., °पौरार्थं for °पौराणां.

103. B. C. E. with He. Chá. Su. Vijay. and Dhar. °भयच्छेदि कार्यं, D. °भयच्छेदकार्यं, D2. H. Va. and Din., °भयोच्छेदि कार्यं for °शिरश्छेदकार्यं; B. C. E. H. with He. Va Su. Chà. Din. Dhar. Vijay. and Vija., सप्तलोक° for सर्वलोक°.

ते सेतुवार्तागजबन्धमुख्यैरभ्युच्छ्रिताः कर्मभिरप्यवन्ध्यैः
अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥ २ ॥
चतुर्भुजांशप्रभवः स तेषां दानप्रवृत्तेरनुपारतानाम् ।
सुरद्विपानामिव सामयोनिर्भिन्नोऽष्टधा विप्रससार वंशः ॥ ३ ॥
अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ॥ ४ ॥

वीराः । पुरः पूर्वं जन्म यस्य तस्य भावस्तत्ता तया । गुणैश्च । [ शौर्यादिभिः—चा० ] । ज्येष्ठं कुशं रत्नविशेषभाजं तत्तच्छ्रेष्ठवस्तुभागिनं चक्रुः । [ तस्य ते करदा बभूवुः—व० ] । तदुक्तम्—" जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते " इति । तथा हि । सुभ्रातृणां भावः सौभ्रात्रम् । " हायनान्त–" इत्यादिना-युवादित्वादण्प्रत्ययः । एषां कुशलवादीनां कुलानुसारि वंशानुगतं हि ।

२. सेतुर्जलबन्धः । वार्ता कृषिगोरक्षणादिः । " वार्ता कृष्याद्युदन्तयोः " इति विश्वः । गजबन्ध आकरेभ्यो गजग्रहणम् । [ वने हस्तिग्रहणं–विजया० ] । ते मुख्यं प्रधानं येषां तैरवन्ध्यैः सफलैः कर्मभिरभ्युच्छ्रिताः । अतिसमर्था अपीत्यर्थः । ते कुशादयः । प्रविभज्यत इति प्रविभागाः । अन्योन्यदेशप्रविभागानां या सीमा ताम् । वेलां समुद्रा इव । न व्यतीयुर्नातिचक्रमुः । अत्र कामन्दकः—" कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरधनादानं शून्यानां च निवेशनम् । अष्टवर्गमिमं साधुः स्वयं वृद्धोऽपि वर्धयेत् " इति ।

३. चतुर्भुजो विष्णुः । तस्यांशा रामादयः । ते प्रभवाः । कारणानि यस्य स तथोक्तः । दानं त्यागो मदश्च । " दानं गजमदे त्यागे " इति विश्वः । प्रवृत्तिर्व्यापारः । प्रवाहश्च । दानप्रवृत्तेरनुपारतानां । [ अविरतानां—हे० निरतानां–चा० ] । तेषां कुशलवादीनां स वंशः । सामयोनिः । [ ऐरावणादीनां सामयोनिः सामवेदाध्ययनकालोत्पन्नो वंश इव–चा० ] । सामवेदप्रभवो दानप्रवृत्तेरनुपारतानां सुरद्विपानां दिग्गजानां वंश इव । अष्टधा भिन्नः सन् । विप्रससार विस्तृतोऽभूत् । सामयोनिरित्यत्र पालकाप्यः—" सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्मात्समुत्पेतुर्मतङ्गजाः " इति ।

४. अथ । अर्धं रात्रेरर्धरात्रः । " अर्धं नपुंसकम् " इत्येकदेशसमासः । " अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः " इति समासान्तोऽच्प्रत्ययः । " रात्राह्नाहाः पुंसि " इति नियमात्पुंस्त्वम् । अर्धरात्रे निशीथे स्तिमितप्रदीपे ( स्तिमिताः निश्चलाः प्रदीपा यत्र ) सुप्तजने शय्यागृहे प्रबुद्धः । न तु सुप्तः । कुशः प्रवासस्थकलत्रवेषां ( प्रवासस्थस्य पांथस्य कलत्रं भार्या तस्या इव वेषो यस्याः सा तां तथोक्तां ) प्रोषितभर्तृकावेषाम् । अदृष्टा पूर्वमित्यदृष्टपूर्वा ताम् । सुप्सुपेति समासः । वनितामपश्यत् ।

---

2. Though they were greatly distinguished for their successful undertakings the chief of which were the constructions of bridges, agriculture ( including the protection of cows, &c.), and the taming of elephants, yet they never transgressed the boundary of the portion of land allotted to each, as the seas do not go beyond their coasts.

3. That family of theirs sprung from the portions of Vishnu ( the four-armed god ), who never desisted from the act of liberality, being divided into eight branches, spread widely like the race of celestial elephants sprung from the Sâmans, the flows of whose ichor are uninterrupted.

4. Once at mid-night Kus'a who was wide awake saw a female, never seen before, dressed

---

2. B. and Va. अत्युच्छ्रिताः for अभ्युच्छ्रिताः. D. with Vijay. °प्रतिभाग° for °प्रविभाग°.

4. A. D. with Va. and Su., स्तिमिते for स्तिमित°; B. and Va. विबुद्धः for प्रबुद्धः.

सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५ ॥
अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ६ ॥
लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ ७ ॥
का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ८ ॥

५. सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः ( साधूनां सतां साधारणा पार्थिवर्द्धिः राज्यलक्ष्मीर्यस्य ) पुरुहूतभास इन्द्रतेजसः परेषां । [ इति कर्मणि षष्ठी—हे० चा० सु० ] । शत्रूणां जेतुर्बन्धुमतः । [ इति कार्यसिद्धिसूचनं—हे० चा० ] । तस्य कुशस्य पुरस्तात्स्थित्वा जयशब्दपूर्वं । [ जय महाराजेतिशब्दपूर्वमिति—चा० ] । यथा तथाऽञ्जलिं बबन्ध ।

६. अथ सविस्मयः पूर्वार्धेन शरीरपूर्वभागेण विसृष्टतल्पस्त्यक्तशय्यो दाशरथेस्तनूजः कुशः । अनपोढार्गलमनुद्घाटितविष्कम्भमपि । [ अनुद्घाटितद्वारपटलमपि—हे० ] । " तद्विष्कम्भेऽर्गलं न ना " इत्यमरः । अगारम् । आदर्शतलं छायामिव । प्रविष्टां तां वनितां प्रोवाचावदत् ;

७-८. युग्मम् । सावरणे अपि । [ आव्रियतेऽनेन द्वारं कपाटं इति—हे० पिहितेऽपि द्वारे—चा० ] । गेहे लब्धान्तरा लब्धावकाशा । त्वमिति शेषः । योगप्रभावश्च । [ अन्तःपुरप्रवेशादियोगशक्तिश्च इति—चा० ] । ते न लक्ष्यते । मृणालिनी हैमं हिमकृतमुपरागमुपद्रवमिव । अनिर्वृतानां दुःखितानामाकारं बिभर्षि च । न हि योगिनां दुःखमस्तीति भावः । किं च । हे शुभे त्वं । [ सुरी मानुषी वा इति—चा० ] । का कस्य वा परिग्रहः पत्नी । ते तव मदभ्यागमे कारणं वा किम् । [ अथ रिरंसयागमनमिति चेत्तदपि नेत्याह—चा० ] । वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिर्यस्य तत्तथाभूतं मत्वाचक्ष्व ।

---

like one whose husband is gone on travel, in his bed-chamber where attendants were asleep and the lights were steadily burning.

5. " May victory attend on you ! " with these words first uttered, she folded her hands and stood before him, the conqueror of his enemies, whose lustre was like that of Indra, whose royal fortune was common to the good ( virtuous ) and who had good brothers.

6. Whereupon the astonished son of Ráma raised his upper half ( lit. left the bed by the upper half ) from the couch and began to address her who had entered the palace, though the doors of it were not unbolted, as a reflection does the surface of a mirror.

7-8. " You got an entrance into the palace though its door was bolted and yet I do not see that you possess any power of Yoga. You wear an appearance of the distressed as a lotus suffers damage caused by frost. Gentle lady ! who are you ? and whose wife are you ? or what is your object in coming to me ? Mention all this to me, first remembering that the mind of the self-restraining Raghus possesses a propensity totally turned away from the love towards the wives of other men ".

---

6. B. तां सोऽनपोढा°, H. तां चानपोढा° for अथानपोढा°.

7. D. योगप्रवेशः for योगप्रभावः. H. with Vijay. He. Va. Dhar. and Vija. read दृश्यते for लक्ष्यते.

तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः संप्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥ ९ ॥
वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम् ॥ १० ॥
विशीर्णतल्पाट्टशतो निवेशः पर्यस्तशालः प्रभुणा विना मे ।
विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११ ॥
निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥ १२ ॥

९. सा वनिता तं कुशमब्रवीत् । अनवद्यादोषा या पूः स्वपदोन्मुखेन विष्णुपदोन्मुखेन । (वैकुण्ठगामिना इत्यर्थः) । गुरुणा त्वत्पित्रा नीतपौरा हे राजन्मां संप्रति वीतनाथामनाथां तस्याः पुरो नगर्या अयोध्याया अधिदेवतां जानीहि ।

१०. साहं सौराज्येन राजन्वत्तया हेतुना बद्धोत्सवया विभूत्या । वस्वौकसारालकापुरी । "अलकापुरी वस्वौकसारा स्यात्" इति यादवः । अथ वा मानसोत्तरशैलशिखरवर्तिनी शक्रनगरी । "वस्वौकसारा शक्रस्य" इति विष्णुपुराणात् । तामभिभूय तिरस्कृत्य समग्रशक्तौ त्वयि सूर्यवंश्ये सति करुणामवस्थां दीनां दशां प्रपन्ना प्राप्ता ।

११. तल्पानि अट्टालिकाः । "तल्पं शय्याट्टदारेषु" इत्यमरः । अट्टानि गृहभेदाः । "अट्टं भक्ते च शुष्के च क्षौमेऽस्त्यर्थे गृहान्तरे" इति विश्वः । विशीर्णानि तल्पानामट्टानां च शतानि यस्य स तथोक्तः । पर्यस्तशालः स्रस्तप्राकारः । "प्राकारो वरणः शालः" इत्यमरः । प्रभुणा स्वामिना विनैवंभूतो मे निवेशो निवेशनम् । अस्तनिमग्नसूर्यमस्ताद्रिलीनार्कमुग्रानिलेन भिन्नमेघं दिनान्तं विडम्बयत्यनुकरोति ।

१२. निशासु भास्वन्ति दीप्तिमन्ति कलान्यव्यक्तमधुराणि नूपुराणि यासां तासामभिसारिकाणाम् ।

9. That faultless lady replied and said 'know me, O king, to be the lord-less presiding deity of that city the people of which were carried to heaven by your sire with him when he went to his regions.

10. Such a one as I, having eclipsed the city of Alakâ by my prosperity manifested in the festivals which continuously took place by reason of the excellent rule, am (now) reduced to a pitiful condition, even when thou, a scion of the solar race, art reigning here with all thy power.

11. Without a king, my situation with hundreds of broken turrets and terraces and with dilapidated ramparts resembles the close of the day the sun in which has gone down to the setting mountain and which has clouds dispersed by fierce wind.

12. That royal road which had been once the resort of the Abhisârikâs with bright jingling

9. B. C. E. H. with He. Châ. Din. Va. Vijay. Dhar. Vija. and Su., तव यां for अनवद्या; A. D. पुरदेवतां for अधिदेवतां. So also noticed by He.

11. A. and He. विशीर्णतल्पाट्टशतो निवेशः, B. C. E. H. with Va. Vijay. Din. & Châ., विशीर्णतल्पो गृहसंनिवेशः, D. and Su., विस्तीर्णतल्पो गृहसंनिवेशः, D2. with Dhar. and Vija. विशीर्णकल्पोट्टशतो निवेशः. So also noticed by Malli. who further says अथ वा "विशीर्णकल्प°" इति पाठः । "अट्टाः क्षौमाः" । "स्यादट्टक्षौममस्त्रियां" इत्यमरः । द्वंद्वसमासं विशीर्णानि विशीर्णकल्पान्यट्टशतानि यस्य स तथोक्तः । D. अर्ध° for अस्त°

12. B. E. with Dhar. and Vija. संचरः for संचरः. A. Dhar. and Su., नदन्मुखोल्काचितं°, E. with Vijay. नदन्मुखोल्काचितामिषाभिः, D. ज्वलन्मुखोल्काविचिता° for नदन्मुखोल्काविचिता°

आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ १३ ॥
वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥ १४ ॥
सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान् ।
सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयतेऽद्य ॥ १५ ॥

" कान्तार्थिनी तु या याति संकेतं साभिसारिका " इत्यमरः । [ तथा किराते । " आशुकान्तमभिसारित वत्या " । माघेऽपि । " ताः पूर्वसंकेतमार्ग"—हे० ]। यो राजपथः । संचरन्त्यनेनेति संचरः । संचारसाधनमभूत् । " गोचरसंचर—" इत्यादिना घप्रत्ययान्तो निपातः । नदत्सु मुखेषु या उल्कास्ताभिर्विचितामिषाभिरन्विष्टमांसाभिः । [ नदद्भ्यो मुखेभ्यो निर्गता उल्का स्ताभिर्विचितमन्विष्टमामिषं मांसं याभिः—चा० ] । शिवाभिः क्रोष्टुभि । [ शिवा हि ज्वालामुख्यः । तथा शिवाशकुने वसन्तराजः । " कुबेरकाष्ठां प्रति यः, प्रयाति । ज्वालामुखी वाभिमुखी विरौति । तस्याध्वगस्याभिमतार्थसिद्धिर्भवेच्च संपत्तिफलागमश्च"—हे० ] । स राजपथो वाह्यते गम्यते । वहेरन्यो वहिधातुरस्तीत्युपदेशः ।

१३. यदम्भः प्रमदाकराग्रैरास्फालितं ताडितं सत् । जलक्रीडास्विति शेषः । मृदङ्गानां यो धीरध्वनिस्तमन्वगच्छदन्वकरोत् । तद्दीर्घिकाणामम्भ इदानीं वन्यैर्महिषैः । कर्तृभिः । शृङ्गैर्विषाणैराहतं । ( " गाहंतां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं " इत्येवं समार्थः श्लोकांशः ) । सत्क्रोशति । [ श्रवणकटुकशब्दं तनुते—चा० ] । न तु मृदङ्गध्वनिमनुकरोतीत्यर्थः ।

१४. यष्टिरेव निवासः स्थानं तस्य भङ्गात् । वृक्षे शेरत इति वृक्षेशयाः । " अधिकरणेशेतेः " इत्यच्प्रत्ययः । " शयवासवासिष्वकालात् " इत्यलुक्सप्तम्याः । मृदङ्गशब्दानामपगमादभावादलास्या नृत्यशून्याः । दवोऽरण्यवह्निः । " दवदावौ वनारण्यवह्नी " इत्यमरः । तस्योल्काभिः स्फुलिङ्गैर्हतेभ्यः शेषाणि बर्हाणि येषां ते क्रीडामयूरा वनबर्हिणत्वं वनमयूरत्वं प्राप्ताः ।

१५. किं च । येषु सोपानमार्गेषु रामा रमण्यः सरागांल्लाक्षारसार्द्रांश्चरणान्निक्षिप्तवत्यः । तेषु मार्गेषु अद्य सद्यो हतन्यङ्कुभिः मारितमृगैर्व्याघ्रैः । ( " कृष्णसारो रुरुर्न्यङ्कुः " इत्यमरः ) । अस्रदिग्धं रुधिरलिप्तं पदं निधीयते ।

---

anklets, during the nights, is now frequented by female jackals who seek carrion by the aid of the light emitted from their howling mouths.

13. Those waters of the lakes which once stirred gently by the forepart of the hands of young ladies at the time of sporting imitated the deep resounding of a drum now bewail (produce a mournful or bewailing sound) being struck violently with horns by wild buffaloes.

14. The pet peacocks (lit. pleasure-peacocks) lying (now) on trees their abodes of perching sticks being broken to pieces, devoid of their (usual) dance on account of the absence of tabor-sound and possessing a remnant of their plumes that are destroyed by the flames of forest-conflagration, are reduced to the state of wild ones.

15. And on those fights of steps (lit. stair-cases) where fair ladies used to plant their feet dyed in lac, tigers that have just killed deer do now place their paws besmeared with blood.

---

13. A. D. E. with Vijay. and He. °ध्वनितामगच्छत् for °ध्वनिमन्वगच्छत्; B. with Chā. and Va., दीर्घिकासु for दीर्घिकाणां. H. reads संवाह्यते for स वाह्यते.

15. D. चरणाद्° for चरणान्स°; B. C. E. H. with Chā. Din. Va. Vijay. and

चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥ १६ ॥
स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १७ ॥
कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्छन्ति न चन्द्रपादाः ॥ १८ ॥
आवर्ज्य शाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः ॥ १९ ॥

१६. पद्मवनमवतीर्णाः प्रविष्टाः । तथा लिखिता इत्यर्थः । करेणुभिः करिणीभिः । चित्रगताभिरेव । " करेणुरिभ्यां स्त्री नेभे " इत्यमरः । दत्तमृणालभङ्गाश्चित्रद्विपा आलेख्यमातङ्गाः । नखा एवाङ्कुशाः । तेषामाघातैर्विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ।

१७. उत्क्रान्तवर्णक्रमा विशीर्णवर्णविन्यासास्ताश्च धूसराश्च यास्तासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभिर्विमुक्ता निर्मोकाः कञ्चुका एव पट्टाः । ( " पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनांतरपीठयोः " इति विश्वः ) । " समौ कञ्चुकनिर्मोकौ" इत्यमरः । सङ्गात्सक्तत्वात्स्तनोत्तरीयाणि स्तनाच्छादनवस्त्राणि भवन्ति ।

१८. कालान्तरेण कालभेदवशेन श्यामसुधेषु मलिनचूर्णेष्वितस्ततो रूढतृणाङ्कुरेषु हर्म्येषु गृहेषु नक्तं रात्रौ मुक्तागुणानां शुद्धिरिव शुद्धिः स्वाच्छ्यं येषां तादृशा अपि । ततः पूर्वं ये मूर्छन्ति स्म त एव चन्द्रपादाश्चन्द्ररश्मयः । " पादा रश्म्यङ्घ्रितुर्यांशाः " इत्यमरः । न मूर्छन्ति । [ न वृद्धिं गच्छंतीति–हे० चा० ] । न प्रतिफलन्तीत्यर्थः ।

१९. किं च । विलासिनीभिः सदयं शाखा लतावयवानावर्ज्यानमय्य यासां लतानां पुष्पाण्युपात्तानि गृहीतानि । ता मदीया उद्यानलताः । वन्यैः पुलिन्दैर्म्लेच्छविशेषैरिव वानरैः । उभयैरपीत्यर्थः । क्लिश्यन्ते पीड्यन्ते । [ पुलिन्दैः शबरैः सहचरैः सह वानरैः क्लिश्यन्ते बाध्यन्ते । सहार्थे इव शब्दः–इति चा० ] । क्लिश्नातेः कर्मणि लट् । " भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः " इत्यमरः ।

---

16. The elephants ( painted ) in the pictures ( on the walls ) as entered into lotus-beds and as being presented with pieces of lotus-stalks by female elephants ( now ) bear the blows of the enraged lions with their temples shattered by the stroke of their goad-like nails.

17. The slough-strips left by cobras become, on account of their contact ( with the breasts ), a covering on the breasts of the images of woman ( engraved ) on posts which have a dusky appearance and the lines of colour ( painting ) on which have been disfigured.

18. Those very rays of the moon though white like pearl-necklaces ( once reflecting ) now do not take effect (reflect) at night on the mansions, on ( the surface of ) which are grown, here and there, shoots of grass, and the plaster on which is turned black by lapse of time.

19. Those garden-creepers of mine, the flowers of which were once plucked by the sportive

---

Su., मै for मय.

16. C. D. with Vijay. विदीर्णकुंभाः for विभिन्नकुंभाः.

17. B. D. with He. Chā. Din. Va. and Su., तनूत्तरीयाणि for स्तनोत्तरीयाणि. So also noticed by He.; D. E. and Su. °पट्टयः for पट्टाः.

19. D. and Su., पुलिन्द्रैः for पुलिन्दैः.

संगमाय निशि गूढचारिणं चारदूतिकथितं पुरोगताः ।
वञ्चयिष्यसि कुतस्तमोवृतः कामुकेति चकृषुस्तमङ्गनाः ॥ ३३ ॥
योषितामुडुपतेरिवार्चिषां स्पर्शनिर्वृतिमसाववाप्नुवन् ।
आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः ॥ ३४ ॥
वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः ।
शिल्पकार्य उभयेन वेजितास्तं विजिह्मनयना व्यलोभयन् ॥ ३५ ॥

३३. संगमाय सुरतार्थं निशि गूढमज्ञातं चरतीष्टगृहं प्रति गच्छतीति गूढचारी । तं चारदूतिकथितम् । चरन्तीति चारा गूढचारिण्यः । "ज्वलिति कसन्तेभ्यो णः" इति णप्रत्ययः । चाराश्च ता दूत्यश्च चारदूत्यः । ताभिः कथितं निवेदितं तमग्निवर्णमङ्गनाः पुरोऽग्रे गताः । अवरुद्धमार्गाः सत्य इत्यर्थः । हे कामुक तमसा वृती गूढः सन्कुतो वञ्चयिष्यसीति । उपालभ्येति शेषः । चकृषुः । स्ववासं निन्युरित्यर्थः ।

३४. उडुपतेरिन्दोरार्चिषां भासामिव । "ज्वाला भासो न पुंस्यर्चिः" इत्यमरः । योषितां स्पर्शनिर्वृतिं स्पर्शसुखमवाप्नुवन् । [ "निर्वृतिः सुस्थितायां स्यादस्तंगमनसौख्ययोः" इति विश्वः-हे० ]। किं च । रात्रिषु जागरपरः । दिवा दिवसेषु शेते स्वपितीति दिवाशयः । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । असावग्निवर्णः कुमुदाकरस्योपमां साम्यमारुरोह प्राप ।

३५. दशनैः पीडिताधरा दष्टोष्ठाः । नखपदैर्नखक्षतैरङ्कितोरवश्चिह्नितोत्सङ्गाः । व्रणिताधरोरुत्वादक्षमा इ-

33. "Surrounded as you are with darkness, how will you, O lover, try to deceive us?" with these words his mistresses who had gone ahead of him so as to prevent him from going any farther drew him to their abodes who was previously detected and reported by their female servants employed as spies and who was proceeding secretly to some other place for amorous pleasures at night.

34. Feeling the highest happiness from the touch of his mistresses like that arising from the touch of the rays of the lord of stars (i. e. the moon) he got to the comparison of a pond abounding in white water-lilies on account of his wakefulness (or opening) at night and sleeping (or shutting) at day.

35. Practising themselves in fine arts the young damsels who were pained both by the flute because their lower lips were bitten in the amorous play by him with his teeth and by the वीणा lute because their laps were marked by the impressions of his nails, charmed him with their crooked glances (i. e sidelong glances of love).

33. A. D. पुरोगमाः for पुरोगताः; B. with Châ. Din. Va. Vijay., and Su., न नः H. नु नः for कुतः D. H. with He. and Vijay. चारु° for चार.° also the latter reading is noticed by He. H. with He. Su. Va. Vijay. and Dhar. read तमोवृता:, D. with Châ. and Din. तमोवृतं for तमोवृतः D. with Vijay. read जगृहुः for चकृषुः.

34. A. D. and He., °निर्वृतसुखानि for °निर्वृतिमसौ; B. H. with Châ. Va. Vijay. and Su., अनाप्नुवन् for अवाप्नुवन् D. with Châ. Din. Va. and Su. ° करोपमम् for ° करोपमाम्.

35. B. C. H. with He. Va. Vijay. and Su., °रसः for °रवः; B. C. E. and He., शिल्पिकार्यैः, D. शिल्पिकार्यम् for शिल्पकार्यः E वेजिनीः for वेजिताः B. C. with He. Châ. Din. Va. Vijay. and Su., व्यलोकयन् for व्यलोभयन् the latter reading is also noticed by He.

अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन् ।
स प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष सह मित्रसंनिधौ ॥ ३६ ॥
अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसाङ्गरागिणः ।
प्रावृषि प्रमदबर्हिणेष्वभूत्कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७ ॥
विग्रहाच्च शयने पराङ्मुखीर्नानुनेतुमबलाः स तत्वरे ।
आचकाङ्क्ष घनशब्दविक्लवास्ता विवृत्य विशतीर्भुजान्तरम् ॥ ३८ ॥

त्यर्थः । तथापि वेणुना वीणया चेत्युभयेन । अधरोरुपीडाकारिणेत्यर्थः । वेजिताः पीडिताः शिल्पं वेणुवीणावाद्यादिकं कुर्वन्तीति शिल्पकार्यो गायिकाः । "कर्मण्यण्" इत्यण् । "टिड्ढाणञ्—" इत्यादिना ङीप् । तं विजिह्मनयनाः कुटिलदृष्टयः सत्यः । स्वं चेष्टितं जानन्नपि वृथा नः पीडयतीति साभिप्रायं पश्यन्त्य इत्यर्थः । व्यलोभयन् । तथाविधालोकनमपि तस्याकर्षकमेवाभूदिति भावः ।

३६. अङ्गं हस्तादि । सत्त्वमन्तःकरणम् । वचनं गेयं चाश्रयः कारणं यस्य तदङ्गसत्त्ववचनाश्रयम् । आङ्गिकसात्त्विकवाचिकरूपेण त्रिविधमित्यर्थः । यथाह भरतः– "सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः" इति । [ "अव्यक्तरूपं तु सत्वं हि ज्ञेयं भावरसात्मकं । आलोकितसमंसाविप्रलोकितविलोकिते । उल्लोकिते वागुवृते तथा चैवावलोकितं । अष्टौ च दर्शयन्भेदान् नृत्यवाद्यसमाश्रयान्" इत्युक्तसात्विकान्यालोकितानीत्यन्ये–चा० ] । नृत्यमभिनयं मिथा रहसि स्त्रीषु नर्तकीषूपधाय निधाय दर्शयन् । स मित्रसंनिधौ सहचरसमक्षं प्रयोगेऽभिनये निपुणैः कृतिभिः प्रयोक्तृभिरभिनयार्थप्रकाशकैः नाट्याचार्यैः सह संजघर्ष संघर्षं कृतवान् । संघर्षः पराभिभवेच्छा । [ इति क्षीरतरंगिण्यां–हे० ] । इतः प्रभृति तस्य तत्तदृतूचितविहारप्रकारमाह—

३७. । [ अथषड्तूनाह–हे० चा० ] । प्रावृष्यंसलम्बिन्यः कुटजानाम् अर्जुनानां ककुभानां च स्रजो यस्य तस्य । नीपानां कदम्बकुसुमानां रजसाङ्गरागिणोऽङ्गरागवतस्तस्याग्निवर्णस्य प्रमदबर्हिणेषून्मत्तमयूरेषु कृत्रिमाद्रिषु ( क्रीडाशैलेषु ) विहारविभ्रमोऽभूदभवत् । विहार एव विभ्रमो विलासः ।

३८. । [प्रावृषमाह–हे० चा० ] । प्रावृषीत्यनुषज्यते । सोऽग्निवर्णो विग्रहात्प्रणयकलहाच्छयने ( शय्या-

36. Having privately instructed the girls in the dance depending on singing, inward feelings and the limbs, he, exhibiting it in the presence of his friends, contended for superiority with the dancing-masters proficient in the art of representation.

37. He whose garlands of Kuṭaja and Arjuna flowers were hanging down from his shoulders and who had smeared his body with the scented cosmetics of the Nîpa pollens commenced his libidinous sports in the season of Autumn on the artificial pleasure-mountains abounding in the amorous peacocks.

38. On account of the love-quarrel he did not hasten to coax the young women who had turned aside their face on the couch; but he eagerly wished them to turn and enter the space between his arms when they were frightened by the thundering of the clouds.

---

36. A. and Vijay., ° वचनाप्रियं, C. ° वचनाश्रितम्, D. ° रचनाश्रयम् for ° वचनाश्रयम् ; B. D. and Châ. नृत्तम् for नृत्यम् ; A. उपाधार्य दर्शयन्, B. and Châ. अवधार्य दर्शयन्, D. उपदर्शयन्नृपः for उपधाय दर्शयन्. B. D. प्रयोगनिपुणः for प्रयोगनिपुणैः D. प्रियोक्तिभिः for प्रयोक्तृभिः ; B. C. E. with H. Châ. Din. Vijay. Va. and Su., संजहर्ष for संजघर्ष.

37. B. अंसलम्बिकुटजार्जुनस्रजः, D. अंसलम्बकुटजार्जुनस्रजः for अंसलम्बिकुटजार्जुनस्रजः ; D. विहारसंभ्रमः for विहारविभ्रमः.

कार्त्तिकीषु सवितानहर्म्यभाग्यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतश्रमापहां मेघमुक्तविशदां स चन्द्रिकाम् ॥ ३९ ॥
सैकतं च सरयूं विवृण्वतीं श्रोणिबिम्बमिव हंसमेखलम् ।
स्वप्रियाविलसितानुकारिणीं सौधजालविवरैर्व्यलोकयत् ॥ ४० ॥
मर्मरैरगुरुधूपगन्धिभिर्व्यक्तहेमरशनैस्तमेकतः ।
जह्रुराग्रथनमोक्षलोलुपं हैमनैर्निवसनैः सुमध्यमाः ॥ ४१ ॥

यां ) पराङ्मुखीरबला अनुनेतुं न तत्वरे त्वरितवान् । किं तु घनशब्देन घनगर्जितेन विक्लवाश्चकिता अत एव विवृत्य स्वयमेवाभिमुखीभूय भुजान्तरं विशतीः प्रविशन्तीः । " आच्छीनद्योर्नुम् " इति नुमागमविकल्पः । ता अबला आचकांक्ष । स्वयं ग्रहादेव सांमुख्यमैच्छदित्यर्थः । [ " देशकालबलात्कोपः प्रायः सर्वोऽपि योषितां । जायते सुखसाध्योऽपि कृच्छ्रसाध्यो हि रागतः " इति रुद्रटः—चा० ] ।

३९. । [ शरदमाह—हे० चा० ] । कार्त्तिकस्येमाः कार्त्तिक्यः । "तस्येदम् " इत्यण् । तासु यामिनीषु निशासु । शरद्रात्रिष्वित्यर्थः । सवितानान्युपरिवस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक् । भजेर्ण्विप्रत्ययः । हिमनिवारणार्थं सवितानमुक्तम् । ललिताङ्गनासखः सोऽग्निवर्णः सुरतश्रमापहां मेघमुक्ता चासौ विशदा च ताम् । बहुलग्रहणात्सविशेषणसमासः । चन्द्रिकामन्वभुङ्क्त ।

४०. । किं च । हंसा एव मेखला यस्य तत्सैकतं पुलिनं श्रोणिबिम्बमिव । [ " बिम्बफले बिम्बिकायां प्रतिबिम्बे च मण्डले " इति विश्वः—हे० ] । विवृण्वतीम् । अत एव स्वप्रियाविलसितान्यनुकरोतीति तादृशीं सरयूम् । सौधस्य जालानि गवाक्षाः । त एव विवराणि । तैर्व्यलोकयत् । [ स्त्रियो हि श्रोणिबिम्बादिकं वल्लभाय प्रकटयन्ति इति—चा० ] ।

४१. । [ हेमन्तमाह—हे० चा० ] । मर्मरैः संस्कारविशेषाच्छब्दायमानैः । " अथ मर्मरः । स्वनिते

39. Living in mansions overcovered with an awning he in company of the beautiful mistresses enjoyed the moon-light removing the fatigue of amorous pleasures and clear on account of the removal of clouds during the nights of the month of Kártika.

40. He saw through the holes of the windows of his palace the river Sarayu displaying its sandy-banks resembling the hip and loins with rows of flamingoes for its waist-bands and thus imitating the graceful and wanton gestures of his own beloveds.

41. The young damsels with beautiful waists attracted him who was eager to tie and untie the knots of their garments on a part of their hip and loins, by means of their rustling silk-woven garments suitable for winter which were made fragrant with the fumes of agallochum and which displayed the golden waist-bands ( from within ).

39. B. च विमानहर्म्यभाक्, D. सविमानहर्म्यभाक्, so also noticed by He., for सवितानहर्म्यभाक्; B. H. with Chà. Din. He. Va. and Su., सुरतक्लमापहाम्, C. & Vijay. सुरतक्लमापहाः for सुरतश्रमापहाम्; B. मेघमुक्तिविशदाम्, C. with Vija. and Va , मेघमुक्तविशदाः for मेघमुक्तविशदाम्; C. with Vijay. and Va., चन्द्रिकाः for चन्द्रिकाम्.

40. H. with Vijay. °मेखलां for °मेखलं.

41. B. D. with Va. and Su., अगुरुधूमधूपितैः, E. H. with Vijay. अगरुधूपगंधिभिः for अगुरुधूपगन्धिभिः ; C. and He., त्यक्तहेमरशनैः for व्यक्तहेमरशनैः ; B. D. मोक्षलोलुभम् for मोक्षलोलुपम्.

अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु ।
तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः ॥ ४२ ॥
दक्षिणेन पवनेन संभृतं प्रेक्ष्य चूतकुसुमं सपल्लवम् ।
अन्वनैषुरवधूतविग्रहास्तं दुरुत्सहवियोगमङ्गनाः ॥ ४३ ॥
ताः स्वमङ्कमधिरोप्य दोलया प्रेङ्खयन्परिजनापविद्धया ।
मुक्तरज्जु निबिडं भयच्छलात्कण्ठबन्धनमवाप बाहुभिः ॥ ४४ ॥
तं पयोधरनिषिक्तचन्दनैर्मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे श्रोणिलम्बिमणिमेखलैः प्रियाः ॥ ४५ ॥

वस्त्रपर्णानाम् " इत्यमरः । अगुरुधूपगन्धिभिर्व्यक्तहेमरशनैर्लोल्याक्ष्यमाणकनकमेखलागुणैर्हैमनैर्हैमन्ते भवैः । " सर्वत्राण्च तलोपश्च " इति हेमन्तशब्दादण्प्रत्ययस्तलोपश्च । निवसनैरंशुकैः सुमध्यमाः स्त्रिय एकतो नितम्बैकदेशे आग्रथनमोक्षयोर्नीवीबन्धविस्रंसनयोर्लोलुपमासक्तं तं जह्रुराचकृषुः ।

४२. । [ शिशिरमाह–हे० चा० ] । निवाता वातरहिताः कुक्षयोऽभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेष्वर्पिता दत्ताः स्तिमिता निवातत्वान्निश्चला दीपा एव दृष्टयो याभिस्ताः । अत्रानिमिषदृष्टित्वं च गम्यते । सर्वसुरतान्तरक्षमास्तापस्वेदापनोदत्वाद्दीर्घकालत्वाच्च सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयः । ( शिशिरे हि रात्रयो दीर्घाः ) । तस्याग्निवर्णस्य साक्षितां ययुः । विविक्तकालदेशत्वाद्यथेच्छं विजह्रारेत्यर्थः ।

४३. । [ वसन्तमाह–हे० चा० ] । अङ्गना दक्षिणेन पवनेन मलयानिलेन संभृतं जनितं सपल्लवं चूतकुसुमं प्रेक्ष्यावधूतविग्रहास्त्यक्तविरोधाः सत्यो दुरुत्सहवियोगं दुःसहविरहं तमन्वनैषुः । तद्विरहमसहमानाः स्वयमेवानुनीतवत्य इत्यर्थः ।

४४. । [ ग्रीष्ममाह–हे० चा० ] । ता अङ्गना स्वमङ्कं स्वकीयमुत्सङ्गमधिरोप्य परिजनेनापविद्धया संप्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयंश्चालयन्भयच्छलात्पतनभयमिषाद्बाहुभिरङ्गनाभुजैर्निबिडं कण्ठबन्धनमवाप प्राप । स्वयं प्रहाश्लेषसुखमन्वभूदित्यर्थः ।

४५. प्रियाः पयोधरेषु स्तनेषु निषिक्तमुक्षितं चन्दनं येषु तैः । मौक्तिकैर्ग्रथितानि प्रोतानि चारुभूषणानि

42. In the boudoirs the interior of which was free from the wind, the wintry Nights, which stared with their eyes ( in the shape ) of steady lamps and which were capable of giving scope to every other mode of amorous pleasures, were witnesses to his night debaucheries.

43. The mistresses seeing the mango blossoms with the foliage put forth by the southern breeze gave up the love-quarrels with him and won him over to their side, whose separation they thought would be unbearable to them.

44. Placing them on his own lap and enjoying with them a swing on a swinging-cot which was set in motion by the servants in a manner in which they let off its ropes he under the pretext of the fear of falling down received a close embrace ( lit. binding of the neck ) by means of their arms.

45. His beloved girls served him with the arrangements of summer-suiting toilets in which

42. B. D. H. दीपदीप्तयः for दीपदृष्टयः; B. प्रेक्ष्यताम्, D. साक्षताम् for साक्षिताम्.

43. B. C. H. with He. Chà. Din. Va. Vijay. and Su., अवकीर्ण° for अवधूत°.

44. B. D. and Chà., काश्चित् for ताः स्वम्. A. with Su. Vijay. and Va. प्रेषयन्, D. and He., प्रेंषयन् for प्रेङ्खयन्; B. C. ° प्रविद्धया, D. ° प्रवृत्तया, D2. H. with Vijay. and He. प्रवृद्धया, A2. with Va. and Su., प्रवद्धया for अपविद्धया.

45. B. C. with Chà. and Va., ° मेखलाः for मेखलैः; B. D. स्त्रियः for प्रियाः.

यत्स भग्नसहकारमासवं रक्तपाटलसमागमं पपौ ।
तेन तस्य मधुनिर्गमात्कृशश्चित्तयोनिरभवत्पुनर्नवः ॥ ४६ ॥
एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्गवाहितः ॥ ४७ ॥
तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसंभवो दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८ ॥

येषु तैः । मुक्ताप्रायाभरणैरित्यर्थः । श्रोणिलम्बिन्यो मणिमेखला मणिप्रचुररशना येषु तैर्ग्रीष्मवेषविधिभिरुष्णकालोचितनेपथ्यकरणैः । शीतलोपायैरित्यर्थः । तमग्निवर्णं सिषेविरे ।

४६. सोऽग्निवर्णो भग्नः सहकारश्चूतपल्लवो यस्मिंस्तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यस्य तमासवं मद्यं पपौ । इति यत्तेनासवपानेन मधुनिर्गमाद्वसन्तापगमात्कृशो मन्दवीर्यस्तस्य चित्तयोनिः कामः पुनर्नवः प्रबलोऽभवत् ।

४७. एवमनङ्गवाहितः कामप्रेरितोऽन्यकार्यविमुखः स पार्थिव इन्द्रियाणां सुखानि सुखकराणि शब्दादीनि निर्विशन्ननुभवन्नात्मनो लक्षणैः कुटजस्रग्धारणादिचिह्नैर्निवेदितान् । अयमृतुरिदानीं वर्तत इति ज्ञापितान् । ऋतून्वर्षादीनत्यवाहयदगमयत् ।

४८. प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतोऽन्यपार्थिवा आक्रमितुमभिभवितुं न शेकुर्न शक्ताः । रतिरागसंभव आमयो व्याधिस्तु । क्षयरोग इत्यर्थः । दक्षस्य दक्षप्रजापतेः शापश्चन्द्रमिव । अक्षिणोदकर्शयत् । शापोऽपि रतिरागसंभव इति । अत्र दक्षः किलान्याः स्वकन्या उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप । स शापश्चाद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ।

---

their breasts were besmeared with sandal paste, in which the beautiful ornaments were stringed with pearls, and in which the pearl-waist-bands hung as far as their hip and loins.

46. He drank wine mixed with the small bits of mango-sprouts squeezed together and perfumed by receiving the contact of the red Pâtala flowers; by virtue of such acts his Fancy Born god who was emaciated by the departure of the spring again became fresh.

47. Thus enjoying the pleasures of the object of senses that king who was impelled by the object of desire and so was made incapacitated to look to other regal affairs, passed away the seasons indicated by their signs on his own body.

48. Other kings were not able to vanquish him though addicted to vice by reason of his superior sovereign power; but a disease produced from a passion for amorous pleasures began gradually to consume him, as does the curse of Daksha the moon.

---

46. B. C. with He. Va. Vijay. and Su. भग्न° for लग्न° ; B. °असेवतासकत्, C. E. H. with Vijay. and Châ., ° समागतम् पपौ, D. and He.,° तमासवं पपौ for °समागमम् पपौ ; D. with Va. and Su., भवः for नवः.

47. C. D. E. H. with He. Châ. Din. Va. and Su., ° मोहितः, D2. and Vijay., ° नोदितः for ° वाहितः.

48. D. with Va. and Su., अक्षिणः, H. with Vijay. अक्षणोत् for अक्षिणोत्.

दृष्टदोषमपि तन्न सोऽत्यजत्सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते ॥ ४९ ॥
तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना
राजयक्ष्मपरिहानिराययौ कामयानसमवस्थया तुलाम् ॥ ५० ॥
व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम् ।
राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥ ५१ ॥
बाढमेषु दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥ ५२ ॥

४९. भिषजां वैद्यानामनाश्रवो वचसि न स्थितः । " वचने स्थित: आश्रवः " इत्यमरः । अविधेय इत्यर्थः । स दृष्टदोषमपि । रोगजननादिति शेषः तत्सङ्गस्य वस्तु सङ्गवस्तु । स्त्रीमद्यादिकं सङ्गजनकं वस्तु नात्यजत् । तथा हि । इन्द्रियगणः स्वादुभिर्विषयैर्हृतस्तु हृतश्चेत्ततस्तेभ्यो विषयेभ्यो दुःखं कृच्छ्रेण निवार्यते । यदि वार्येतेति शेषः । दुस्त्यजाः खलु विषया इत्यर्थः ।

५० तस्य राज्ञः पाण्डुवदना । अल्पभूषणा परिमिताभरणा । सावलम्बं दासादिहस्तावलम्बसहितं गमनं यस्यां सा सावलम्बगमना । मृदुस्वना हीनस्वरा । राज्ञः सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोगः । तेन या परिहानिः क्षीणावस्था सा । कामयते विषयानिच्छति कामयानः । कमेर्णिङन्ताच्छानच् । " अनित्यमागमशासनम् " इति मुमागमाभावः । एतदेवाभिप्रेत्योक्तं वामनेनापि—" कामयानशब्दः सिद्धोऽनादिश्च" इति । तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप । [ "नियन्तानां सकृद्धर्मः सा पुनस्तुल्ययोगिता " इति काव्यप्रकाशे–हे० ] । कालकृतो विशेषोऽवस्था । " विशेषः कालिकोऽवस्था" इत्यमरः ।

५१. राज्ञि क्षयातुरे सति तत्कुलं रघुकुलं पश्चिमकलायां स्थित इन्दुर्यस्मिंस्तत्कलावशिष्टेन्दु व्योम वा व्योमेव । वाशब्द इवार्थे । यथाह दण्डी–" इववद्वायथाशब्दौ " इति । पङ्कशेषं घर्मपल्वलमिव । वामनार्चिरल्पशिखं दीपभाजनं दीपपात्रमिवाभूत् ।

५२. बाढं सत्यमेषु दिवसेषु पार्थिवः पुत्रजन्मने पुत्रोदयार्थं कर्म इष्ट्यादिकं साधयति । इत्येवमद-

---

49. Not listening to the advice of his physicians he did not give up those tempting objects to which he was so much addicted, even though they were found out to be of evil consequence, for the assemblage of the organs of sense when once led away by temptations of world are with difficulty ( or hardly ) kept off from them.

50. His decay caused by the consumption which was bringing pallor on his face, making him put on few ornaments on his body, forcing him to walk out supported by servants and depressing his voice, got to the similitude of the state of a lover.

51. The king suffering from consumption his family appeared like the sky having the moon in her last digit, or like a puddle in the summer season having but mud for its residuum, or like a lamp-stand having a minute jet of a pointed flame.

52. " Assuredly the lord of the earth now-a-days is performing a sacrificial ceremony in order

---

49. B. D. E. च for सः; B. C. with He. Vijay. and Cnà., अनास्पदं D. H. with Va. and Su., अनाश्रयं, D2. E. अनाश्रयः for अनाश्रवः; B. E. सः, C. H. Su. and Va., च, D.& Chà., हि for तु; B.D.E. with Va. Vijay. and Su., हि वार्यते for निवार्यते.

50. D. मृदुस्वनो, H. मृदुस्वरा for मृदुस्वना; B. with He. Chá. Va. Vijay. and Su. यक्ष्मणापि परिहानिः, C. H. यक्ष्मणात्मपरिहानिः, E. राजयक्ष्मपरिहाणिः for राजयक्ष्मपरिहानिः.

51. A. with He. & Va., °स्थितेन्दुवत्, C. with Vijay. and Su., °स्थितेन्दुना, D. with Din. and Châ., ° स्थितेन्दुमत् for ° स्थितेन्दु वा.

52. B. C. E. H. with He. Chà. Din. Va. Vijay. and Su., गूढं for बाढं; B.

स त्वनेकवनितासखोऽपि सन्पावनीमनवलोक्य संततिम् ।
वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात् ॥ ५३ ॥
तं गृहोपवन एव संगताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः संभृते शिखिनि गूढमादधुः ॥ ५४ ॥
तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥ ५५ ॥
तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः ।
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः ॥ ५६ ॥

शितरुजो निगूहितरोगाः सन्तोऽस्य राज्ञो मन्त्रिणोऽघशङ्किनीर्व्यसनशङ्किनीः प्रजाः शश्वदूचुः ।

५३. स त्वग्निवर्णोऽनेकवनितासखः सन्नपि । पावनीं पितृऋणमोचनीं संततिमनवलोक्य । पुत्रमनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगम् । प्रदीपो वायुमिव । नात्यगान्नातिचक्राम । ममारेत्यर्थः । [ पुत्रमुखम दृष्ट्वैव क्षयरोगेण मृतः इति भावः–सु० चा० ] ।

५४. पश्चिमक्रतुविदान्त्येष्टिविधिज्ञेन पुरोधसा संगताः समेता मन्त्रिणो गृहोपवन एव गृहाराम एव । " आरामः स्यादुपवनम् " इत्यमरः । रोगशान्तिमपदिश्य शान्तिकर्म व्यपदिश्य तमग्निवर्णं संभृते समिद्धे शिखिन्यग्नौ गूढमप्रकाशमादधुर्निदधुः । ( अग्निसंस्कारं चक्रुरित्यर्थः ) ।

५५. आशु शीघ्रं कृतः प्रकृतिमुख्यानां पौरजानपदप्रधानानां संग्रहः सन्निपातनं यैस्तादृशैस्तैर्मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्याग्निवर्णस्य सहधर्मचारिणी नराधिपश्रियं प्रत्यपद्यत राज्यलक्ष्मीं प्राप ।

५६. तथाविधया नरेन्द्रविपत्त्या यः शोकस्तस्मादुष्णैर्विलोचनजलैः प्रथममभितप्तस्तस्या गर्भः कनक-

to secure the birth of a son," with these words his ministers who kept the matter of his disease concealed always addressed his subjects who suspected some calamity impending over the king.

53. Without seeing any purifying progeny he though a husband of (lit. a friend to) many wives could not escape the fate brought into jeopardy by the formidable disease which baffled the efforts of skilful physicians, as a flame of a lamp cannot outlive the wind.

54. The ministers in company of the family-priest who had the knowledge of the last rite consigned him secretly to the flaming fire in the very garden of his palace under pretext of performing a ceremony for averting evil producing from the disease.

55. His legitimate queen whose signs of auspicious pregnancy were clearly seen on her body obtained the Royal Glory of the king with the help of those ministers who instantly convoked a gathering of the chief persons from amongst his subjects.

56. Her embryo (fœtus) being first heated by the hot water (tears) from her eyes conse-

C. He. with Chà. Va. and Su., एषु for एषः; D. पुत्रसाधने for पुत्रजन्मने. C. with Din. read अघशंसिनीः for अघशंकिनीः.

53. D. प्राप्य दीपः for न प्रदीपः.

54. C. D. E. H. with Va. Vijay. and Su., उपदिश्य for अपदिश्य.

55. D. पष्ट ° for दृष्ट °.

56. D, with Va. and Su., मुखोत्थितेन for मुखोज्झितेन; C. H. with Din. and

तं भावाय प्रसवसमयाकाङ्क्षिणीनां प्रजाना-
मन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना ।
मौलैः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा ॥ ५७ ॥

कुम्भानां मुखैर्धारैरुज्झितेन शिशिरेण शीतलेन वंशाभिषेकविधिना लक्षणयाभिषेकजलेन निर्वापित आ-प्यायितः ।

५७. प्रसवो गर्भविमोचनम् । फलं च विवक्षितम् । " स्यादुत्पाते फले पुष्पे प्रसवो गर्भमोचने " इत्य-मरः । तस्य यः समयस्तदाकाङ्क्षिणीनां भावाय भूतये । भावार्थमित्यर्थः । " भावो लीलाक्रियाचेष्टाभूत्य-भिप्रायजन्तुषु " इति यादवः । क्षितिरन्तर्गूढं नभोबीजमुष्टिमिव । श्रावणमास्युप्तं बीजमुष्टिं यथा धत्ते तद्व-दित्यर्थः । मुष्टिशब्दो द्विलिङ्गः । " अक्लीबौ मुष्टिमुस्तकौ " इति यादवः । अन्तर्गूढमन्तर्गतं तं गर्भं दधा-ना हेमसिंहासनस्थाव्याहताज्ञा राज्ञी मौलैर्मूले भवैर्मूलादागतैर्वा । आप्तैरित्यर्थः । स्थविरसचिवैर्वृद्धामात्यैः सार्धं भर्तू राज्यं विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । अर्हार्थे वतिप्रत्ययः । अशिषच्छास्ति स्म । " सर्ति-शास्त्यर्तिभ्यश्च " इति च्लेरङादेशः । " शास इदङ्हलोः " इतीकारः ।

इति श्रीपदवाक्य प्रमाणपारावारीणमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमा-ख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ श्रीरघुवंशे महाकाव्ये अग्निवर्णशृङ्गारो नामैकोनविंशः सर्गः॥

---

quent on the grief at the king's death in that lamentable condition was calmed by the cold water poured on her head from the mouths of the golden jars at the inaugural ceremony, in consonance with the propagation of his family.

57. Bearing the fœtus lying concealed in her womb, as the earth does the handful of seeds sown in its interior beds in the month of Srâva*n*a, for the prosperity of her subjects who were ardently waiting for the time of her delivery the queen seated as she was on a golden throne with her command never disputed ruled over the kingdom of her husband according to the rules laid down by the Sâstras with the assistance rendered her by the hereditary old ministers.

---

Chà., राज्याभिषेकपयसा, D. E. with Va. and Su., वंशाभिषेकपयसा, D2. & Vijay., स्नानाभिषेकविधिना for वंशाभिषेकविधिना.

57. A. तं भावार्थम्, C. E. H. with Va. Vijay. and Din., तं भूत्यर्थम्, D. and Su. सन्तानाय, D2. तं संतान° for तं भावाय; A. D. अन्तर्गर्भा for अन्तर्गूढं; B. H. with Va. Vijay. and Su., बभौ, C. ततो for नभो. D. with Va. and Su., मूलैः for मौलैः; D. स्वचिर° for स्थविर °; A. D. अवशात् for अशिषत् ; A. and Vijay., ° आज्ञेव गुर्वी D. with Va. and Su., ° अव्याहताख्या for ° अव्याहताज्ञा.

समाप्तोऽयं ग्रन्थः ।

शुभं भूयादध्येतुरध्यापकस्य च ।

# OPINIONS.

MADRAS.

*8th August 1885.*

To the notice that appeared in our paper last week of Mr.———'s edition of this Sanskrit classic, we take this opportunity to add a few words. Mr.——— seems to have spared no pains to make his edition thoroughly valuable both to the young Sanskrit student and to the advanced scholar. His English Translation is a very valuable adjunct, and it has the merit of being at once literal and yet a fair rendering of the original. Mr.———'s experience as a teacher of Sanskrit for a period extending over sixteen years qualifies him eminently for the task he has undertaken, which is best explained in his own words extracted below. + + + +

The Raghuvamsa, thus edited and enriched with commentaries, notes, translation, &c. should be a highly valuable boon to students and lovers of Sanskrit, and they one and all owe Mr.——— a debt immense of endless gratitude for the service he had rendered them. We therefore hope Mr.———'s present work will be largely patronised by the discerning public, and will be followed by others of a similar character. *People's Friend, Madras.*

*2nd August 1885.*

Another valuable addition has recently been made to the Indian Sanskrit library by Mr.—— Sanskrit tutor, New English School, Poona, in the publication of a comparatively correct version of the Raghuvamsa of Kalidasa with notes and English translation. The notes are copious and the translation is simple and literal. The famous Mallinath's commentary on the Raghuvamsa is given *in extenso* as also some valuable extracts from other commentators such as, for instance, of the renowned Hemadri, Charitravardhana, &c. Mr.———'s preface shows how anxious he was and how he laboured to make the work as complete as possible; and we are glad to note that therein he has wonderfully succeeded. The difficulties that are generally encountered by our University students in the correct understanding of this poem of Raghuvamsa, are made easy, and we have no doubt that they will easily overcome them with the help of Mr.———'s explanatory, grammatical and critical notes. The work is presented to the public in a neat goodly volume and the whole get up of it is admirable. Now-a-days the first text book read by all who begin the study of Sanscrit is the Raghuvamsa, and we confidently hope that Mr.———will soon reap the fruits of his labours by the rapid sale, which his work is sure to find and, we believe, that ere long a fresh edition of the work will have to issue to meet the demands for it, which, in course of time, will grow high as the students begin to appreciate the usefulness of the work. To University students, who take up Sanskrit as their optional language, we strongly recommend the work. The book besides is very moderately charged Rs .2-12-0. *The Hindu, Madras.*

*18th August 1885.*

Dear Sir—— I have received your edition of the Raghuvamsa, which fulfils its object very well. I have recommended it to my pupils, in whose hands I have already seen some copies. The Sanskrit notes and the English translation are very serviceable, and the price is rather low, so that even poorer students can buy it. I am now exceedingly busy and you will excuse my not entering further into details. Thanking you for your kindness,

I remain, Yours faithfully,
G. OPPERT, M. A., PH. D.,
Sanskrit Professor, *Presidency College, Madras.*

*25th August 1885.*

Dear Sir—— Many thanks to you for the copy of your edition of the Raghuvamsa and its commentary, which you were good enough to send me. You have collated different MSS. of the text and thus secured the most correct reading of the book. You have made the naturally lucid and ample commentary of Mallinath more useful and instructive by quoting, where necessary, passages from other commentaries, which had been hitherto inaccessible to the people and in utter oblivion. While scholars and learned men will be very glad to use your valuable edition you have made it equally useful to students reading in collges or studying privately by appending a good English translation of the text page by page. Above all the price is very cheap, being only Rs 2—12—0 per copy. I can therefore most gladly recommend the use of your excellent edition of the Raghuvamsa and its commentary in colleges and schools and for private studies.

I remain, Yours, &c.
M. SESHAGIRI SHASTRI, M. A.
Asst. Professor of Sanskrit, PRESIDENCY COLLEGE, MADRAS

*17th August 1885.*

Dear Sir—— I have much pleasure to testify to the faithfulness of the Translation of Raghuvamsa into English, the spirit of the author being clearly brought out. It will be a great boon conferred upon Sanskrit students, in particular those going up for the tniversity examinations.

G. ANNA SASTRI,
Sanskrit Pandit, Government College, Madura.

*27th April 1886.*

My dear Sir—— I have the pleasure to acknowledge the receipt of your letter of the 24th instant as also a copy of Raghuvamsa edited by you. Please accept my hearty thanks for your kind consideration in having sent me the book; You really give me too much cerdit for scholarship in Sanskrit when you ask me to give my opinion of your book but I may say this much that it is the best edition of the celebrated work of our Frince of poets that has yet come out from the press. Both to students and general readers alike, your edition is sure to prove exceedingly useful. I will not fail to recommend your book to any of my friends who wish to study Raghuvamsa. With best wishes I am Yours, sincerely and truly, With best wishes your truly.

R. GOVINDRAO, TANJORE.

CALCUTTA.

*19th August 1885.*

Dear Sir——— I received your edition of Raghuvamsa last night. You have taken a good deal of pains and collated a large number of commentaries, which are little known in this part of India. The extracts from these commentaries ought to receive every encouragement from every lover of Sanskrit. I wish they were fuller and more copious. The English translation will be of much use to all undergraduates who have to pass in the Raghuvamsa. The price is not high and I hope your edition will receive due support from the public.

ANANDORAM BOOROOAH,
Officiating Collector and Magistrate, NOAKHALY—BENGAL.

*2nd August 1885.*

Dear Sir——— I beg to acknowledge with thanks a copy of your new edition of the Raghuvamsa. I did not write to you earlier, as I wished to give an opinion after a careful examination. Having carefully gone through the text and notes and the translation, I can unhesitatingly say that it is the most satisfactory edition of the immortal work of Kalidasa that Ihave ever met with. The accuracy of the text is all that can be desired; the addition of extracts from commentators other than Mallinath, makes the commentary one of unique value; the translation will be of great value to private students; while the marvellous cheapness of the work must bring it within the reach of the po o rest students. I earnestly hope that your edition will have a rapid sale which it certainly deserves.

Yours truly,
RAM COOMAR CHAKRAVARTI,
Senior Professor of Sanskrit, LONDON MISSION INSTITUTION, BHOWANIPORE.
CALCUTTA.

*23rd August 1885.*

Sir—— I have gone over your edition of Kalidasa's Raghuvamsa and am of opinion that it would certainly be a useful book to the students of High Schools and Colleges. The translation of the Sanskrit text into English has been accurate and the edition neatly and correctly printed.

Yours truly,
RAJKRISHNA BANERJEA,
Late Professor of Sanskrit in the Presidency College, CALCUTTA.

*20th July 1885.*

Sir—— I have duly received your kind present of a copy of your edition of the Raghuvamsa with the commentary of Mallinath and an English translation, and beg to thank you for the same. The work has been repeatedly published on this side of India with a translation. I have no doubt your edition will prove very useful to the school-going-population of the Western Presidency.

I remain, Yours faithfully,
DR. RAJENDRALAL MITRA, CALCUTTA.

*14th August 1885.*

Dear Sir— I have looked through your edition of the Raghuvamsa. It is eminently adapted for the use of Anglo- Sanskrit students of our colleges and schools, containing as it does the correct text of the poet; the excellent commentary of Mallinath intermixed with useful extracts from the annotations of several other expositors elucidating the text; and an English transla-

tion which so far as I can judge is both readable and faithful. The value of your publication is enhanced by its cheapness and I am sure it will command a large sale.

Yours truly,
ADITYARAMA BHATTACHARYA,
Professor of Sanskrit, MUIR'S CENTRAL COLLEGE, ALLAHABAD.

*15th August 1885.*

Dear Sir— I am in receipt of your post card of the 6th instant. You asked me to give you my opinion on your Raghuvamsa, let me thank you for the compliment. Yours is undoubtedly the best edition of Raghuvamsa. The extracts give much new useful information; the explanations in circular brackets, which I presume are your own, are not less valuable to beginners. The literal translation appended will not fail to increase the usefulness of the book in our schools and colleges.

Yours faithfully,
K. K. LELE, INDORE, MADRESSA.

BOMBAY.

*21st September 1885.*

Dear Sir— I am very sorry that in consequence of pressure of work I have been unable to thank you till now for the copy of your edition of the Raghuvamsa which you were good enough to send me some weeks ago, or to communicate to you as desired my opinion upon that edition. I am afraid I have not even now been able to read a sufficient portion of the book to be able to pronounce an opinion upon it, with much satisfaction to myself. But as you appear to want my opinion soon and as there is not much likelihood of my being able to read much more of the book within any short period of time I think it desirable to write to you at once.

First as to the commentaries, so far as, I have looked at the extracts given by you from commentaries other than Mallinath's, I have been much interested by them, having met with them now for the first time.

Upon the whole I thought that the selections were well made, and what you have said about Hemadri particularly in your Preface makes me wish to take some opportunity of seeing his commentary in full. * * * Upon the whole I like the translation, which I hope will be of use to students in understanding the text.

I must now close. I think, taking the book as a whole, that it is well done and calculated to accomplish fairly the object for which it is designed The Sanskrit commentary is by reason of the additions made to it more valuable than the one hitherto in print and the translation is satisfactorily done. I can say nothing ebout the Various Readings which I have not examined. But they indicate careful work, and are doubtless as well done as the rest of the volume.

Yours faithfully,
K. T. TELANG, M. A, LL. B.

*20th August.* 1885.

In his edition of the Raghuvamsa Mr.———gives Mallinatha's commentary on the poem as well as extracts from eight other commentaries. These extracts contain additional matter and also such interpretations of the original as differ from those of Mallinath. The editor also gives various readings of the text of the Raghuvamsa gathered from nine manuscripts collated by him. I am, therefore, of opinion that this edition is very valuable and will be of great use for a critical study of the Raghuvamsa.

R. G. BHANDARKAR, M. A. PH. D.
Professor of Oriental Languages, DECCAN COLLEGE.

*31st July 1885.*

Dear Sir—— I beg to certify that I have read carefully two Sargas from your edition of the Raghuvamsa, and they have been found, I am happy to say, very carefully edited. You seem to have exercised good judgment in selecting quotations from the other commentators. I would however, have preferred editing with the full text of one of these commentaries, say either Hemadri's or Charitravardhan's. Mallinatha's tika has already been given to us by Mr. S. P. Pandit. However, as it is, I find your book is of very great use to any student of the Raghuvamsa, both in and out of our colleges. In some cases your quotations are absolutely invaluable in settling the text of doubtful passages. I shall make it a point of recommending to my pupils your edition as most valuable.

Yours sincerely,
SHRIDHAR GANESH JINSIVALE, M. A.
Proffessor of Sanskrit, WILSON'S COLLEGE, Bombay.

*1st September 1885.*

Dear Sir— I have read portions of your Raghuvamsa here and there and I am glad to say that the impression they have left on my mind is, on the whole, very favourable. I doubt not that your work will render great help to students of Sanskrit in high schools and the junior classes in colleges. I think that most of the extracts from other commentaries which you have purposely taken labour to introduce into the commentary of Mallinath are chosen with judgment, and your English translation of the poem is simple and correct. Lastly I am glad to notice that considering the big size of tha work its price is extremely moderate.

Yours truly,
RAVAJI SHASTRI GODBOLE,
The Marathi Translator, *Poona.*

*18th July 1885.*

Dear Sir— Your edition of the Raghuvamsa supplies a long fell want. Translation into English is very good because it is literal and idiomatic.

Yours truly,
A R. ATRE, B. A.
Head Master, MIRAZ HIGH SCHOOL.

स्वस्ति श्रीमत्सु विद्वद्वरनन्दर्गिकरोपनामकगोपालरायशर्ममहोदयेषु ।

सादरमेतद्बोधयति । यदेषु दिवसेष्वशेषकविकुलालंकारभूतस्य महाकवेः श्रीकालिदासस्य कविता सर्वैः प्राचीनार्वाचीनैः परीक्षकैः काव्यशिरशेखरत्वेनाङ्गीकृतात्यर्थं श्रवणगोचरीभूता सती—

किं कवेस्तेन काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥

एतत्पद्योक्तमर्थमनुभावयन्ती पठनपाठनादिप्रचारविषयीक्रियते । तत्रापि विद्वन्मल्लिनाथमहाशयरचितया यथार्थनाम्न्या संजीविन्याख्यया व्याख्ययोपेतोऽयं रघुवंशः प्रथममेव पिपठिषुभिरुपयोगं नीयमानः पठनादिषु श्रीमद्भिस्तेषु तेषु मल्लिनाथानुद्घाटिताशयेषु स्थलेषु हेमाद्र्यादिविविधव्याख्यापूरणेन कुत्र कुत्रचित्त स्वयमेव प्रसिद्धैः पदैः कृतेन विवरणेन चात्यंतं सुपरिष्कृत्य मुद्रितोऽतिस्वल्पमूल्येन च ग्राहकेभ्यो वितीर्ण इत्यनेन भविता महाल्लोकोपकारः ।

श्रूयते चाधस्तात्प्रदत्तांग्लभाषानुवादोऽपि यथायथमाशयप्रकाशक इत्येतदपि तज्ज्ञानां छात्राणां महते उपकारायैव ।

गच्छतः स्खलनमिति न्यायेन चेत्क्वचिदपि स्खलनमथाप्यंतन्नैव दोषाय, आशासे च द्वितीयसंस्करणसमये भवेयुश्च तं सुसंशोधिता दोषाः ।

सर्वथा चायं श्रीमतां प्रयासोत्यंतमेव लोकोपकाराय सहृदयहृदयानां हर्षप्रकर्षं प्रदानायैवेति । शम् ।

शके १८०८ आषाढ वद्य ९ रवौ

भवदीयो
गोविंदशास्त्री भारद्वाजः पुण्यपत्तने दक्षिणविद्यालये.

श्रीगीर्वाणभाषापरिशीलनशालिनः संस्कृताध्यापकनन्दर्गिकरोपाह्वयगोपालरायान् शुभादर्शाभिराशीर्भिरभिनंद्य वक्ष्यामि । भारतवर्षीयाणां द्वीपांतरनिवासिनां च विदुषां महोपयोगाय भवद्भिर्महीयसा प्रयत्नेन दुःसंपाद्यान्यपि चारित्रवर्धनहेमाद्र्यादि कतिपयव्याख्यानानि श्रीमद्विद्वद्भूषणभाण्डारकरोपाह्वयरामकृष्णपण्डितप्रभृतिभ्यो विद्वत्तमेभ्यः संपाद्य तत्सारभूतैरंशैः सह मुद्रितस्य मह्यं समर्पितस्य श्रीमहाकविकालिदासनिर्मितस्य रघ्वन्ववायस्य समवलोकनेन स्वीयस्वान्ते मुहुर्मुहुः प्रमोदमानः परितुष्टोऽस्मीत्यलं बहुना ।

भवदीयाः
गोडबोले इत्युपाह्वयनारायणशास्त्रिणः

## OPINIONS ON

## गद्यपद्यतरंगिणी.

*15th October 1888.*

The गद्यपद्यतरंगिणी of Mr.——— which he was so kind as to send me a copy of through you and perhaps at your suggestion I have received. I shall send the price of the book soon. Through laziness or through want of time I could not go through the book but I have gone over it. The pieces are well-selected. He has given to the student a variety of passages from

**different authors, representing almost all the departments of the Sanskrit literature which wil enable him to dip deeper into it. That is what I can say about the book at present.**

Yours faithfully,
HARI BHIKAJI KARMARKAR, B. A.
RAJARAM HIGH SCHOOL, KOLHAPORE.
*4th October 1888.*

Dear Sir— Very glad to acknowledge the receipt of your book **गद्यपद्यतरंगिणी** through Mr. Shende. The delay in writing to you was caused by my business in school and college examinations at this time. I read the book and I think the pieces selected are very beautiful and quite appropriate for the purpose intended. The notes and the meanings of words too give a very good aid to a student; and the general knowledge about the poets generally read given in the introduction is I think useful even to college students. In short I quite approve of the plan of the book and shall try as much as I can to manage next year that the boys preparing for the Entrance Examination shall read it carefully before they appear for the examination.

Though it is very rarely that we have even conversed with each other I hope that this accidental letter--acquaintance so to speak will be perpetuated.

Yours sincerely,
HARI MAHADEV BHADKAMKAR, B. A.
Sanskrit Reader, HIGH SCHOOL AND COLLEGE, BARODA.
*7th October 1888.*

Dear Sir— I received your note of 20th ultimo as well as a copy of your **गद्यपद्यतरंगिणी.** Your attempt is laudable and you have removed one desideratum. Almost all the books in Sanskrit, except philosophical ones, abound in amorous verses which are not fit for being taught in schools. Your book meets this longfelt want. I think the Director of Public Instruction will very gladly patronise your book.

Yours faithfully,
G. B. MODAK, B. A.
Head Master, THANA HIGH SCHOOL.
*20th September 1888.*

Dear sir——— I received your letter of the 25th ultimo as well as the copy of your **गद्यपद्यतरंगिणी** that accompanied it. I am much obliged to you for your kindness. It would be difficult to do full justice to the book unless it is actually taught. Nevertheless I have looked at it here and there and I am decidedly of opinion that it is a work of great merit and is very well calculated to be of great use to students preparing for the Matriculation in Sanskrit. It must have cost you great labour and research. Hoping you are doing well and wishing you every success, I remain,

Yours sincerely,
D. R. TARKHADKAR,
Head Master, NASIK HIGH SCHOOL.
*10th October 1888.*

Dear sir—— I received your compilation. I have gone through it carefully and the following is my opinion about its merits. The extracts are chosen with great care and are arranged in a graduated series. The Sanskrit gloss and English notes are copious though not close. The passages culled in extend over a large portion of the rich Sanskrit literature. The preface is very valuable and affords a fund of general information to advanced students and general readers. The book is in every way useful and suited to the capacities of the candidates studying the Matriculation standard. Many of the first Tarangas are suitable to the students under standard sixth.

I remain, Yours truly,
HARI RAMACHANDRA ROHENKHEDKAR, B. A.
First Assistant, AKOLA HIGH SCHOOL.
*22nd December 1888*

Dear Sir—— I have to thank you for the present you so kindly made of a copy of your **गद्यपद्यतरंगिणी** and to observe that it certainly supplies a good Sanskrit Reading Book to the Matriculation class. The notes appear to be prepared with care and will I doubt not be found very useful to pupils and teachers.

I am, Yours truly,
R. B. TALVALKAR, B. A.
Head Master, AMRAWATI HIGH SCHOOL.

## गोपाळ नारायण कंपनीच्या दुकानांत संस्कृत पुस्तकें विक्रीस तयार.

| | रु. | आ. |
|---|---|---|
| हठयोगप्रदीपिका सटीक | २ | ८ |
| श्रीकृष्णजन्मखंड | ३ | ८ |
| बृहज्जातक सटीक | २ | ० |
| वीरसिंहावलोकन | १ | १२ |
| शङ्करानंदी गीता | ५ | ० |
| सतोपाख्यानरामायण | १ | ८ |
| महाशिवपुराणं सटीकम् | १६ | ० |
| हरिवंशसटीकम् | ६ | ० |
| श्रीमद्भागवतं विजयध्वजी | १० | ० |
| आनन्दरामायणम् | ५ | ० |
| श्रीमद्भागवतं गुटकात्मक | ३ | ८ |
| गरुडपुराणं (प्रेतकल्पः) सटी० | १ | ० |
| स्तोत्ररत्नाकर | १ | ० |
| सिद्धान्तकौमुदी | २ | ८ |
| क्रियापदप्रकाशः | ० | १२ |
| ऋग्वेदी ब्रह्मकर्म | ३ | ८ |
| हिरण्यकेशी ब्रह्मकर्म | ४ | ० |
| रामाश्वमेध | २ | ८ |
| जैमिनीकृतअश्वमेध | २ | ० |
| व्रतराज टिप्पणीसहित | ५ | ० |
| कुवलायनन्द सटीक | १ | ८ |
| दशकुमारचरित्र | १ | ८ |
| पञ्चदशी सटीक | ३ | ० |
| हनुमन्नाटक | १ | ० |
| योगवासिष्ठ संस्कृत सटीक | २५ | ० |
| अध्यात्मरामायण सटीक | २ | ० |
| श्रीवेङ्कटेशमाहात्म्य | ५ | ० |
| अध्यात्मरामायण गुटका | ० | १२ |
| कुमारसम्भव | २ | ० |
| मध्वविजयमूळ | ० | १२ |
| भोजचम्पू | १ | ० |
| अमरकोश मूळ | ० | ८ |
| मध्वविजय सटीक | ५ | ० |
| बौधायन स[illegible]निर्णय प्रयोगमाला | ८ | ० |
| मार्कंडेय पुराण | ५ | ० |
| अनुभूतिप्रकाश | २ | ४ |
| अमरकोश (रामाश्रमी टीका) | ५ | ० |
| बाणकृत कादंबरी सटीक | ५ | ० |
| ऋग्वेद सायणाचार्यकृतभाष्यासहित | ५० | ० |
| सत्यगणपतिव्रतकथा | ० | ४ |
| किरातार्जुनीय काव्य | २ | ० |
| माहाभारत सटीक | ४० | ० |
| मनुस्मृति सटीक | २ | ० |
| गीता मधुसुदनी टीका | ४ | ० |
| गीतामृततरङ्गीणी भाषाटीका | १ | ४ |

| | रु. | आ. |
|---|---|---|
| चातुर्मासमाहात्म्य | ० | ८ |
| सिद्धांतचंद्रिका सटीक | ४ | ० |
| बृहज्ज्योतिषार्णव सटीक | ७ | ० |
| सर्वार्थचिंतामणि | ० | १२ |
| भोजप्रबंध | ० | ८ |
| शाकुन्तल नाटक सटीक | १ | ४ |
| पञ्चरत्नीगीता | ० | ७ |
| लघुकौमुदी | ० | ६ |
| हितोपदेश | ० | ८ |
| रत्नावली नाटक | ० | ६ |
| नलचम्पू सटीक | २ | ० |
| रघुवंश सटीक | १ | ० |
| तर्कसङ्ग्रह | ० | ६ |
| अष्टाध्यायी सूत्रपाठ | ० | ५ |
| प्रियदर्शिका | ० | ८ |
| शारीरक (शाङ्करभाष्य) रत्नप्रभाटीका | १० | ० |
| ऋतुसंहार काव्य | ० | ४ |
| गीता श्रीधरीटीका | १ | ४ |
| साम्बपुराण | २ | ० |
| गर्गसंहिता | ४ | ० |
| एकादशीमाहात्म्य | ० | १० |
| संस्कार भास्कर | ३ | ० |
| सारस्वत सटीक प्रसादटीका | १ | ० |
| मुहूर्त्तचिन्तामणि प्रमिताक्षरा | १ | ८ |
| गीतगोविन्द सटीक | १ | ० |
| चिकित्साक्रमकल्पवल्ली | ३ | ० |
| भामिनीविलास सटीक | १ | ४ |
| कथासरित्सागर | ६ | ० |
| देवीभागवत | ७ | ० |
| ऋग्वेदसंहीता | ४ | ० |
| कृष्णयजुर्वेद संहीता | ३ | ० |
| पंचोपनीषद | ० | १२ |
| भर्तृहरीशतके | ० | १२ |
| तैतरय ब्राह्मण | २ | ८ |
| शांतीसार | १ | ८ |
| गायत्रीपुरश्चरण | ० | ४ |
| याज्ञवल्क्यस्मृती मिताक्षरासहीत | ३ | ० |
| धर्मसींधु | ३ | ० |
| भट्टीकाव्य | ३ | ० |
| नीर्णयसींधु | ३ | ८ |
| अनर्घराघव नाटक सटीक | २ | ० |
| सयाद्रीखंड | ४ | ० |
| सुभाषीत रत्नभांडागारम् | ३ | ८ |
| छल्लारि | १ | १२ |
| महाभारततात्पर्यनीर्णयसटीक | ६ | ० |

